दभाजः श्रुतस्य ग्रहणे नष्टदृष्टेस्तल्लाभतुष्टिदृष्टान्तेनांगीकरणे तस्मात् कारणात्प्रवर्त्तितव्यम्, इह यत्ने विधेयतया उप-
दिष्टे, प्रथममादौ। यतः, "पढमं णाणं तओ दया एवं चिट्ठइ सव्वसंजए। अण्णाणी किं काही किं वा णाही छेयपावगं?
॥ १ ॥ सोच्चा जाणइ कल्लाणं सोच्चा जाणइ पावगं। उभयंपि जाणई सोच्चा जं छेयं तं समायरे ॥ २ ॥" ॥ १९ ॥
तच्च सूत्रग्रहणं विनयादिगुणवतैव शिष्येण क्रियमाणमभीप्सितफलं स्यान्नान्यथेति समयसिद्धदृष्टान्तेन स्पष्टयन्नाह;—

**देवीदोहल एगत्थंभप्पासाय अभयवणगमणं। रुक्खुवलद्धहिवासण वंतरतोसे सुपासाओ ॥ २० ॥**

कथानकसंग्रहगाथासप्तकम्। रायगिहम्मि य नयरे राया नामेण सेणिओ आसि । सम्मत्तथिरत्तपहिट्ठसक्कविप्फारि-
यपसंसो ॥ १ ॥ सयलंतेउरपवरा देवी नामेण चेल्लणा तस्स । चउविहबुद्धिसमेओ मंती पुत्तो य अभओ त्ति ॥ २ ॥
एगम्मि य पत्थावे देवीए जायदोहलाइ निवो। भणिओ पासायं मे एगक्खंभं करावेह ॥ ३ ॥ दुन्निग्गहेण इत्थीगहेण
संताविएण नरवइणा। पडिवण्णं तव्वयणं अभयकुमारो य आइट्ठो ॥ ४ ॥ तो वड्ढइणा समगं थंभनिमित्तं महाडवीइ
गओ। दिट्ठो तेहिं च रुक्खो सुसणिद्धो अइमहासाहो ॥ ५ ॥ साहिट्ठिओ सुरेणं होहि त्ति विचित्तकुसुमधूवेहिं। अहि-
वासिओ स साही कओववासेण अभएण ॥ ६ ॥ अह बुद्धिरंजिएणं तरुवासिसुरेण निसि पसुत्तस्स। सिट्ठं अभयस्स
महाणुभाव! मा छिंदिहिसि एयं ॥ ७ ॥ वच्चसु सगिहम्मि तुमं काहमहमेगखंभपासायं। सव्वोउयतरुफलफुल्लमणहरारा-
मपरिकलियं ॥ ८ ॥ इय पडिसिद्धो अभओ वड्ढइणा सह गओ सगेहम्मि। देवेणवि णिम्मविओ आरामसमेयपासाओ
॥ ९ ॥ तम्मि य देवीइ समं विचित्तकीलाहिं कीलमाणस्स। रइसागरावगाढस्स राइणो जंति दियहाइं ॥ १० ॥ अह

तन्नयरनिवासिस्स पाणवइणो कयाइ गब्भवसा । भज्जाइ समुप्पन्नो दोहलओ अंबयफलस्स ॥ ११ ॥ तो तम्मि अपुज्जंते पइदियहं खिज्जमाणसव्वंगिं । तं दट्ठूणं पुट्ठं तेण, पिए! कारणं किमिह? ॥ १२ ॥ परिपक्कंबयफलदोहलो य तीए विवेइओ ताहे । पाणाहिवेण भणियं चूयफलाणं अकालोऽयं ॥ १३ ॥ जइवि हु, तहावि कत्तोवि सुयणु, संपाडिमो थिरा होसु । निसुओ,य तेण रन्नो सव्वोउयफलदुमारामो ॥ १४ ॥ तं चारामं बाहिं ठिएण पेहंतएण पक्कफलो । दिट्ठो अंबयसाही ताहे जायाइ रयणीए ॥ १५ ॥ ओणामणीइ विज्जाइ साहिमोणामिऊण गहियाइं । अंबयफलाइं पुणरवि पच्चोणामिणिसुविज्जाए ॥ १६ ॥ साहं विसज्जिऊणं समप्पियाइं पियाइ हिट्ठेण । पडिपुन्नदोहला सा गब्भं वोढुं समाढत्ता ॥ १७ ॥ अह अवरावरतरुवरपलोयणं राइणा कुणंतेणं । पुव्वदिणदिट्ठफलपडलवियलमवलोइउं चूयं ॥ १८ ॥ भणिया रक्खगपुरिसा रे केणाऽसो विलुत्तफलभारो । विहिओ त्ति, तेहिं भणियं देव! न तावेत्थ परपुरिसो ॥ १९ ॥ नूण पविट्ठो न य नीहरंतपविसंतयस्स य पयाणि । कस्सवि दीसंति महीयलम्मि ता देव चोज्जमिणं ॥ २० ॥ जस्सामाणुससामत्थमेरिसं तस्स किं पकरणिज्जं । नत्थि त्ति य चिंतंतेण राइणा सिट्ठमभयस्स ॥ २१ ॥ एवंविहत्थकरणक्खमं लहुं लहसु पुत्त! चोरं ति । जह हरियाइं फलाइं तहण्णया दारमवि हरिही ॥ २२ ॥ भूमीयलनिहियसिरो महापसाउ त्ति जंपिओ अभओ । तियचच्चरेसु चोरं निरूविउं वाढमाढत्तो ॥ २३ ॥ वोलीणाइं कइवयदिणाइं पत्ता न तप्पउत्तीवि । चिंतावाउलचित्तो ताहे अभओ दढं जाओ ॥ २४ ॥ पारद्धमहिंदमहे नडेण नयरीइ बाहि पेच्छणयं । मिलिओ पउरनरगणो अ-

भएणवि तत्थ गंतूणं ॥ २५ ॥ भावोवलक्खणट्ठं पयंपियं, भो जणा! निसामेह । जाव नडो नागच्छइ ताव मम कहा-
णगं एगं ॥ २६ ॥ तेहिं पयंपियं नाह! कहह, कहं तो कहेउमारद्धो । नयरम्मि वसंतपुरे आसि सुया जुण्णसेट्ठिस्स
॥ २७ ॥ दारिद्दविद्दुयत्तेण नेव परिणाविया य सा पिउणा । वड्डुकुमारी जाया वरत्थिणी पूयए मयणं ॥ २८ ॥ आरा-
माओ सा चोरिऊण कुसुमुच्चयं करेमाणी । पत्ता मालायारेण जंपियं किंपि सवियारं ॥ २९ ॥ तीए वुत्तं किं तुज्झ भ-
गिणिधूयाउ मह सरिच्छाओ । नेवत्थि जं कुमारिंपि मं तुमं एवमुल्लवसि ? ॥ ३० ॥ संलत्तं तेण, तुमं उव्वूढा भत्तुणा अ-
भुत्ता य। एसि समीवे जइ मे मुंचामी अन्नहा नेव ॥ ३१॥ एवं ति पडिसुणित्ता गया गिहं सा, कयाइ तुट्ठेण। मयणेणं
से दिण्णो मंतिस्स सुओ वरो पवरो ॥ ३२ ॥ सुपसत्थे हत्थग्गहजोग्गे लग्गम्मि तेण उव्वूढा । एत्थंतरम्मि अत्थगिरि-
मुवगयं भाणुणो बिंबं ॥ ३३ ॥ कज्जलभसलच्छाया वियंभिया दिसिसु तिमिररिंछोली । हयकुमुयसंडजड्डुं समुग्गयं मं-
डलं ससिणो ॥ ३४ ॥ अह सा विचित्तमणिमयभूसणसोहंतकंतसव्वंगी। वासभवणम्मि पत्ता भत्ता एवं च विण्णत्तो ॥३५॥
तवेलुव्वूढाए आगंतव्वं ति मालियस्स मए । पडिवन्नमासि पिययम! ता जामि तहिं विसज्जेसु ॥ ३६ ॥ सच्चपइण्णा एस
त्ति मण्णमाणेण तेणऽणुन्नाया । वच्चंती परिहियपवरभूसणा सा पुराउ बहिं ॥ ३७ ॥ दिट्ठा चोरेहिं, तओ महानिही सो
इमो त्ति भणिरेहिं । गहिया नवरं तीए निवेइओ निययसब्भावो ॥ ३८ ॥ चोरेहिं जंपियं सुयणु जाहि सिग्घं परं वलि-
ज्जाहि। मुसिऊणं जेण तुमं जहागयं पडिनियत्तामो ॥ ३९ ॥ एवं काहंति पयंपिऊण संपट्ठिया अहद्धपहे । तरलतर-
तारयाउलसमुच्छलंतच्छिविच्छोहो ॥ ४० ॥ रणझणिरदीहदंतो दूरपसारियरउद्दमुहकुहरो । चिरछुहिएणं लद्धा सि एहि

एहि त्ति जंपंतो ॥ ४१ ॥ अच्चंतभीसणंगो समुट्ठिओ रक्खसो सुदुप्पेच्छो । तेणावि करे धरिया कहिओ तीए य स-
ब्भावो ॥ ४२ ॥ पम्मुक्का, आरामे गंतूणं बोहिओ सुहपसुत्तो । मालागारो भणिओ य सुयणु! सा हं इहं पत्ता ॥ ४३ ॥
एवंविहरयणीए सभूसणा कह समागया तं सि । इय तेणं सा पुट्ठा सिट्ठं तीए य जहवित्तं ॥ ४४ ॥ अव्वो सच्चपइण्णा
महासईम त्ति भावमाणेण । चलणेसु निवडिऊणं मालागारेण तो मुक्का ॥ ४५ ॥ पत्ता रक्खसपासे सिट्ठो से मालियस्स
वुत्तंतो । अव्वो महप्पभावा एसा, जा उज्झिया तेण ॥ ४६ ॥ इइ भाविंतेणं निवडिऊण पाएसु तेणवि विमुक्का । चोर-
समीवे य गया सिट्ठो तह पुव्ववुत्तंतो ॥ ४७ ॥ तेहिं वि अणप्पमाहप्पदंसणुप्पन्नपक्खवाएहिं। सालंकारच्चिय वंदिऊण स-
गिहम्मि पट्ठविया ॥ ४८ ॥ अह आभरणसमेया अक्खयदेहा अभग्गसीला य । पत्ता पइस्स पासे कहियं सव्वं जहावित्तं
॥ ४९ ॥ परितुट्ठमणेण समं तेण पसुत्ता समत्थरयणिंपि । जाए पभायसमए चिंतियमिय मंतिपुत्तेण ॥ ५० ॥ छंदट्ठियं
सुरूवं समसुहदुक्खं अणिग्गयरहस्सं । धण्णा सुत्तविबुद्धा मित्तं महिलं च पेच्छंति ॥ ५१ ॥ इय भावेंतेण कया घरस्स सा
सामिणी समग्गस्स । किं व न कीरइ निक्कवडपेम्मपडिबद्धहिययम्मि? ॥ ५२ ॥ इय पइतक्कररक्खसमालागाराण म-
ज्झओ केणं । तच्चागेणं कय दुक्करं ति भो मज्झ साहेह? ॥ ५३ ॥ ईसालुएहिं भणियं सामी! पइणा सुदुक्करं विहियं ।
परपुरिससमीवे जेण पेसिया सव्वरीइ पिया ॥ ५४ ॥ भणियं छुहालुएहिं सुदुक्करं चेव रक्खसेण कयं । जेण च्चिरं छुहि-
एण वि न भक्खिया भक्खणिज्जावि ॥ ५५ ॥ अह पारदारिएहिं पयंपियं देव! मालिओ एक्को । दुक्करकारी जेणं चत्ता
सा निसि सयं पत्ता ॥ ५६ ॥ पाणेण जंपियं होउ ताव चोरेहिं दुक्करं विहियं । पइरिक्केवि विमुक्का ससुवन्ना जेहिं सा

तइया ॥ ५७ ॥ एवं वुत्ते चोरो त्ति निच्छिओ सोऽभएण मायंगो । गिण्हाविऊण पुट्ठो कहमारामो विलुत्तो त्ति ॥ ५८ ॥ तेणं पयंपियं नाह! नवरं विज्जाबलेण नियएण । कहिओ य वइयरो सेणियस्स एसो समग्गोवि ॥ ५९॥ रण्णावि संसियं देइ मज्झ जइ कहवि निययविज्जाओ । सो पाणो तो मुंचह इहरा से हरह जीयं ति ॥ ६० ॥ पडिवन्नं पाणेणं विज्जादाणंपि, अह महीनाहो । सीहासणे निसन्नो विज्जाए पढिउमाढत्तो ॥ ६१ ॥ पुणरुत्तपयत्तुक्कित्तियावि रण्णो न ठंति जा विज्जा । सो ता तज्जइ रुट्ठो न रे तुमं देसि सम्मं ति ॥ ६२ ॥ अभएण भणियमिह देव! नत्थि एयस्स थेवमवि दोसो । विणयगहियाउ विज्जाउ ठंति फलदा[1] य जायंति ॥ ६३ ॥ ता पाणमिमं सीहासणम्मि ठविऊण सयमवि महीए । होऊण विणयसारं पढसु जहा ठंति इण्हिंपि ॥ ६४ ॥ तह चेव कयं रण्णा संकंताओ लहुं च विज्जाओ । सक्कारिऊण मुक्को पाणो अच्चंतपणइ व्व ॥ ६५ ॥ इय जइ इहलोइयतुच्छकज्जविज्जावि भावसारेण । पाविज्जइ हीणस्सवि गुरुणो अच्चंतविणएण ॥६६॥ ता कह समत्थमणवंछियत्थदाणक्खमाए विज्जाए। जिणभणियाए दाईण विणयविमुहो बुहो होज्जा? ॥६७॥ इति॥

अथ संग्रहगाथाक्षरार्थः—'देवीदोहल'त्ति देव्याश्चेल्लनाभिधानायाः कश्चित् समये दोहदः समपादि । 'एगत्थंभप्पासाय'त्ति एकस्तम्भप्रासादक्रीडनाभिलाषरूपाः। ततो राजादिष्टस्य—'अभय'त्ति अभयकुमारस्य—वनगमनं महाटवीप्रवेशः समजायत । तत्र च 'रुक्खुवलद्धहिवासण'त्ति विशिष्टवृक्षोपलब्धिरधिवासना च वृक्षस्यैव । ततो 'वंतरतोसे'त्ति तदधिष्ठायकव्यन्तरेण तोषे समुत्पन्ने सति सुप्रासादो व्यधीयत ॥ २० ॥

1 क 'फलदाउ'।

**उउसमवाए अंवग अकालदोहलग पाणपत्तीए । विज्जाहरणं रण्णा दिट्ठे कोवोऽभयाणत्ती ॥ २१ ॥**

तस्य च प्रासादस्य चतसृष्वपि दिक्ष्वारामे पण्णामृतूनां वसन्तग्रीष्मप्रावृट्शरद्धेमन्तशिशिरलक्षणानां समवायो मी-लनं नित्यमेवाभवद् व्यंतरानुभावादेव । एवं च प्रयाति काले कदाचित् 'अंवग'त्ति आम्रफलेष्वकाले आम्रफलोत्पत्त्य-नवसरे दोहदकः पाणपत्न्याश्चण्डालकलत्रस्य समुदभूत् । ततो विद्यया आहरणमादानमक्रियत चूतफलानां चण्डालेन तत्रारामे । तदनु राज्ञा श्रेणिकेन दृष्टे फलविकलैकशाखे चूतशाखिनि विलोकिते सति कोपः कृतः । अथाभयस्याज्ञप्तिः चोरगवेषणगोचरा आज्ञा वितीर्णा ॥ २१ ॥

**चोरनिरूवण इंदमह लोगनियरम्मि अप्पणा ठिअओ । चोरस्स कए नट्टिय वड्डुकुमारिं परिकहिंसु**

ततश्चोरनिरूपणे प्रक्रान्ते सति इन्द्रमहे समायाते लोकनिकरे जनसमूहमध्ये आत्मना स्वयं स्थितक ऊर्ध्वस्थित एव चोरस्य कृते चोरोपलम्भनिमित्तं 'नट्टिय' त्ति नाट्येन नटने प्रस्तुते सति 'वड्डुकुमारिं'त्ति वृहत्कुमारिकाख्यायिकां पर्यकथ-यद् निवेदितवानभयकुमारः ॥ २२ ॥

कथमित्याह;—

**काइ कुमारी पइदेवयत्थमारामकुसुमगहमोक्खो । नवपरिणीयब्भुवगम पइकहण–विसज्जणा गमणं**

काचित् कुमारी स्त्री 'पइदेवयत्थं'इति पत्युः कृते देवतापूजानिमित्तं 'आरामकुसुम'त्ति आरामे मालाकारस्य संव-

न्धिनि कुसुमान्यवचिन्वाना 'गहमोक्खो'त्ति मालाकारेण कदाचिद् गृहीता, ततो मोक्षो मोचनं कृतं तस्या एव। 'नवपरिणीयब्भुवगम'त्ति नवपरिणीतया त्वया प्रथमत एव मत्समीपे समागन्तव्यमित्यभ्युपगमे कृते सति बृहत्कुमार्या, 'पइकहणविसज्जणागमणं'ति ततः कालेन तया परिणीतया पत्युर्यथावस्थितवस्तुकथनमकारि। तेनापि विसर्जनं व्यधायि तस्याः। तदनु गमनं मालाकारसमीपे तया प्रारब्धम् ॥ २३ ॥

तेणगरक्खसदंसण कहण मुयणमेव मालगारेण । अक्खयपच्चागय दुक्करम्मि पुच्छाइ नियभावो २४

मार्गे च गच्छन्त्यास्तस्याः स्तेनानां चौराणां राक्षसस्य च दर्शनं संजातम्। 'कहण'त्ति तयापि तेषां तस्य च यथावद्वस्तुतत्त्वकथनं कृतम्। ततो 'मुयणं'इति चौरै राक्षसेन च तस्या मोचनमधिष्ठितम्। 'एवमालगारेण'त्ति मालाकारेणापि निवेदिते प्राच्यवृत्तान्ते मुक्ता इत्यर्थः। तत अक्षता मालाकारेणाप्रतिस्खलिता स्फटिकोपलोज्ज्वलशीला राक्षसेनाभक्षिता चौरैरविलुप्ता च सती प्रत्यागता प्रत्युः पार्श्वे। ततः 'दुक्करम्मि पुच्छाइ नियभावो'त्ति केन तेषां मध्ये दुष्करमाचरितमिति पृच्छायां कृतायामभयकुमारेण, सर्वैः सामाजिकजनैर्निजभावः स्वाभिप्रायः प्रकाशितः ॥ २४ ॥

ईसालुगाइणाणं चोरग्गह पुच्छ विज्ज कहणाओ । दंडो तद्दाणासणभूमी पाणस्सऽपरिणामो ॥ २५ ॥

ईर्ष्यालुकादीनां ईर्ष्यालुकभक्षकचौराणां ज्ञानं संपन्नमभयकुमारमहामन्त्रिणः। ततश्चौरस्य ग्रहः। 'पुच्छ'त्ति पृष्टश्चासावभयकुमारेण यथा भोः! त्वया कथं बहिरवस्थितेनैव गृहीतान्याम्रफलानि? तदनु 'विज्ज'त्ति विद्याप्रसादत इति निवे-

चोरोपलम्भनार्थमभयकुमारकथितवृहत्कुमारिकाख्यायिका.

दितं पाणेन। अथ 'कहणाओ' अभयकुमारेण श्रेणिकाग्रतः पुनः कथना अस्य वृत्तांतस्य विहिता। ततः दण्डश्चण्डालस्य 'नद्दाण'त्ति तस्या एव विद्याया दानलक्षणः कृतः। प्रतिपन्नं च तत्तेन। प्रारब्धं च श्रेणिकाय विद्याप्रदानम्। 'आसण-भूमी पाणस्स'त्ति आसनं भूमौ पाणस्य दत्तं, आत्मना तु सिंहासने निषण्णः। ततश्चापरिणामः सम्यगपरिणमनं विद्यायाः श्रेणिकस्य ॥ २५ ॥

**रण्णो कोवो णेयं वितहं अभयविणउ त्ति पाणस्स। आसण भूमी राया परिणामो एवमण्णत्थ ॥२६॥**

ततः राज्ञः कोपः प्रोद्भूतः, यथा—न त्वं करोषि मम सम्यग् विद्याप्रदानम्। ततः प्राह पाणः—नेदं वितथं विधीयते मया विद्यादानम्। तदनु भणितवानभयकुमारः—'अविणउ'त्ति अविनय इत्येवमात्मना तु सिंहासनाध्यासनलक्षणस्त्वया राजन्! क्रियते इत्यपरिणामो विद्यायाः। ततश्च 'पाणस्स आसण'त्ति सिंहासनं वितीर्णम्, 'भूमी राया' इति राजा स्वयं वसुंधरायामुपविष्टः। तदनन्तरं यथावत् परिणामो विद्यायाः संपन्न इति। एवमन्यत्रापि विद्याग्रहणे विनयः कार्य इति। यतः पठ्यते,—"विणएण सुयमहीयं कहवि पमाया विसुमरियं संतं। तमुवट्ठाइ परभवे केवलणाणं च आवहइ ॥ १ ॥ विज्जावि होइ बलिया गहिया पुरिसेण विणयमंतेण। सुकुलपसूया कुलवालियव्व पवरं पइं पत्ता ॥ २ ॥"॥ २६ ॥

अमुमेवार्थमन्वयव्यतिरेकाभ्यां भावयन्नाह;—

**विहिणा गुरुविणएणं एवं चिय सुत्तपरिणई होइ। इहरा उ सुत्तगहणं विवज्जयफलं मुणेयव्वं ॥२७॥**

विधिना मण्डलीप्रमार्जननिषद्याप्रदानकृतिकर्मकायोत्सर्गकरणादिना सिद्धान्तप्रसिद्धेन, तथा गुरोः सूत्रार्थोभयप्रदातुः सूरेर्विनयोऽभ्युत्थानासनप्रदानपादपरिधावनविश्रामणाकरणोचितान्नपानौषधादिसंपादनलक्षणश्चित्तानुवृत्तिरूपश्च गृह्यते, अतस्तेन गुरुविनयेन, 'एवं चिय'त्ति एवमेव श्रेणिकमहाराजन्यायेनैव सूत्रपरिणतिर्गृह्यमाणागमग्रन्थानामात्मना सहैकीभावो भवति संपद्यते। न हि सम्यगुपायः प्रयुक्तः स्वसाध्यमसाध्यैवोपरमं प्रतिपद्यते इतरथा त्वन्यथा पुनरविधिना गुरोरविनयेन चेत्यर्थः सूत्रग्रहणं प्रस्तुतमेव विपर्ययफलं विपरीतसाध्यसाधकं मुणितव्यं विज्ञेयम्। सूत्रग्रहणफलं हि यथावस्थितोत्सर्गापवादशुद्धहेयोपादेयपदार्थसार्थपरिज्ञानं तदनुसारेण चरणकरणप्रवृत्तिश्च। अविधिना गुरुविनयविरहेण च दूषितस्य पुनः प्राणिनः सूत्रग्रहणप्रवृत्तावप्येतद्द्वितयमपि विपरीतं प्रजायत इति ॥ २७ ॥

विपर्ययफलमेव दृष्टान्तद्वारेण भावयति;—

**समणीयंपि जरुदये दोसफलं चेव हंत सिद्धमिणं। एवं चिय सुत्तं पि हु मिच्छत्तजरोदए णेयं ॥२८॥**

शमयत्युपशमयति शमनीयं पर्पटकादि तदपि, किंपुनरन्यत्तत्प्रकोपहेतुर्घृतादि, ज्वरोदये पित्तादिप्रकोपजन्ये ज्वरोद्भवे। किमित्याह—दोषफलं चैव सन्निपातादिमहारोगविकारहेतुरेव, 'हंत'त्ति सन्निहितभव्यसभ्यामन्त्रणम्, सिद्धं प्रत्यक्षादिप्रमाणप्रतिष्ठितमिदं पूर्वोक्तं वस्तु। इत्थं दृष्टान्तमुपदर्श्य दार्ष्टान्तिकयोजनामाह;—'एवं चिय' त्ति एवमेव 'सुत्तंपि हु'त्ति सूत्रमप्युक्तलक्षणं मिथ्यात्वज्वरोदये। मिथ्यात्वं नाम सर्वज्ञप्रज्ञप्तेषु जीवाजीवादिभावेषु नित्यानित्यादिविचित्रपर्यायपरम्परापरिगतेषु विपरीततया श्रद्धानम्। तच्च सप्तधा, ऐकान्तिकसांशयिकवैनयिकपूर्वव्युद्ग्राहविपरीतरुचिनिसर्गमूढदृ-

सूत्रग्रहणविधावन्वयव्यतिरेकभावना।

ष्टिभेदात्। यथोक्तम्;—"पदार्थानां जिनोक्तानां तदश्रद्धानलक्षणम् । ऐकान्तिकादिभेदेन सप्तभेदमुदाहृतम् ॥ १ ॥ क्षणिकोऽक्षणिको जीवः सर्वथा सगुणोऽगुणः । इत्यादि भाषमाणस्य तदैकान्तिकमुच्यते ॥ २ ॥ सर्वज्ञेन विरागेण जीवाजीवादि भाषितम् । तथ्यं नवेति संकल्पे दृष्टिः सांशयिकी मता ॥ ३ ॥ आगमा लिङ्गिनो देवा धर्माः सर्वे सदा समाः । इत्येषा कथ्यते बुद्धिः पुंसो वैनयिकी जिनैः ॥ ४ ॥ पूर्णः कुहेतुदृष्टान्तैर्न तत्त्वं प्रतिपद्यते । मण्डलश्चर्मकारस्य भोज्यं चर्मलवैरिव ॥ ५ ॥ अतथ्यं मन्यते तथ्यं विपरीतरुचिर्जनः । दोषातुरमनास्तिक्तं ज्वरीव मधुरं रसम् ॥ ६ ॥ दीनो निसर्गमिथ्यात्वस्तत्त्वातत्त्वं न बुध्यते । सुन्दरासुन्दरं रूपं जात्यन्ध इव सर्वथा ॥ ७ ॥ देवो रागी यतिः सङ्गी धर्मः प्राणिनिशुम्भनः । मूढदृष्टिरिति ब्रूते युक्तायुक्ताविवेचकः ॥ ८ ॥" तदेव दुर्निवारवैधुर्याधायकतया ज्वरो रोगविशेषस्तस्योदय उद्भवस्तत्र ज्ञेयम् । अयमत्र भावः—यथा ज्वरोदये शमनीयमप्यौषधं प्रयुज्यमानं न गुणाय, किन्तु महते दोषाय संपद्यते । एवं सूत्रमपि संसारव्याधिबाधानिरोधकारकतया परमौषधसममपि दुर्विनीतप्रकृतेरविधिप्रधानस्य च जीवस्य महति मिथ्यात्वज्वरोदये योजनीयम् । अन्यत्राप्युक्तम्;—"सप्तप्रकारमिथ्यात्वमोहितेनेति जन्तुना । सर्वं विपाकुलेनेव विपरीतं विलोक्यते ॥ १ ॥" तथा,–अप्रशान्तमतौ शास्त्रसद्भावप्रतिपादनम् । दोषायाभिनवोदीर्णे शमनीयमिव ज्वरे ॥ २ ॥ पठन्नपि वचो जैनं मिथ्यात्वं न विमुञ्चति । कुदृष्टिः पन्नगो दुग्धं पिबन्निव महाविषम् ॥३॥" ॥२८॥

इत्थं शिष्यविषयमुपदेशमभिधाय सांप्रतं तमेव गुरुगोचरमाह—

**गुरुणावि सुत्तदाणं विहिणा जोग्गाण चेव कायव्वं। सुत्ताणुसारओ खलु सिद्धायरिया इहाहरणं ॥२९॥**

गृणाति शास्त्रार्थमिति व्युत्पत्त्या प्राप्तयथार्थाभिधानः स्वपरतन्त्रवेदी पराशयवेदकः परहितनिरतो यतिविशेषो गुरुः, तेनापि, न केवलं शिष्येण, विधिना विनयेन च सूत्रं ग्रहीतव्यमित्यपिशब्दार्थः, सूत्रदानं श्रुतरत्नवितरणं विधिना "सुत्तत्थो खलु पढमो" इत्यादिना आवश्यकनिर्युक्तिनिरूपितेन क्रमेण, 'जोग्गाण चेव'त्ति योग्यानामेव विनयावनामादिगुणभाजनत्वेनोचितानामेव कर्त्तव्यं, न पुनरयोग्यानामपि । यथोक्तम्;—"विणओणएहिं पंजलिउडेहिं छंदमणुवत्तमाणेहिं । आराहिओ गुरुजणो सुयं वहुविहं लहुं देइ ॥ १ ॥" तथा, "उवहियजोगदवो देसे काले परेण विणएण । चित्तण्णू अणुकूलो सीसो सम्मं सुयं लहइ ॥ २ ॥" कथमित्याह—सूत्रानुसारतः सूत्रस्य व्यवहारभाष्यस्यानुसारोऽनुवर्त्तनं तस्मात् । खलुरवधारणे । ततः सूत्रानुसारादेव तदतिक्रमेण सूत्रदाने तद्द्वेपित्वमेव कृतं स्यात् । यथोक्तम्;—"तत्कारी स्यात् स नियमात्तद्द्वेपी चेति यो जडः । आगमार्थे तमुल्लङ्घ्य तत एव प्रवर्त्तते ॥ १ ॥ आगमात्सर्व एवायं व्यवहारो व्यवस्थितः । तत्रापि हाठिको यस्तु हन्ताज्ञानां स शेखरः ॥ २ ॥" सूत्रानुसारश्चायम्;—"तिवरिसपरियागस्स उ आचारपकप्पनाम अज्झयणं । चउवरिसस्स उ सम्मं सूयगडं नाम अंगं ति ॥ १ ॥ दसकप्पव्ववहारा संवच्छरपणगदिक्खियस्सेव । ठाणं समवाओ च्चिय दो अंगे अट्ठवासस्स ॥ २ ॥ दसवासस्स विवाहो एक्कारसवासयस्स उ इमे उ । खुड्डियविमाणमाई अज्झयणा पंच नायव्वा ॥ ३ ॥ वारसवासस्स तहा अरुणुववायाइ पंच अज्झयणा । तेरसवासस्स तहा उट्ठाणसुयाइया चउरो ॥ ४ ॥ चोद्दसवासस्स तहा आसीविसभावणं जिणा विंति । पन्नरसवासगस्स य दिट्ठीविसभावणं तह य ॥ ५ ॥ सोलसवासाईसु य एगुत्तरवड्ढिएसु जहसंखं । चारणभावण–महसुविणभावणा तेयगनिसग्गा ॥ ६ ॥

विनेयसूत्रदाने गुरुकर्तव्यता.

एगूणवामगस्स उ दिट्ठीवाओ दुवालसममंगं । संपुन्नवीसवरिसो अणुवाई सवसुत्तस्स ॥ ७ ॥" इति । श्रमणीस्तु प्रतीत्याऽकालचारित्वादिपरिहारलक्षणः सूत्रानुसारः । अकालचारित्वलक्षणं चेदम्;—"अट्ठमीपक्खिए मोत्तुं वायणाकालमेव उ । सेसकालमइंतीओ नायवा कालचारिओ ॥ १ ॥" सिद्धाचार्याः सिद्धाभिधानसूरय इह सूत्रानुसारतः सूत्रदाने, आह्रियते आक्षिप्यते प्रतीतिपथेऽवतार्यते दार्ष्टान्तिकोऽर्थो येन तदाहरणं दृष्टान्तः ॥ २९ ॥

तदेवाह;—

चंपा धण सुंदरि तामलित्ति वसु णंद सड्ढ संबंधो । सुंदरि णंदे पीई समए परतीरमागमणे ॥३०॥
जाणविवत्ती फलगं तीरे उदगत्थि सीह वाणरए । सिरिउररण्णो सुंदरिगहरागे निच्छ कहधरणा ॥३१॥
चित्तविणोए वाणरणट्टम्मी जाइसरणसंवरणं । देवपरिच्छा नियरूवकहण रण्णो उ संबोही ॥ ३२ ॥
सावत्थी सिद्धगुरूविउवदिक्खा परिच्छ सामइए । आलावगा णिमित्ते अदाण कोवेतरा देवे ॥३३॥
लोगपसंसा सव्वण्णुसासणं एरिसं सुदिट्ठं ति । बोहीबीयाराहण एवं सवत्थ विण्णेयं ॥ ३४ ॥

एत्थेव जंबुदीवे भारहवासम्मि वासवपुरि व्व । विबुहजणहिययहरिणी अणवरयपयट्टपरममहा ॥ १ ॥ सिरिवासुपुज्जजिणवरवयणिंदुविबुद्धभवियकुमुयवणा । लच्छीए सोहिया चक्कपाणिमुत्ति व्व जयपयडा ॥ २ ॥ चंपा णामेण पुरी आसी, परिहवियधणवइधणोहो । वत्थव्वो तत्थ धणो अहेसि सेट्ठी गुणविसिट्ठो ॥ ३ ॥ तस्स य वसुनामेणं निवासिणा तामलि-

त्तिनयरीए। वणिएण समं मित्ती संजाया निरुवचरियत्ति ॥ ४ ॥ जिणधम्मपालणपरायणाण सुस्समणचलणभत्ताण।
तेसिं वच्चंतेसुं दिणेसु एगम्मि पत्थावे ॥ ५ ॥ अव्वोच्छिन्नं पीइं पवंछमाणेण निच्चकालंपि । सुंदरिनामा धूया नियगा
धणसेट्ठिणा दिन्ना ॥ ६ ॥ नंदस्स वसुसुयस्स कओ विवाहो य सोहणमुहुत्ते । दावियभुवणच्छरिओ महया रिद्धीसमुद-
एणं ॥ ७ ॥ अह सुंदरीइ सद्धिं पुव्वज्जियपुन्नपायवस्सुचियं । नंदस्स विसयसुहफलमुवभुंजंतस्स जंति दिणा ॥ ८ ॥
अच्चंतविमलबुद्धित्तणेण विन्नायजिणमयस्सावि । तस्सेगम्मि अवसरे जाया चिंता इयसरूवा ॥ ९ ॥ ववसायविभववि-
गलो पुरिसो लोगम्मि होइ अवगीओ । काउरिसो त्ति विमुच्चइ पुव्वसिरीएवि अचिरेण ॥ १० ॥ ता पुव्वपुरिससंतइस-
मागयं जाणवत्तवाणिज्जं। पकरेमि पुव्वधणविलसणेण का चंगिमा मज्झ ? ॥ ११ ॥ किं सोवि जीवइ जए नियभुयजुयल-
जिएण दव्वेण । जो वंछियं पयच्छइ न मग्गणाणं पइदिणंपि ? ॥ १२ ॥ विज्जाविक्कमगुणसलहणिज्जवित्तीइ जो धरइ
जीयं। तस्सेव जीवियं वंदणिज्जमियरस्स किं तेण? ॥ १३ ॥ उप्पज्जंति विणस्संति णेगसो के जयम्मि नो पुरिसा। जल-
बुब्बुउ व्व परमत्थरहियसोहेहि किं तेहिं? ॥ १४ ॥ कह सोवि पसंसिज्जइ न जस्स सप्पुरिसकित्तणावसरे । चागाइगुण-
गणेणं पढम च्चिय जायए रेहा ॥ १५ ॥ इय चिंतिऊण तेणं परतीरदुल्लभभंडपडहत्थं। पारे पारावारस्स झत्ति पगुणी-
कयं पोयं ॥ १६ ॥ गमणुम्मणं च तं पेच्छिऊण अइविरहकायरत्तेण। अच्चंतसोगविहुराइ सुंदरीए इमं भणिओ ॥ १७ ॥
हे अज्जउत्त! अहमवि तुमए सह नूणमागमिस्सामि । पेमपरायत्तमिमं चित्तं न तरामि संठविउं ॥ १८ ॥ इय भणिए

१ क 'समुदाएण'।

सूत्रदाने
नंदसुंदरी-
कथागर्भि-
तसिद्धा-
चार्योदा-
हरणम्.

दढतरपणयभावक्खित्तचित्तपसरेणं। पडिवन्नमिणं नंदेण तयणु जायम्मि पत्थावे ॥ १९ ॥ आरूढाइं दोन्निवि ताणि विसिट्ठम्मि जाणवत्तम्मि। पत्ताणि य परतीरं खेमेणाणाउलमणाणि ॥ २० ॥ विणिवट्टियं च भंडं उवज्जिओ भूरिकणयसंभारो। पडिभंडं घेत्तूण य इंताण समुद्दमज्झम्मि ॥२१॥ पुव्वकयकम्मपरिणइवसेण अच्चंतपवलपवणेण। विलुलिज्जंती नावा खणेण सयसिक्करा जाया ॥ २२ ॥ अह कहवि तहाभवियव्वयाइ उवलद्धफलगखंडाणि। एक्कम्मि चेव वेलाउलम्मि लग्गाणि लहु ताणि ॥ २३ ॥ अघडंतघडणसुघडियविहडणवावडविहिस्स जोगेण। जायं परोप्परं दंसणं च गुरुविरहविहुराणं ॥ २४ ॥ ता हरिसविसायवसुच्छलंतदढमण्णुपुण्णगलसरणी। सहसत्ति सुंदरी नंदकंठमवलंबिउं दीणा ॥ २५ ॥ रोविउमारद्धा निच्चिरामनिवडंतनयणसलिलभरा। जलनिहिसंगुवलग्गंवुबिंदुनिवहं मुयंति व्व ॥ २६ ॥ कहकहवि धीरिमं धारिऊण नंदेण जंपियं ताहे। सुयणु! किमेवं सोगं करेसि अच्चंतकसिणमुही? ॥२७॥ को नाम मयच्छि! जए जाओ जो जस्स नेव वसणाइं। पाउब्भूयाणि न वा जायाणि य जम्ममरणाणि? ॥ २८ ॥ कमलमुहि! पेच्छ गयणंगणेक्कचूडामणिस्सवि रविस्स। उदयपयावविणासा पइदियसं चिय वियंभंति ॥ २९ ॥ किं वा न सुयं तुमए जिणिंदवयणम्मि जं सुरिंदावि। पुव्वसुकयक्खयम्मी दुत्थावत्थं उवलहंति ॥ ३० ॥ कम्मवसवत्तिजंतूण सुयणु! किं एत्तिएवि परितावो?। जेसिं छायव्व समं भमडइ दुक्खाण दंदोली ॥ ३१ ॥ इय एवमाइवयणेहिं सुंदरिं सासिउं, वसिमुहुत्तं। तीइ समं चिय चलिओ नंदो तण्हाछुहकिलंतो ॥ ३२ ॥ अह सुंदरीइ भणियं पिययम! एत्तो परिस्समकिलंता। अच्चंततिसाभिहया पयमवि न तरामि गंतुमहं ॥ ३३ ॥ नंदेण जंपियं सुयणु! एत्थ वीसमसु तं खणं एक्कं। जेणाहं तुज्झ कए सलिलं कत्तोवि

आणेसि ॥ ३४ ॥ पडिसुयमणाए ताहे नंदो आसन्नकाणणुद्देसे । सलिलावलोयणत्थं तं मोत्तूणं गओ सहसा ॥ ३५ ॥ दिट्ठो य कयंतेण व विगिंचिउब्भडमुहेण सीहेण । तिव्वछुहाभिहएणं अइचवललललंतजीहेणं ॥ ३६ ॥ तत्तो भयसंभंतो विस्सुमरियअणसणाइकायव्वो। अट्टज्झाणोवगओ निहओ सोऽसरणओ तेण ॥ ३७ ॥ उववन्नोयतहिं चिय वणसंडे बाल मरणदोसेण । चुयसम्मत्तसुयहगुणो सो नंदो वानरत्तेण ॥ ३८ ॥ एत्तो य सुंदरीए परिपालंतीइ अइगयं दिवसं । तहवि हु न जाव नंदो समागओ ताव संबुद्धा ॥ ३९ ॥ णिच्छइयतव्विणासा धसत्ति सा निवडिया धरणिवट्टे । मुच्छानिमीलियच्छी मयव्व ठाऊण खणमेगं ॥ ४० ॥ वणकुसुमसुरहिमारुयमणागउवलद्धचेयणा दीणा । रोविउ मारद्धा निविडदुक्खपम्मुक्कपोक्कारा ॥ ४१ ॥ हा अज्जउत्त! हा जिणवरिंदपयपउमपूयणासत्त !। हा सद्धम्ममहानिहि ! कत्थ गओ देहि पडिवयणं ॥ ४२ ॥ हा पाव दइव! धणसयणगेहनासेवि किं न तुट्ठो सि? । जमणज्ज! अज्जउत्तोवि निहणसिंहिं समुवणीओ ॥ ४३ ॥ हे ताय! सुयावच्छल! हा हा हे जणणि! निक्कवडपेम्मे! । दुहजलहिनिवडियं कीस निययधूयं उवेहेह? ॥४४॥ इय सुचिरं विलविता निविडपरिस्समकिलामियसरीरा। करयलनिहित्तवयणा सुतिक्खदुक्खं अणुहवंती ॥४५॥ तुरगपरिवाहणत्थं तत्थोवगएण सिरिउरनिवेण। दिट्ठा कहवि पियंकरनामेणं, चिंतियं च इमं ॥४६॥ सावब्भट्ठा किमिमा तियसवहू, मयणविरहिया व रई। वणदेवया व विज्जाहराण रमणि व होज्ज त्ति ॥ ४७ ॥ विम्हियमणेण पुट्ठा सुयणु! का तं सि किमिह आवससि? । कत्तो य आगया, कीस वहसि संतावमेवं ति ? ॥ ४८ ॥ अह सुंदरीइ दीहुण्हमुक्कनीसासतरलियगिराए। सोगवसमउलियच्छीइ जंपियं भो महासत्त! ॥ ४९ ॥ वसणपरंपरनिवत्तणेक्क-

सूत्रदाने नंदसुंदरीकथागर्भितसिद्धाचार्योदाहरणम्.

आवइगया वि उत्तमकुलप्पसूयत्तणेण णो
पउविहिविहाणवसगाए। मज्झ पउत्तीए अलमिमाइ दुहनिवहहेऊए ॥ ५० ॥ आवइगया वि उत्तमकुलप्पसूयत्तणेण णो
एसा। साहिस्सइ नियवत्तं विचिंतिऊणं महीवइणा ॥५१॥ अणुणइऊणं मंजुलगिराहिं नीया कहिंपि नियगेहे। काराविया
य गाढोवरोहओ भोयणाइविहिं ॥ ५२ ॥ मणवंछियं च सव्वं संपाडइ तीइ मेइणीनाहो। अणुराएणं सप्पुरिसवित्तिभावे-
णवि तयावि ॥ ५३ ॥ सम्माणदाणसप्पणयसंकहारंजियत्ति मुणमाणो। महुरगिराइ नरिंदो एगंते सुंदरिं भणइ ॥ ५४ ॥
ससिमुहि! सरीरमणनिव्वुईहरं पुव्वकालवुत्तंतं। मोत्तूण मए सद्धिं जहिच्छियं भुंज विसयसुहं ॥५५॥ पइदिणसोगोवहया
सुकुमारा सुयणु! तुज्झ कायलया। दीवयसिहोवतत्ता मालइमाल व्व पमिलाइ ॥ ५६ ॥ मा सुयणु! जुव्वणं पव्वणिंदुबिंबं
व जणमणाणंदं। सोयविडप्पकडप्पुप्पीडियमुवचिणइ सोहग्गं ॥ ५७ ॥ अच्चंतसुंदरंपि हु मणोभिरामंपि भुवणदुलहंपि।
पब्भट्ठं नट्ठं वा वत्थुं सोयंति नो कुसला ॥ ५८ ॥ ता होउ भूरिभणिएण कुणसु मह पत्थणं तुमं सहलं। पत्थावुचिय-
पवित्तीइ चेव जुत्तं कुणंति बुहा ॥ ५९ ॥ अच्चंतकण्णकडुयं अस्सुयपुव्वं च तीइ सोच्चेमं। वयभंगभयवसट्टाइ गाढदुक्खा-
उलमणाए॥ ६० ॥ भणियं भो नरपुंगव! कुलप्पसूयाण जयपसिद्धाण। नयमग्गदेसगाणं तुम्हारिसपवरपुरिसाणं ॥ ६१ ॥
अच्चंतमणुचियं उभयलोगविद्धंसणेक्कपडुयं च। पररमणिरमणमेयं अवजसपडहो तिहुयणेवि ॥ ६२ ॥ रण्णा पयंपियं
कमलवयणि! चिरपुण्णविहवउवणीयं। रयणनिहिमणुसरंतस्स होज्ज किं दूसणं मज्झ? ॥ ६३ ॥ तो नरवइनिरुवक्कम-
निव्वंधं मुणिय तीइ पडिभणियं। जइ एवं ता नरवर! चिरगहियाभिग्गहो जाव ॥ ६४ ॥ पुज्जइ ता पडिवालेसु मज्झ
तं केत्तियंपि णणु कालं। पच्छा य तुज्झ वंछाणुरूवमहमायरिस्सामि ॥ ६५ ॥ एवं सोच्चा तुट्ठो भूमिवई नट्ठखेद्धुमा-

ईणि । चित्तविणोयत्थं से दा                    ालं ॥ ६६ ॥ अह पुव्वभणियनंदो वानरभावेण वट्टमाणो सो । गहिओ
मक्कडखेडावगेहिं उचिउ त्ति                    ट्टवइ बहुकालाओ सिक्खविओ पइपुरं च दंसेत्ता । ते पुरिसा तं घेत्तुं
समागया तप्पुरे कहवि ॥ ६८                    मंदिरं च ते रायमंदिरम्मि गया । पारद्धो य तहिं सो पणच्चिउं सव्व-
जत्तेण ॥ ६९ ॥ अह नच्चंतेण                    ासन्निहिनिसन्ना । दिट्ठा णेणं चिरपणयभाववियसंतनयणेण ॥७०॥ कत्थ
मए दिट्ठेयं विचिंतयंतेण तेण                    सरिया नाओ सव्वोवि य पुव्ववुत्तंतो ॥ ७१ ॥ तो परमं निव्वेयं समुव्वहंतेण
चिंतियं तेण । हा हा अणत्थनि                    यु संसारवासस्स ॥ ७२ ॥ जेण तहाविहनिम्मलविवेगजुत्तो वि धम्मरागी वि ।
अणुसमयसमयसंसियविहियाणुट्ठाण . . वि ॥ ७३ ॥ तह बालमरणवसओ विसमदसं एरिसं समणुपत्तो । तिरियत्ते
वट्टंतो य संपयं किं करेमि अहं ? ॥ ७४ ॥ अहवा किमणेण विचिंतिएण इय अवसराणुरूवंपि । पकरेमि धम्मकम्मं
पज्जत्तं जीवियव्वेण ॥ ७५ ॥ इय सो परिभावेंतो सुढिओत्ति मुणित्तु तेहिं पुरिसेहिं । नीओ सट्ठाणम्मी तो तेणं अणसणं
गहियं ॥ ७६ ॥ पंचपरमेट्ठिमंतं अणुसमरंतो य सुद्धभावेण । मरिऊणं उववन्नो दिव्वो देवो महिड्ढीओ ॥ ७७ ॥ तक्खण-
मेव पउत्तो ओही अवलोइया सिरिपुरम्मि । अविचलियसालिसीलालंकारा सुंदरी तेण ॥ ७८ ॥ सीलामलत्तगुणरंजिएण
अप्पा पयासिओ तीसे । कहिओ य वइयरो पुव्वजम्मविसओ नरवइस्स ॥ ७९ ॥ परिचिंतियं च रण्णा जइ जिणधम्म-
प्पभावओ एवं । पसुणोवि होंति देवा ता किं अम्हारिसा पुरिसा ॥८०॥ धम्मत्थकामसाहणसज्जा मज्जायवज्जिया होउं ।
विबुहजणनिंदणिज्जे विसयसुहे गाढमणुरत्ता ॥ ८१ ॥ पविसंति दुग्गईसुं ?, ताऽवसरो एस धम्मकरणस्स । दूरं विरत्त-

सूत्रदाने
नंदसुंदरी-
कथागर्भि-
तसिद्धा-
चार्योदा-
हरणम्.

चित्तेण तेण देवो इमं भणिओ ॥ ८२ ॥ किं कायबमओ मे? एक्को च्चिय जिणुवइट्ठओ धम्मो । संजायपच्चएणं सत्तणुरूवं पवन्नो तो ॥ ८३ ॥ भणिया देवेणं सा अह सुंदरि! केरिसं तुमं काही? सवंधयारपडिवंधकारए उग्गए सूरे ॥ ८४ ॥ किं दीवेण पओयणमओ तुमं चिय ममं पमाणं ति । इय निच्छियतच्चित्तो देवो सावत्थिनयरीए ॥ ८५ ॥ तक्कालमुणिपहाणा सिद्धायरिया गुरू पविहरंति । तेसिं सीलपरिक्खणनिमित्तमह कवडदिक्खाए ॥ ८६ ॥ दिक्खिता नेइ तयं तेसि समीवे तहाविहअकाले । एगागिणिं च सामइयसुत्तआलावगनिमित्तं ॥ ८७ ॥ भणिओ य तीइ सूरी वंदिय भालयलमेलियकराए । भयवं! रोगवसाओ सामइयसुयं वियलियं मे ॥ ८८ ॥ होउं दयावरा मे देहालावगमिमं खणं एगं । गुरुणा दिन्नुवओगेण चिंतियं नोचिओ समओ ॥ ८९ ॥ एगागिणी जमेसा तहा अकाले महंतओ अविही । तो कह सामइयसुयस्स देमि आलावगमिमीए? ॥ ९० ॥ पडिसिद्धा सा तेणं अज्जे! नेवोचियं तुहं एयं । दावियकोववियारा सहसत्ति अदंसणीहूया ॥ ९१ ॥ विहिपक्खवद्धलक्खं निउणं जाणित्तु सूरिमह देवो । अइभत्तीए संतोसमुवगओ तम्मि सूरिम्मि ॥ ९२ ॥ तो नियरूवं दंसिय वंदिय विणएण धरणिनिहियसिरो । कहिओ सवं नियपुवजम्मवुत्तंतमप्पेइ ॥९३॥ तं सुंदरिं गुरूणं, तेवि तहाविहपवित्तिणीइ तओ । सामन्नसमासन्नं काउं सा सग्गमणुपत्ता ॥ ९४ ॥ णाओ इमो वइयरो लोएणं अविहिणा न सुयदाणं । गुरुणा कयं ति अवो समुज्जला जिणमए नीई ॥ ९५ ॥ संपत्तवोहिवीओ कोई अन्नो पवन्नसम्मत्तो । देसेणं सवेण य चरणस्साराहओ जाओ ॥ ९६ ॥ एवं अन्नेणवि सुयहरेण सइ अप्पणो परेसिं च । ग्गाढमणुग्गहमइणा पयट्टियवं विहिपरेण ॥ ९७ ॥ इति ॥

अत्राक्षरार्थः;—'चंपाधणसुंदरि'त्ति चंपानगर्यां धनो नाम श्रेष्ठी अभूत्, तस्य सुन्दरी तनया। 'तामलित्तिवसुनंद'त्ति ताम्रलिप्त्यां पूर्वपारावारतीरवर्त्तिन्यां पुरि वसुश्रेष्ठी, तस्य च नन्दो नन्दनः समुत्पन्नः। 'सड्ढसंबंधो'त्ति तौ द्वावपि श्रेष्ठिनौ श्राद्धौ श्रावकाविति। संबन्धः स्वापत्यवैवाह्यलक्षणः कृतस्ताभ्याम्। ततः 'सुंदरिनंदे पीई' इति नन्दसुन्दर्योः परस्परं प्रीतिः प्रकर्षवती संपन्ना। समये क्वापि प्रस्तावे परतीरं जलधिपरकूलं नन्दः ससुन्दरीको ययौ। तदन्वागमने प्रत्यावर्त्तने परतीरात् ॥ ३० ॥ यानस्य प्रवहणस्य विपत्तिर्विनाशः संपन्नस्ततः फलकं काष्ठशकलमासाद्य तीरे एकस्मिन्नेव वेलाकूले द्वे अप्युत्तीर्णे। तत उदकार्थी परिक्राम्यन्नन्दः सिंहेन हतः सन् वानरः संजातः। इतश्च, श्रीपुरराजेन सुन्दर्या ग्रहो ग्रहणं कृतम्। रागश्चाभिष्वङ्गस्तस्यामेव तस्य जातः। 'निच्छकहधरणा' इति प्रार्थिता च सा तेन सविकारं, परं तया न इच्छाअभिलाषरूपा दर्शिता,—तदनु तस्यास्ताभिस्ताभिः कथाभिर्विनोदहेतुभिर्धरणं कालयापनं प्रारब्धं भूभुजा ॥ ३१ ॥ 'चित्तविणोए' इति चित्तविनोदमात्रे च तस्य संपन्ने अन्यदा 'वानरनट्टम्मि'त्ति वानरेण नन्दजीवेन नृत्ये प्रारब्धे सति 'जातिसरण'त्ति जातिस्मरणमासादितम्। तदनु संवरणमनशनं विहितं तेन। 'देव'त्ति देवस्तदनन्तरमभूद्वानरजीवः। परीक्षा कृता तेन सुन्दरीशीलस्य। ततोऽथ निजरूपमादर्शितम्। 'कहण'त्ति कथनं च समग्रस्यापि प्राच्यवृत्तान्तस्य। 'रण्णो उ संबोहि'त्ति राज्ञः पुनः संबोधिः सम्यग्बोधः प्रादुर्भूतः ॥ ३२ ॥ ततः श्रावस्त्यां नगर्यां 'सिद्धगुरू' इति सिद्धाभिधानसूरीणां 'विउव्वदिक्खा' इति वैक्रियरूपेण विहितदीक्षां सुन्दरीं विधाय 'परिच्छ'त्ति परीक्षा 'सामइए आलावगनिमित्ते' इति सामायिकालापकनिमित्तं विहिता देवेन। 'अदाण'त्ति सामायिकालापकस्याप्रदाने कृते सति गुरुणा, 'कोवेयरा' इति

सूत्रदाने नंदसुंदरीकथागर्भितसिद्धाचार्योदाहरणम्.

कोपेतरौ 'देवे' इति देवेन विहितौ बहिर्वृत्त्या कोपः अंतर्वृत्त्या च संतोषः कृत इत्यर्थः ॥ ३३ ॥ ततो ज्ञातवृत्तान्तेन लोकेन प्रशंसा कृता—यथा, सर्वज्ञशासनमीदृशं सुदृष्टं निपुणप्रज्ञापकनिरूपितं इत्यनेनोल्लेखेन । ततो 'बोहिबीयाराहण'त्ति बोधिः पारगतगदितधर्मप्राप्तिः केषांचिज्जीवानां समभूत्, अन्येषां च बीजस्य सम्यग्दर्शनादिगुणकलापकल्पपादपमूलकल्पस्य देवगुरुधर्मगोचरकुशलमनोवाक्कायप्रवृत्तिलक्षणस्याराधनं सेवनं समपद्यत । एवं प्रस्तुतसूत्रप्रदानवत् सर्वत्र प्रव्रज्यादानादौ सूत्रानुसारादेव मतिमतां च वर्त्तनं विज्ञेयमिति ॥ ३४ ॥

अथ सूत्रानुसारप्रवृत्तिमधिकृत्याह;—

**आसन्नसिद्धियाणं लिंगं सुत्ताणुसारओ चेव । उचियत्तणे पवित्ती सव्वत्थ जिणम्मि बहुमाणा ॥३५॥**

आसन्ना तद्भवादिभावित्वेन समीपोपस्थायिनी सिद्धिर्मुक्तिर्येषां ते तथा तेषां भव्यविशेषाणां लिङ्गं चिह्नं व्यञ्जकमित्यर्थः । धूम इव गिरिकुहरादिवर्त्तिनो वह्नेः । कासावित्याह—सूत्रानुसारादेवागमार्थानुवृत्तेरेव उचितत्वेन तत्तद्द्रव्यक्षेत्रकालभावानुरूपेण या प्रवृत्तिः स्वकुटुम्बचिन्तनरूपा द्रव्यस्तवभावस्तवरूपा च । कुत एतदेवमित्याह;—सर्वत्र कृत्ये इत्थं प्रवृत्तौ धार्मिकस्य जिने भगवति सर्वत्रौचित्यात् प्रतिपादयितरि बहुमानाद् गौरवात्। स हि सूत्रासुसारेण प्रवर्त्तमानो "भगवतेदमिदमित्थमित्थं चोक्तम्" इति नित्यं मनसाऽनुस्मरन् भगवन्तमेव बहु मन्यते । संजातभगवद्बहुमानश्च पुमानविलम्बितमेव भगवद्भावभाक् संपद्यते । यथोक्तम्;—अक्खयभावे मिलिओ भावो तब्भावसाहगो नियमा । न हु तंबं रसविद्धं पुणोवि तंबत्तणमुवेइ ॥ १ ॥" इति सर्वत्रौचित्यप्रवृत्तिरासन्नसिद्धेर्जीवस्य लिङ्गमुक्तमिति ॥ ३५ ॥

एतद्विपर्यये दोषमाह;—

**आयपरपरिच्चाओ आणाकोवेण इहरहा णियमा । एवं विचिंतियव्वं सम्मं अइणिउणबुद्धीए ॥ ३६ ॥**

आत्मपरपरित्यागः आत्मनः स्वस्य परेषां चानुगृहीतुमिष्टानां देहिनां परित्यागः दुर्गतिगर्त्तान्तर्गतानां प्रोज्झनं कृतं भवति आज्ञाकोपेन भगवद्वचनवितथासेवनरूपेण, इतरथा सूत्रानुसारप्रवृत्तिरूपप्रकारपरिहारेण प्रवृत्तौ सत्यां नियमादवश्यंभावेन । यथोक्तम्;—"इहलोयम्मि अकित्ती परलोए[1] दुग्गई धुवा तेसिं । आणं विणा जिणाणं जे ववहारं ववहरंति ॥ १ ॥" यत एवं तत एवमुक्तप्रकारेण विचिन्तयितव्यं विमर्शनीयं सम्यग् यथावद् अतिनिपुणबुद्ध्या कुशाग्रादपि तीक्ष्णतरया प्रज्ञया, अनिपुणबुद्धिभिर्विचिन्तितस्याप्यर्थस्य व्यभिचारसंभवात् ॥ ३६ ॥

अत एवाह;—

**बुद्धिजुया खलु एवं तत्तं बुज्झंति, ण उण सव्वेवि । ता तीइ भेयणाए वोच्छं तव्वुड्ढिहेउत्ति ॥ ३७ ॥**

बुद्धियुता अतिनिपुणोहापोहरूपप्रज्ञासमन्विताः । खलुरवधारणे । ततो बुद्धियुता एव एवमुक्तरूपेण तत्त्वं सूत्रानुसारेण प्रवृत्तिरासन्नसिद्धिकजीवानां लक्षणमित्येवंरूपं बुध्यन्ते । व्यवच्छेद्यमाह—न पुनः सर्वेऽपि बुद्धिविकला अपीति भावः, बहुबुद्धिबोध्यस्यार्थस्य सामान्यबुद्धिभिः कृतप्रयत्नशतैरपि बोद्धुमपार्यमाणत्वात् । तदुक्तम्;—"महतां न बुद्धि-

आसन्नसिद्धिजीवस्यौचित्यानौचित्यप्रवृत्तौ गुणदोषौ तत्त्वबोधे निपुणबुद्धिराश्यकी.



1 क 'परलोए य दुग्गई' ।

विभवः कृतप्रयत्नैरपीतरैर्लभ्यः। यत्नशतैरपि ताडय यदि सूची भवति पाराची ॥ १ ॥" यत एवं ततस्मात्तस्या बुद्धेर्भेदज्ञातानि भेदानौत्पत्तिक्यादीन्, ज्ञातानि च रोहकादिदृष्टान्तान् वक्ष्ये भणिष्यामि। किमर्थमित्याह—'तव्वुद्धिहेउ'त्ति तद्बुद्धिहेतोर्बुद्धिप्रकर्षनिमित्तम्। इतिर्वाक्यपरिसमाप्त्यर्थः। वुद्धिप्रकर्षयोग्या हि पुरुषा बुद्धेर्भेदांस्तज्ज्ञातानि च धीमत्पुरुषाभ्यर्णे सम्यक् समाकर्णयन्तो निश्चयेन तथाविधवुद्धिधननिधानभूताः संपद्यन्ते। यदवाचि;—"विमलस्वष्टात्मानः सांगत्यात् परगुणानुपाददते। उपनिहितपद्मरागः स्फटिकोऽरुणिमानमातनुते ॥ १ ॥" ॥ ३७ ॥

यथोद्देशं निर्देश इति न्यायात् वुद्धिभेदानाह;—

**उप्पत्तिय वेणइया कम्मय तह पारिणामिया चेव। बुद्धी चउव्विहा खलु निद्दिट्ठा समयकेऊहिं ॥३८॥**

उत्पत्तिः प्रयोजनं कारणं यस्याः सा औत्पत्तिकी। आह;—क्षयोपशमः प्रयोजनमस्याः, सत्यम्, किन्तु स खल्वन्तरङ्गत्वात् सर्वबुद्धिसाधारण इति न विवक्ष्यते। न चान्यच्छास्त्रकर्मादिकमपेक्ष्यत उत्पत्तिं विहाय। यदत्र 'उत्पत्तिगी'ति निर्देष्टव्ये 'उत्पत्तिय' इति निर्देशः स प्राकृतत्वात्। एवमन्यत्राप्यन्यथानिर्देशे हेतुर्वाच्यः (१) 'वेणइया' इति विनयो गुरुशुश्रूषा, स च कारणमस्यास्तत्प्रधाना वा वैनयिकी (२) 'कम्मय'त्ति इह कर्मशब्देन शिल्पमपि गृह्यते। तत्र अनाचार्यकं कर्म, साचार्यकं शिल्पम्, कादाचित्कं वा कर्म, शिल्पं नित्यव्यापारः। ततः कर्मणो जाता कर्मजा (३) तथाशब्दः समुच्चये 'पारिणामिया' इति परि समन्ताद् नमनं परिणामः सुदीर्घकालं पूर्वापरार्थावलोकनादिजन्य आत्मधर्म इत्यर्थः,

स कारणमस्यास्तत्प्रधाना वा पारिणामिकी (४) चैवशब्दस्तथाशब्दवत्, बुध्यतेऽनयेति बुद्धिर्मतिः सा चतुर्विधैव, खलु-शब्दस्य निर्धारणार्थत्वात्। निर्दिष्टोक्ता समयकेतुभिः सिद्धान्तप्रासादचिह्नभूतैस्तीर्थकरगणधरादिभिरित्यर्थः ॥ ३८ ॥

औत्पत्तिक्या लक्षणं प्रतिपादयन्नाह;—

**पुव्वमदिट्ठमसुयमवेइयतक्खणविसुद्धगहियत्था। अव्वाहयफलजोगी बुद्धी उत्पत्तिया नाम ॥ ३९ ॥**

'पुव्व'इत्यादि पूर्वं बुद्ध्युत्पादात् प्राग् अदृष्टः स्वयमनवलोकितः, 'मसुय' इति मकारस्यालाक्षणिकत्वादश्रुतोऽन्यतोऽपि नाकर्णितः, 'मवेइय'त्ति अत्रापि मकारः प्राग्वत्, ततोऽवेदितो मनसाऽप्यनालोचितः, तस्मिन्नेव क्षणे विशुद्धो यथाव-स्थितो गृहीतोऽवधारितोऽर्थोऽभिप्रेतः पदार्थो यया सा तथाऽदृष्टाश्रुतावेदिततत्क्षणविशुद्धगृहीतार्था। 'अव्वाहयफलजोगी' इति इहैकान्तिकमिहपरलोकाविरुद्धं फलान्तराबाधितं वाऽव्याहतमुच्यते, फलं प्रयोजनं अव्याहतं च तत् फलं च अव्याहतफलं योगोऽस्या अस्तीति योगिनी, अव्याहतफलेन योगिनी; योगिणीति पाठे प्राप्ते योगीति निर्देशः प्राकृत-त्वात्। अन्ये तु 'अव्वाहयफलजोगा' इति पठन्ति—अव्याहत फलेन योगो यस्याः साऽव्याहतफलयोगा बुद्धिः औत्पत्तिकी नाम औत्पत्तिक्यभिधाना बोद्धव्या ॥ ३९ ॥

सांप्रतमेतज्ज्ञातान्याह;—

**भरहसिलपणियरुक्खे खड्डगपडसरडकायउच्चारे। गयघयणगोलखंभे खुड्डगमग्गित्थिपइपुत्ते ॥ ४० ॥**

बुद्धिचतु-ष्टये प्रथम-बुद्धिलक्ष-णम्.

द्वारगाथा । अस्यां सप्तदशोदाहरणानि तद्यथा—'भरहसिल'त्ति भरतशिला ( १ ) 'पणिय'त्ति पणितं ( २ ), वृक्षः ( ३ ), 'खड्डुग'त्ति मुद्रारत्नं ( ४ ), 'पडसरडकायउच्चारे' इति पटः ( ५ ), सरडः ( ६ ), काकः ( ७ ), उच्चारः ( ८ ), 'गयघयणगोलखंभे' इति गजः ( ९ ), 'घयण'त्ति भाण्डः ( १० ), गोलः ( ११ ), स्तम्भः ( १२ ), 'खुड्डुगमग्गित्थिपइपुत्ते' इति क्षुल्लकः ( १३ ), मार्गः ( १४ ), स्त्री ( १५ ), द्वौ पती ( १६ ), पुत्रः ( १७ ) इति एतानि सप्तदश पदानि । तत्र ज्ञातसूचामात्रफलान्येवेति न सूक्ष्मेक्षिका कार्या ॥ ४० ॥

तत्राद्यज्ञातसंग्रहगाथा;—

**भरहसिल मिंढ कुक्कुड तिल वालुग हत्थि अगड वणसंडे। पायस अइया पत्ते खाडहिला पंच पियरो य ।**

'भरह सिल' इत्यादि भरतो नटस्तद्वृत्तान्तगता शिला भरतशिला १, मेंढो मेषः २, कुक्कुटस्ताम्रचूडः ३, 'तिल'त्ति तिलः ४, 'वालुग'त्ति वालुकायाः संबन्धिनी वरत्रा ५, हस्ती, ६, 'अगड'त्ति अवटं कूपः ७, वनखण्डः ८, पायसं ९, 'अइया' इति अजिकाया छगलिकायाः पुरीषगोलिका १०, 'पत्ते' इति पिप्पलपत्रं ११, 'खाडहिल'त्ति खिलहडिका १२, पञ्च पितरश्च तव राजन् पञ्च जनकाः १३ ॥ इयं च संग्रहगाथा स्वयमेव सूत्रकृता व्याख्यास्यत इति न विस्तार्यन्ते ॥ ४१ ॥

तथा,—

**महुसित्थमुद्दियंके णाणए भिक्खुचेडगनिहाणे। सिक्खा य अत्थसत्थे इच्छा य महं सयसहस्से ॥४२॥**

'महुसित्थ'त्ति मधुसिक्थकं मदनं १, मुद्रिका २, अंकश्च ३, ज्ञानकं व्यवहारार्हरूपकलक्षणं ४, 'भिक्खुचेडगनिहाणे' इति भिक्षुः ५, चेटकनिधानं ६, शिक्षा च ७, अर्थः ८, शस्त्रं ९, 'इच्छा य महं'ति इच्छा च मम १०, शतसहस्रं ११ एतान्यपि स्वयमेव सूत्रकृता व्याख्यास्यन्ते । एवं चाद्यसंग्रहगाथायाः संबन्धीनि सप्तदश एतानि चैकादश मीलितानि अष्टाविंशतिर्मूलज्ञातानि औत्पत्तिक्यां बुद्धाविति ॥ १ ॥ ४२ ॥

औत्पत्तिक्यां ज्ञातानां संग्रहः वैनयिकीस्वरूपं च.

अथ वैनयिकीस्वरूपमाह;—

**भरनित्थरणसमत्था तिवग्गसुत्तत्थगहियपेयाला । उभओलोगफलवई विणयसमुत्था हवइ बुद्धी ४३**

इहातिगुरुकार्यं दुर्निर्वहत्वाद् भर इव भरस्तस्य निस्तरणे पारप्रापणे समर्था भरनिस्तरणसमर्था, त्रयो वर्गास्त्रिवर्गं लोकरूढेर्धर्मार्थकामास्तदर्जनपरोपायप्रतिपादनमेव सूत्रं तदन्वाख्यानं तदर्थः पेयालो विचारः सार इत्येकोऽर्थः, ततस्त्रिवर्गसूत्रार्थयोर्गृहीतं पेयालं यया सा त्रिवर्गसूत्रार्थगृहीतपेयाला, 'उभओलोगफलवइ'त्ति उभयलोकफलवती ऐहिकामुष्मिकफलप्राप्तिप्रगुणा, विनयसमुत्था विनयोद्भवा वैनयिकी इत्यर्थः भवति बुद्धिः ॥ ४३ ॥

अथैतज्ज्ञातानि;—

**णिमित्ते अत्थसत्थे य लेहे गणिए य कूव आसे य। गद्दभलक्खणगंठी अगए गणिया य रहिए य ४४**

**सीआसाडी दीहं च तणं अवसवयं च कुंचस्स । निव्वोदए य गोणे घोडगपडणं च रुक्खाओ ॥४५॥**

निमित्तं १, अर्थशास्त्रं च २, 'लेहे' इति लेखनं ३, गणितं च ४, कूपः ५, अश्वश्च ६, गर्दभः ७, लक्षणं ८, ग्रन्थिः ९, अगदः १०, गणिका च रथिकश्चेति ११ ॥ ४४ ॥ शीतसाटी दीर्घं च तृणं, अपसव्यकं च क्रौञ्चस्य इत्येकमेव १२, नीव्रोदकं च १३, गौः घोटकः पतनं च वृक्षादित्येकमेव १४ । एवं वैनयिक्यां सर्वाग्रेण चतुर्दश ज्ञातानि । एतान्यपि स्वयमेव शास्त्रकृता व्याख्यास्यन्त इति नेह प्रयत्नः ॥ २ ॥ ४५ ॥

अथ कर्मजायाः स्वरूपमाह;—

**उवओगदिट्ठसारा कम्मपसंगपरिघोलणविसाला । साहुक्कारफलवई कम्मसमुत्था हवइ बुद्धी ॥ ४६ ॥**

उपयोजनमुपयोगो विवक्षितकर्मणि मनसोऽभिनिवेशः, सारस्तस्यैव कर्मणः परमार्थः, उपयोगेन दृष्टः सारो यया सा उपयोगदृष्टसारा अभिनिवेशोपलब्धकर्मसामर्थ्येत्यर्थः; कर्मणि प्रसङ्गोऽभ्यासः, परिघोलनं विचारः, आभ्यां विशाला कर्मप्रसङ्गपरिघोलनविशाला अभ्यासविचारविस्तीर्णा इति यावत् । साधुकृतं सुष्ठु कृतमिति विद्वद्भ्यः प्रशंसा साधुकारस्तेन फलवतीति समासः साधुकारेण वा शेषमपि फलं यस्याः सा तथा । कर्मसमुत्था कर्मजा भवति बुद्धिः ॥ ४६ ॥

अथतैज्ज्ञातानि;—

**हेरण्णिए करिसए कोलियडोवे य मुत्तिघयपवए । तुण्णायवड्ढई पूइए य घडचित्तकारे य ॥ ४७ ॥**

हैरण्यिकः सौवर्णिकः १, कर्षकः कृषीवलः २, 'कोलिय'त्ति कोलिकस्तन्तुवायः ३, 'डोवे य'त्ति दर्वीकरश्च परिवेषक

इत्यर्थः ४, 'मुत्ति'त्ति मौक्तिकप्रोता ५, 'घय'त्ति घृतप्रक्षेपकः ६, प्लवकः ७, 'तुन्नाय'त्ति तुन्नवायः तुन्नं त्रुटितं वयति सीव्यति यः स तथा ८, वर्द्धकिः ९, 'पूइए य' इति पूतिकः कान्दविकः १०, 'घडचित्तगारे य' त्ति घटकारः कुम्भकारः ११, चित्रकारश्चित्रकर्मविधाता १२। एवं द्वादश दृष्टान्ताः कर्मजायां मतौ। एतानपि स्वयं सूत्रकृद्भणिष्यतीति नेह कृतो विस्तरः ॥ ३ ॥ ४७ ॥

अथ पारिणामिकीस्वरूपमाह;—

**अणुमाणहेउदिट्ठंतसाहिया वयविवक्कपरिणामा। हियनिस्सेसफलवई बुद्धी परिणामिया णाम ॥४८॥**

अनुमानहेतुदृष्टान्तैः साध्यमर्थं साधयतीत्यनुमानहेतुदृष्टान्तसाधिका इह लिङ्गिज्ञानमनुमानं स्वार्थमित्यर्थः। तत्प्रतिपादकं वचो हेतुः परार्थमित्यर्थः। अथवा ज्ञापकमनुमानं, कारको हेतुः, साध्यव्याप्तिप्रदर्शनविषयो दृष्टान्तः। अनुमानग्रहणादेवास्य गतत्वाद् व्यर्थमुपादानमिति चेत्, न, अनुमानस्य तत्त्वतोऽन्यथानुपपन्नत्वलक्षणैकरूपत्वान्न गतार्थत्वं दृष्टान्तस्य। कालकृतो देहावस्थाविशेषो वय इत्युच्यते, ततस्तेन विपक्कः पुष्टिमानीतः परिणामोऽवस्थाविशेषो यस्याः सा वयोविपक्कपरिणामा। तथा 'हियनिस्सेसफलवई' इति हितमभ्युदयस्तत्कारणं वा पुण्यं, निःश्रेयसो मोक्षस्तन्निबन्धनं वा सम्यग्दर्शनादि, ततस्ताभ्यां फलवती बुद्धिः पारिणामिकी नाम ॥ ४८ ॥

अथैतज्ज्ञातानि गाथात्रयेणाह;—

**अभए सेट्ठिकुमारे देवी उदिओदए हवइ राया। साहू य णंदिसेणे धणदत्ते सावग अमच्चे ॥ ४९ ॥**

कर्मजायां दृष्टान्ताभिधाना- पारिणामिकीस्वरूपं च.

खमए अमच्चपुत्ते चाणक्के चेव थूलभद्दे य । नासिक्कसुंदरीणंद वइर परिणामिया बुद्धी ॥ ५० ॥

'अभए' इति अभयकुमारः १, 'सिट्ठि'त्ति काष्ठश्रेष्ठी २, 'कुमारे' इति क्षुल्लककुमारः ३, देवी पुष्पवत्यभिधाना ४, उदितोदयो भवति राजा ५, साधुश्च नन्दिषेणः श्रेणिकपुत्रः ६, धनदत्तः सुंसुमापिता ७, श्रावकः ८, अमात्यः ९ ॥ ४९ ॥ शमकः १०, अमात्यपुत्रः ११, चाणक्यश्चैव १२, स्थूलभद्रश्च १३, 'नासिक्कसुंदरीनंद'त्ति नासिक्यनाम्नि नगरे सुंदरीनन्दो वणिक् १४, वइर इति वैरस्वामी १५, पारिणामिकी बुद्धिरित्यनेन वाक्येनात्र पारिणामिकीबुद्धियुक्ता ब्राह्मणी देवदत्ता च गणिका गृह्यते १६ ॥ ५० ॥

चलणाहण आमंडे मणी य सप्पे य खग्ग थूभिंदे । परिणामियबुद्धीए एमाई होंतुदाहरणा ॥ ५१ ॥

चरणाहननं १७, 'आमंड' इति कृत्रिमामलकं १८, मणिश्च १९, सर्प्पश्च २०, 'खग्ग'त्ति खड्गः २१, स्तूपेन्द्रः २२। पारिणामिक्यां बुद्धौ 'एवमाइय'त्ति एवमादीनि भवन्त्युदाहरणानि । एवं च पारिणामिक्यां बुद्धौ सूत्रोपात्तानि द्वाविंशतिर्ज्ञातानि । एतान्यपि स्वयमेव सूत्रकृता भणिष्यन्त इति नेहाश्रितो विस्तरः ॥ ५१ ॥

सांप्रतमुद्दिष्टज्ञातानां स्वरूपं विभणिपुरादावेव भरहसिलेतिज्ञातसंग्रहगाथां भरहसिलमेंढकुकुडेत्यादिकामष्टाविंशतिगाथाभिर्व्याचष्टे;—

उज्जेणिसिलागामे छोयर रोहणणमाउवसणम्मि । पितिकोवेतरगोहे छायाकहणेणमब्भुदओ ॥ ५२ ॥

मालवमंडलमंडणभूया नयरी समुद्धुरधणोहा । नामेणं उज्जेणी समत्थि वित्थिण्णसुरभवणा ॥ १ ॥ तत्थ रिउपक्खविक्खोहकारओ सइ गुणी सुदढपणओ । आसी जियसत्तुनामा नरनाहो नयगुणसणाहो ॥ २ ॥ सो भुंजइ निरवज्जं नियरज्जं चोज्जकारगं भुवणे । धम्मत्थकामपुरिसत्थसुंदराराहणपहाणो ॥ ३ ॥ नाडयनट्टकहाणयगीयाइसु कोसलं परं पत्तो। कोऊहलतरलमणो सविज्जजणजोग्गकज्जेसु ॥४॥ अह उज्जेणिसमीवे अत्थि सिलासंगओ सिलागामो । गुणनिप्फाइयनामो गामो भरहो य तत्थ नडो ॥ ५ ॥ सो नाडयविज्जाए लद्धपसंसो पहू य तग्गामे । णामेण रोहओ सोहओ य गामस्स तस्स सुओ ॥ ६ ॥ अह अन्नया कयाइवि रोहयमाया मया, तओ भरहो । अण्णं तज्जणणिं संठवेइ घरकज्जकरणकए ॥ ७ ॥ बालो य रोहओ सा य तस्स हीलापरायणा हवइ । उप्पत्तियबुद्धिसमन्निएण तो तेण सा भणिया ॥ ८ ॥ अम्मो! ममं न वट्टसि जं सम्मं, सुंदरं न तं होही । तह काहमहं एत्तो जह तं पाएसु मे पडसि ॥ ९ ॥ एवं वच्चइ कालो अहण्णया ससिपयासधवलाए । रयणीइ जणगसहिओ पासुत्तो एगसिज्जाए ॥ १० ॥ तो रयणिमज्झभागे उट्ठित्ता उब्भएण होऊणं । दट्ठूण नियं छायं काउं परपुरिससंकप्पं ॥ ११ ॥ उच्चसरेणं जणओ उट्ठाविय भासिओ जहा ताय । पेक्खसु परपुरिसो एस जाइ सहसुट्ठिओ कोइ ॥ १२ ॥ जाव स निद्दामोक्खं काऊणं लोयणेहिं जोएइ । ताव न दिट्ठो पुट्ठो य वच्छा! सो कत्थ परपुरिसो? ॥ १३ ॥ भणिओ तेण इमेणं दिसाविभागेण तुरियतुरियं सो । गच्छंतो मे दिट्ठो मा मण्णसु अण्णहा ताय! ॥ १४ ॥ परिकलिय नट्ठसीलं महिलं सिढिलायरो तओ तीए । भरहो सब्भावपयंपणाइरहिओ तओ जाओ ॥ १५ ॥ पच्छायावपरिगया सा भासइ कुणसु वच्छ! मा एवं । सो भणइ न मम लट्ठं वट्टसि, सा

औत्पत्तिक्यां 'भरतशिला' प्रभृति ज्ञातानां रोहकनिदर्शनगर्भितसप्रपञ्चविवरणम्.

त्रेइ वट्टिस्सं ॥ १६ ॥ तह कुणसु जहा एसो तुह जणओ मज्झ आयरं कुणइ । पडिवन्नमिमं रोहेण सावि तह वट्टिउं
लग्गा ॥ १७ ॥ तह चेव रयणिमज्झे कयावि सुत्तुट्ठिओ भणइ जणगं । सो एस एस पुरिसो कहिंति पुट्ठो य पिउणावि
॥ १८ ॥ तो नियर्यं चिय छायं दंसित्ता भणइ पेच्छह इमं ति । स विलक्खमणो जाओ पुच्छइ किं एरिसो सोवि?
॥ १९ ॥ आमंति तेण भणिए अहो वालाण केरिसुल्लावा । इय चिंतिऊण भरहो घणराओ तीइ संजाओ ॥ २० ॥ तो
विसपयाणभीओ पिउणा सह रोहओ सया जिमइ । अह उज्जेणिमइगओ कयाइ जणएण सद्धिं सो ॥ २१ ॥ दिट्ठा न-
यरी तियचच्चराइदेसोवसोहिया सव्वा । दिवसावसाणसमए गामाभिमुहं पडिनियत्ता ॥ २२ ॥ सिप्पानईइ पत्ता वालु-
यपुलिणम्मि तो सुयं ठविउं । पम्हुट्ठगहणहेउं पुणोवि नयरिं गओ जणओ ॥ २३ ॥ तो रोहेण अइनिउणबुद्धिणा
तम्मि वालुयापुलिणे । तियचच्चराइकलिया लिहिया नयरी सपायारा ॥ २४ ॥ अह जियसत्तू राया नयरीवाहिं गओ
पडिनियत्तो । पंसुभएणेगागी तुरयारूढो तहिं देसे ॥ २५ ॥ जावेइ तुरियवेगो भणिओ ता रोहगेण मा वच्च । पुरओ
किं न नियच्छसि रायउलं तुंगपासायं ॥ २६ ॥ कत्तो रायउलं इह जा भणइ नराहिवो तओ जाओ। सउणो अइभूरि-
गुणो सवियक्को तो निवो जाओ ॥ २७ ॥ तो रोहएण नयरी सवित्थरं तं च राउलं कहियं । तुब्भं कत्थ निवासो भ-
णिओ रन्ना, तओ भणइ ॥ २८ ॥ इत्थेव सिलागामे भरहस्स सुओ वसामि कज्जेण । पिउणा सद्धिं इह आगओम्हि, सं-
पइ तहिं जामि ॥ २९ ॥ रण्णो पंच सयाइं मंती एगूणगाइं अह संति । जो चूडामणिसरिसो तेसिं तं मग्गए एक्कं ॥३०॥
तत्तो रणमेत्ताओ काओ कज्जाइं आगओ भरहो । तेण समं संपत्तो स रोहओ निययगामम्मि ॥ ३१ ॥ आरद्धं नरव-

इणा वुद्धीइ परिक्खणं तओ तस्स । भणिओ गामो वाहिं सिला विसालत्थि जा तीए ॥ ३२ ॥ मंडियपरिसरदेसं मंडवमुदंडथंभपब्भारं । कुणहत्ति एव भणिए गामो सो आउलीहूओ ॥ ३३ ॥ पडिया भोयणवेला स रोहगो नो जिमेइ पियरहिओ। मा मे विससंजोगं विराहिया दाहिही जणणी ॥ ३४ ॥ अह सो पसण्णवयणो उस्सूरसमागयं भणइ पियरं। मज्झं महल्लवेला छुहापिवासापरद्धस्स ॥ ३५ ॥ सुहिओ सि पुत्त! अइदारुणेत्थ आणा समागया रण्णो । तो तीए वाउलमाणुसाण संजायमुस्सूरं ॥ ३६ ॥ सुणियाए आणाए लद्धरहस्सेण तेण संलत्तं । भुंजह ताव जहिच्छं पच्छा जुत्तं करिस्सामि ॥ ३७ ॥ भुत्तुत्तरेण भणिओ सो गामो रोहएण जह खणह । हेट्ठा सिलातलं तह थंभे उत्थंभए देह ॥ ३८ ॥ एवं विहिए संते स मंडवो तेसिं तक्खणं जाओ । आवेइओ य रण्णो कह केण कओ? निवो भणइ ॥ ३९ ॥ तलभूमीखणणेणं थंभयउत्थंभणेण य कओ सो । भरहतणयस्स रोहगनामस्स मइप्पभावेण ॥ ४० ॥ विहिओ संवाओ से अन्नं आपुच्छिऊण संनिहियं । इय रोहगस्स वुद्धी भणिया उप्पत्तिया नाम ॥ ४१ ॥ एवं अण्णेसुवि मेंढगाइनाएसु जोयणा कज्जा । उप्पत्तियवुद्धीए जा एयकहापरिसमत्ती ॥ ४२ ॥

अथ पूर्वोक्तसंग्रहगाथाचतुष्टयस्याक्षरार्थः;—

**उज्जेणिसिलागामे छोयररोहणमाउवसणम्मि पितिकोवेतर गोहे छायाकहणेणमब्भुदओ[1] ॥ ५२ ॥** ॥ ४९ ॥

औत्प० भरत० रोह० निद० वि०

1 इयं प्राग्-४८-तमेपत्र आगता, तथापि पुनरप्यत्रोल्लिखितादर्शपुस्तकेपु प्रायः सर्वत्रैवं दृश्यतेतोऽत्रापि तथैवन्यस्तेति ।

पितिसममुज्जेणीगमणिग्गम पम्हुट्ठणदिणियत्तणया । सइ दिट्ठनयरिलिहणं रायणिसेहो णियघरम्मि
पुच्छा साहु निमित्तं मंतिपरिच्छा सिलाइ मंडवए । आदण्णेसुं पितिभुंजगमण खणणेगथंभो उ५४
कहणे चालण संबद्धभासगो तंसि अण्णहा णेयं । माणुसमेत्तस्सुचियं तयपुच्छण पुच्छ रोहेणं॥५५॥

उज्जयिन्याः समीपे शिलाग्रामे 'छोयररोह'त्ति छोकरो मृतस्वमातृकः रोहकनामा भरतसुतः समभूत्। तस्य च अन्यमात्रा व्यसनेऽसम्यगुपचाररूपे क्रियमाणे सति पितुः कोप इतरश्च संतोपोऽन्यमातृगोचर एव तेन संपादितः। कथमित्याह—गोहस्य परपुरुपस्य प्रथमं, पश्चात्स्वदेहच्छायाया गोहत्वेन परिकल्पितायाः कथनेन पितुर्निवेदनेन ततोऽभ्युदयः सम्यगुपचाररूपोऽन्यमात्रा संपादितोऽस्य ॥ ५२ ॥ पित्रा सममुज्जयिनीगमो रोहकस्य कदाचिदभूत् । तदनु दृष्टोज्जयिनीवृत्तान्तस्य निर्गमः पित्रैव सह । ततः 'पम्हुट्ठ'त्ति विस्मृतस्य कस्यचिदर्थस्य निमित्तं 'णइनियत्तणया' इति नदीपुलिनात् पित्रा निवर्त्तनं कृतम् । तत्र च सकृद्दृष्टनगरीलेखनं रोहकेण तदनु तद्देशागतस्य राज्ञो निषेधो निजगृहे आलिखितराजकुलमध्ये प्रविशतः सतः कृतः ॥ ५३ ॥ ततो राज्ञा पृच्छा कृता । अत्रान्तरे साधु निमित्तं शोभनशकुनरूपं संजातम् । तदनु 'मंतिपरिच्छा' इति मन्त्रिपदनिमित्तं तस्य परीक्षा प्रारब्धा यथा शिलाया मण्डपः कार्यः । ततः 'आदण्णेसु'त्ति आकुलेषु ग्रामवृद्धेषु सत्सु 'पिइभुंजगमण'त्ति रोहकपितुर्भोजनार्थमुत्सूरे गृहगमनं संपन्नम् । ततो रोहकबुद्ध्या खनने संपादिते एकमहामूलस्तम्भः शिलामण्डपः संपादितः । तुः पादपूरणार्थः ॥ ५४ ॥ ततो राज्ञस्तद्ग्राम-

वासिना केनचित् कथने कृते सति 'चालण'त्ति चालना विहिता पार्थिवेन यथाऽसंबद्धभाषकस्त्वमसि । तेनाप्युक्तम् अन्यथा नेदम् । ततो भूभुजा काका प्रत्यपादि 'माणुसमेत्तस्सुचियं'ति मानुषमात्रस्योचितं किमेवंविधार्थकरणम्? । ततः 'तदपुच्छण पुच्छ रोहेणं'ति तस्य प्रथमनिवेदकस्य पुरुषस्यापृच्छनेन तमपृच्छयमानं कृत्वेत्यर्थः अन्यस्य कस्यचिन्मध्यस्थस्य पृच्छा कृता । तेनाप्यावेदितं यथा रोहकेणायमाश्चर्यभूतो मण्डपः कारित इति ॥ ५५ ॥ १ ॥

अथ मेंढेत्ति द्वारम् ;—

**तत्तो मेंढगपेसणमणूणाहियमद्धमासेण । जवसविगसण्णिहाणा संपाडण मो उ एयस्स ॥ ५६ ॥**

ततस्तदनन्तरं मेण्ढकप्रेषणं मेण्ढकस्य मेषस्य प्रेषणं कृतं राज्ञा ग्रामे । उक्ताश्च ग्रामवृद्धा यथामुं मम मेषमन्यूनाधिकं च धारयेध्वम्, अथार्द्धमासेन समर्पयेध्वमिति । ततस्तै रोहकादिष्टैर्यवसवृकसन्निधानाद् यवसस्य यवहरितकलक्षणस्य वृकस्य चाटव्यजीवविशेषस्य समीपस्थानात् 'संपाडण'त्ति संपादनम्; 'मो उ'त्ति पादपूरणार्थः, एतस्यादेशस्य कृतम् । मेण्ढो हि यवसं चरन् यावद् बलं लभते, सततं वृकदर्शनोत्पन्नभयात्तावदसौ मुञ्चतीति अन्यूनाधिकबलता संजाताऽस्येति॥५६॥२॥

अथ कुक्कुडेत्ति द्वारम् ;—

**जुज्झावेयव्वो कुक्कुडोत्ति पडिकुक्कुडं विणा आणा । आदरिसगपडिबिंबप्पओगसंपादणा णवरं ॥ ५७ ॥**

योधयितव्यो युद्धं कारणीयोऽयं मम कुक्कुटस्ताम्रचूडः, इतिशब्दो भिन्नक्रम उत्तरत्र योज्यते, प्रतिकुक्कुटं द्वितीयकु-

कुटं विनान्तरेण इत्येषा आज्ञा राज्ञा प्रहिता। तत आदर्शके दर्पणे यन्निजमेव प्रतिबिम्बं प्रतिकुक्कुटतया संभावितं तेन तस्य प्रयोगो व्यापारः तेन संपादना घटना आज्ञायाः कृता रोहकेण, नवरं केवलं नान्यप्रयोगेणेत्यर्थः। स हि मुग्धतया निजप्रतिबिम्बमेव प्रतिकुक्कुटतया संभावयन् संपन्नतीव्रमत्सरतया संजातोत्साहो युध्यति, न च कथंचिद् भज्यत इति ॥ ५७ ॥ ३ ॥

**तिल्लसममाणगहणं तिलाण तत्तो य एस आदेसो। आदरिसगमाणेणं गहणा संपाडणमिमस्स ॥५८॥**

तैलसमेन मानेन ग्रहणं तिलानाम्, इदमुक्तं भवति—येन मानेन मदीयानेतांस्तिलान् कश्चिद् गृह्णाति तेनैव तैलमप्यस्य दातव्यम्, आत्मवञ्चना च रक्षणीया ततश्च पूर्वोक्तादेशानन्तरं पुनरेष आदेशः प्रेषितो महीपालेन। रोहकबुद्ध्या च आदर्शकमानेन दर्पणलक्षणेन प्रमाणेन ग्रहणात्तिलानाम्, उपलक्षणत्वात्तैलप्रदानाच्च संपादनमस्यादेशस्य कृतं ग्रामवृद्धैः। आदर्शकेन हि तिलेषु गृह्यमाणेषु दीयमाने च तैले ग्रामेयकाणां न कदाचिदात्मवञ्चना संपद्यते, यदि परं तिलस्वामिनो राज्ञः ॥ ५८ ॥ ४ ॥

**वालुगवरहाणत्ती अदिट्ठपुव्वोत्ति देहपडिछंदं। किं एस होइ करथइ, भणह, इमं जाणइ देवो॥५९॥**

ततो वालुकावरहस्य सिकतामयवरत्रालक्षणस्य आज्ञप्तिराज्ञा, दत्ता राज्ञा—यथा, वालुकावरहकः कूपसलिलसमुद्धरणार्थमिह प्रेषणीयः, रोहकव्युत्पादितैश्च तैर्भणितम्, यथा, अदृष्टपूर्वोऽयमस्माकमीदृशो वरहकः इत्यस्मात्कारणात् दत्त

समर्पयत देव! यूयं प्रतिच्छन्दं वालुकावरहकप्रतिविम्बकम् । एवमुक्तो राजा प्रतिभणति यथा—किमेष प्रतिच्छन्दो भवति कुत्रापि इति भणत यूयमेव ग्राम्याः । ततो रोहकशिक्षितैरेव तैरुक्तम्, यथेदं वालुकावरहकः कुत्रापि भवति नवेत्येवंरूपं वस्तु जानाति देवः ॥ ५९ ॥ ५ ॥

**अप्पाउहत्थिअप्पण पउत्ति अणिवेयणं च मरणस्स। आहारादिनिरोहा पउत्तिकहणेण पडिभेदो॥६०॥**

ततः 'अप्पाउहत्थिअप्पण'त्ति अल्पायुषः पारप्राप्तप्रायप्राणस्य हस्तिनो गजस्यार्पणं ढौकनं तेषां राज्ञा कृतं, इदं चोक्तं —यथा, प्रयुक्तिर्वार्त्ता प्रतिदिनमस्य देया, अनिवेदनं चाकथनमेव मरणस्य—एष मृतः सन्न कथनीय इत्यर्थः । तथेति प्रतिपन्नमेतत्तैः । अन्यदा च मृतो हस्ती । व्याकुलीभूतश्च ग्रामः । रोहकादेशेन आहारादिनिरोधाद् आहारादिनिरोध-माश्रित्येत्यर्थः, प्रयुक्तिकथनेन प्रतिभेदः प्रत्युत्तरं ग्रामेण कृतम्;—यथा देव! युष्मदीयो हस्ती, नो जानीमः किं त-त्कारणमद्य नोत्तिष्ठति, न निषीदति, न समर्पितमपि चरणं चरति, जलं च न पिबति, नोच्छ्वसिति, न निःश्वसिति, नाक्षिभ्यां निरीक्षते, नच पुच्छादि चालयतीति । ततो भूमीभुजोक्तम्—किमसौ मृतः? तैरुक्तम्—एवंविधव्यतिकरे यद्भवति तद्देव एव जानाति, किं वयं ग्रामीणा विद्मः? ॥ ६० ॥ ६ ॥

**आणेह सगं अगडं उदगं मिट्ठंतिमीइ आणाए। आरण्णगोत्ति पेसह—कूवियमाकरणमित्तीअे ॥६१॥**

तत आनयत स्वकमवटं कूपं अत्र कुतः उदकं जलं तत्कूपसंवन्धि मिष्टं मधुरमित्यस्माद्धेतोः । अत्र हि नगर्यामतिसं-

भारजनवासवशेन क्षालादिरससंक्रमाद्विरसानि कूपजलानीति कृत्वा ग्रामावटानयनमादिष्टं भवतामिति । अस्यामाज्ञायां पतितायां सत्यां तैर्ग्रामेयकैः आरण्यकोऽरण्योद्भवोऽज्ञ इत्यर्थ इत्यस्माद्धेतोः प्रेषयत एतदाकर्षिकां कूपिकां नगरीसंबन्धिनीं सुदक्षामेकां, तेन तदनुमार्गलग्नोऽसावस्मदीयकूपः पुरीं समभ्येतीति अनेन प्रकारेण निवर्त्तनमस्या आज्ञायाः । यथा न राजा कूपिकां प्रेषयितुं पटुस्तथा तेऽपि स्वकमवटमित्यनपराधतैव तेषामितिभावः ॥ ६१ ॥ ७ ॥

**गामावरवणसंडं पुव्वं कुणहत्ति मीयय इमं तु । तत्तोऽवरेण ठवणं तेण निवेसेण गामस्स ॥ ६२ ॥**

ततः ग्रामादपरस्यां दिशि यो वनपण्डस्तं पूर्वं पूर्वदिग्भागवर्त्तिनं ग्रामात् कुरुत । इत्येवंरूपायामस्यां च नृपाज्ञायां पुनः इदं त्विदमेव वक्ष्यमाणलक्षणमुत्तरं तैः कृतम्, यथा, ततो वनपण्डादपरेण पश्चिमायां दिशि स्थापनं कृतं तेन निवेशेनैवाकारेणेत्यर्थो ग्रामस्य । एवं हि कृते पूर्वेण वनपण्डो ग्रामात्, अपरेण ग्रामश्च वनषण्डात् संपन्नः ॥ ६२ ॥ ८ ॥

**अग्गिं सूरं च विणा चाउलखीरेहिं पायसं कुणह । आदेसे संपाडणमुक्कुरुडुम्हाइ एयस्स ॥ ६३ ॥**

अग्निं वैश्वानरं सूरं चादित्यं विना अन्तरेण 'चाउलखीरेहिं'ति चाउलक्षीरैः चाउलैस्तण्डुलैः क्षीरेण च पयसा पायसं परमान्नं कुरुत । अस्मिन्नादेशे राजाज्ञारूपे आपतिते सति संपादनं कृतम् । कथमित्याह—उत्कुरुटिकोष्मणा उत्कुरुटिका नाम वहुकालसंमिलितगोमयादिकचवरपुञ्जस्तस्योष्मा उष्णस्पर्शलक्षणस्तेन एतस्यादेशस्य । रोहकादिष्टैस्तैर्निबिडं

---

१ क 'क्षेत्रादि–'। २ क '–माज्ञाया सत्यां'।

मृण्मयभाजनं मध्यनिक्षिप्तसमुचिततन्दुलदुग्धं विधायागाधे उत्कुरुटिकाक्षेत्रे निक्षिप्तम् । ततः कतिपयप्रहरपर्यन्ते सुपक्कं पायसं संजातं राज्ञश्च निवेदितमिति ॥ ६३ ॥ ९ ॥

**एमाइ रोहगाओ इमं ति नाऊण आणवे राया । आगच्छउ सो सिग्घं परिवज्जंतो इमे थाने ॥ ६४ ॥**

एवमादि शिलामण्डपसंपादनप्रभृति रोहकात्सकाशादिदं पूर्वोक्तं कार्यं संपन्नमित्येवं ज्ञात्वा आज्ञापयत्यादिशति राजा जितशत्रुः । कथमित्याह—आगच्छतु मम समीपे स रोहकः शीघ्रमविलम्बमेव, परं परिवर्जयन् परिहरन्निमानि स्थानानि एतानर्थानित्यर्थः ॥ ६४ ॥

तान्येवाह;—

**पक्खदुगं दिणराई छाउण्हे छत्तणह पहुम्मग्गे । जाणचलणे य तह ण्हाणमइलगो अण्णहागच्छ ६५**

पक्षद्विकं शुक्लकृष्णपक्षद्वयलक्षणं, दिनरात्री प्रतीतरूपे, छायोष्णौ छायामातपाभावरूपामुष्णं च चण्डकरकिरणलक्षणं, छत्रनभसी छत्रमातपवारणं नभश्च शुद्धमाकाशं, तथा पन्था मार्ग उन्मार्गश्चोत्पथः, मार्गमुन्मार्गं च परिहृत्येत्यर्थः, यानचलने च यानं गन्त्र्यादि चलनशब्देन चरणचेष्टा परिगृह्यते ततस्ते परिहृत्येत्यर्थः, तथाशब्दः समुच्चये, स्नानमलिनकः स्नाने सत्यपि मलिनको मलिनदेहः स्नातो मलाविलकलेवरश्च सन्नित्यर्थः । अन्यथा पक्षद्वयादिपरिहारवता प्रकारेणागच्छतु मत्समीपमिति ॥ ६५ ॥

स्वसमीपानयनार्थं-
नृपाज्ञी

ततोऽसौ रोहक एवमाज्ञापितो नरपतिना तदादेशसंपादनार्थमागन्तुं प्रारब्धः यथा;—

**अमवस्सासंधीए संझाए चक्कमज्झभूमीए। एडक्कगाईणंगोहलिं च काऊण संपत्तो ॥ ६६ ॥**

इह चन्द्रमासस्य द्वौ पक्षौ, तत्राद्यः कृष्णो द्वितीयश्च शुक्लः। तत्र च कृष्णपक्षोऽमावास्यापर्यन्तः, शुक्लश्च पौर्णमासीपरिनिष्ठितः। एवं चामावास्या पक्षसंधितया व्यवह्रियते। पौर्णमासी च माससंधितया ततोऽमावास्यैव संधिरमावास्यासंधिरग्रेतनपक्षात्यन्तसन्निधानलक्षणस्तस्मिन् संप्राप्त इति योगः। एवं च किल तेन पक्षद्वयं परिहृतं भवति। संध्यायामादित्यास्तमयलक्षणायाम्, अनेन दिनरात्रिपरिहारः। चक्रमध्यभूम्या चक्रयोर्गन्त्रीसंबन्धिनोर्गच्छतोर्या मध्यभूमिः प्रसिद्धरूपा तया एतेनापथमार्गपरिवर्जनम्। सो हि न पन्था नाप्युत्पथः। तथा 'एडकगायणंगोहलिं च काऊण' त्ति एडकादिना एडकेन आदिशब्दाद्दिनावसानसंभूतातपेन चालनिकाछत्रेण चोपलक्षितः सन्। अनेन यानचलनयोश्छायोष्णयोः छत्रनभसोश्च परिहारो विहितः। अंगोहलिमङ्गावक्षालनम्, चः समुच्चये, कृत्वा विधाय सर्वाङ्गप्रक्षालने हि स्नानमिति लोकरूढिः शिरःप्रक्षालनपरिहारेण चाङ्गावक्षालनम्। ततोऽङ्गावक्षालनमात्रे कृते न स्नातो नापि मलिनकः संप्राप्तो राजभवनद्वारे ॥ ६६ ॥

राजभवनद्वारप्राप्तेन च तेन "कथं रिक्तहस्तो राजानं द्रक्ष्यामि यत इत्थं नीतिविद्वचनम्;—"रिक्तहस्तो न पश्येत राजानं दैवतं गुरुम्" इति। नच नटानामस्माकमन्यत् पुष्पफलादि राजोपनयनयोग्यं मङ्गलभूतं किंचिदस्तीति विचिन्त्य–

पुढवीदरिसणविउलंजलीइ घेत्तुं नरिंदवंदणया । आसणदाणावसरे चडुपाढो मणहरसरेण ॥ ६७ ॥

'पुढवीदरिसण'त्ति पृथिव्याः कुमारमृत्तिकालक्षणाया दर्शनं पश्यतः सतो राज्ञः प्रयोजनं विपुलाञ्जलिस्थितायाः तेन कृतम् । 'घेत्तुं नरिंदवंदणया' इति ततो गृहीत्वा करेण नरेन्द्रेण वन्दना प्रणामः कृतो मृत्तिकायाः । तदनन्तरं च प्रणामादिकायामुचितप्रतिपत्तौ विहितायां सत्यां रोहकस्यासनदानस्य विष्टरवितरणस्यावसरे प्रस्तावे रोहकेण चडुपाठः प्रियवाक्योच्चारणं मनोहरेण स्वरेण मधुरगम्भीरध्वनिना कृतमिति ॥ ६७ ॥

चडुपाठमेव दर्शयति;—

गंधव्वमुरवसद्दो मा सुव्वउ तुह नरिंद! भवणम्मि । चंकम्मंतविलासिणिखलंतपयणेउररवेण ॥ ६८ ॥

गन्धर्वस्य गीतस्य मुरवस्य च मृदङ्गस्य शब्दो ध्वनिर्मा श्रूयतां समाकर्ण्यतां केनापि कृतावधानेनापि तव भवतः हे नरेन्द्र राजन्! भवने प्रासादे एवमुच्चरिते राजा यावत् किंचित् सवितर्कमनाः संजातस्तावदनेन झगित्येव लब्धराजाभिप्रायेण पठितम्,—चङ्क्रमतीनां कुटिलगत्या भृशं संचरन्तीनां विलासिनीनां स्खलन्तो विसंस्थुलभावभाजो ये पदाः पादास्तेषु यानि नूपुराणि तेषां यो रवः शिंजितलक्षणस्तेन चंक्रमद्विलासिनीस्खलत्पदनूपुररवेण । व्याजस्तुतिनामकोऽयमलंकारः ॥ ६८ ॥

सक्कारंतियसोवणविउद्धनिवकंबिपुच्छजग्गामि । किं चिंतिसि अइयालिंडिवट्टयं सा कुतो जलणा ॥६९॥

एवं स रोहकेण पठिते तुष्टमना नरनाथः 'सक्कारंतियसोवण'त्ति सत्कारं वस्त्रपुष्पभोजनादिप्रदानरूपं तस्य चकार । ततोऽसौ मार्गखेदपरिश्रान्ततया रात्रिवृत्तान्तोपलम्भनिमित्तमन्तिके स्वस्यैव समीपे स्वप्नं निद्रालाभरूपमनुज्ञातवान् । 'विउद्धनिवकंवि'त्ति प्रथमयामिनीयामान्ते च तदुत्तरदानकृतकौतुकेन वि- प्रथमयामिन्यामेव निर्भरनिद्राभाक् संपन्नः । तदनु 'पुच्छ'त्ति जागरितश्च सन् पृष्टः बुद्धेन कृतनिद्रामोक्षेण नृपेणाविबुध्यमानोऽसौ कंबिकया लीलायष्टिरूपया स्पृष्टः, "किं स्वपिसि त्वमिति" स च किल निद्रापराधभीरुतया प्राह—"जागर्मि, को हि मम तव पादान्तिकस्थस्य देव शय- नावकाशः ?" राजा,—यदि जागर्षि तर्हि कृतालापस्यापि मम झगिति किमिति नोत्तरं दत्तं त्वयेति ? रोहकः,—देव ! चिन्तया व्याकुलीकृतत्वात् । राजा,—किं चिन्तयसि ? रोहकः,—'अइयालिंडियवट्टयं'ति अजिकानां छगलिकानां या लिण्डिकाः पुरीषगोलिरूपास्तासां वृत्ततां वर्त्तुलभावं चिन्तयामि । राजा,—सा वृत्तता कुतो निमित्तादिति निवेदयतु भ- वानेव । रोहकः,—देव, ज्वलनादुदरवैश्वानरात् । स हि तासामुदरे ज्वलंस्तथाविधवातसहाय उपजीवितमाहारं खण्डशो विधाय तावत्तत्रैवोदरमध्ये लोलयति यावत् सुपक्काः सवृत्ताश्च पुरीषगोलिकाः संपन्ना इति ॥ ६९ ॥ १० ॥

**एवं पुणोवि पुच्छा आसोत्थपत्तपुच्छाण किं दीहं ?। किं तत्तमित्थ, दोण्णिवि पायं तुल्लाणि उ हवंति**

प्रथमप्रहरपर्यवसाने इव द्वितीययामान्ते पुनरपि कम्बिकास्पर्शद्वारेण प्रतिबोध्य तं, राज्ञा पृच्छा कृता, यथा—किं चिंतयसीति ? रोहकः,—'आसोत्थपत्तपुच्छाण किं दीहं'इति अश्वत्थः पिप्पलस्तत्पत्रस्य तत्पुच्छस्य च किं दीर्घमिति । राजा,—किं तत्त्वमत्रेति कथयतु भवानेव । रोहकः,—द्वे अपि प्रायो बाहुल्येन तुल्ये एव भवतः । प्रायोग्रहणं कस्य-

चित् कदाचित् किंचिदतुल्यभावेऽपि न विरोध इति ख्यापनार्थम् । इयं च गाथा प्रथमार्द्धे पंचमात्रसप्तमांशा एव "बहुला विचित्रा" इति वचनान्न दुष्यति, बहुलेति पंचमात्रगणयुक्ता इति ॥ ७० ॥ ११ ॥

**एवं पुणोवि पुच्छा खाडहिलाकिण्हसुक्करेहाण । का बहुगा का तुल्ला? पुच्छसरीराणमन्ने उ ॥ ७१ ॥**

एवं पुनरपि तृतीयप्रहरान्ते पृच्छा पूर्ववत् । रोहकः—खाडहिलायाः खिल्लहडिकेति लोकप्रसिद्धनामकस्य भुजपरिसर्पजीवविशेषस्य शरीरे कृष्णरेखाणां शुक्लरेखाणां च मध्ये का अधिका बह्व्यः । राजा,—का इति कास्तत्र बहुका इत्यभिधेहि त्वमेव । रोहकः—तुल्याः समानसंख्याः कृष्णाः शुक्लाश्च रेखाः । अत्रैव मतान्तरमाह,—'पुच्छसरीराणमन्ने उ' इति, अन्ये पुनराचार्याः पुच्छशरीरयोः खाडहिलाया एव संबन्धिनोः कतरद्दीर्घमिति चिन्तितं रोहकेण । राज्ञा पृष्टेन च तेनैव द्वे अपि समे इति प्रतिपादितमित्याहुः ॥ ७१ ॥ १२ ॥

**चरिमाइ कइ पिया ते के पण के रायधणयचंडाला । सोहगविच्चुग जणणी पुच्छा एवंति कहणा य ७२**

'चरिमाइ' इत्यादि चरमायां यामिन्यां पश्चिमप्रहरपर्यन्तभागरूपायां पूर्वरात्रिबहुजागरणाल्लब्धातिस्वादुनिद्रो रोहकः कम्बिकास्पर्शनातिरेकवशेन प्रतिबोधितः सन्नवदत्, यथा—'कइ पिया ते' इति कति कियन्त पितरो जनकास्तव हे राजन्! वर्त्तन्त इति चिन्तयामि । राजा,—के इति कति मे जनका इति निवेदयितुमर्हसि त्वमेव । रोहकः—'पण'त्ति पञ्च । राजा,—के इति किंरूपाः। रोहकः;—राजधनदचण्डालाः 'सोहगविच्चुग'त्ति शोधको वस्त्रप्रक्षालको वृश्चिकश्चेति ।

ततो राज्ञा मंदेहापन्नचेतसा जननीपृच्छा कृता यथा किमेवं मे पञ्च पितरः? तयापि एवमिति यथा रोहकः प्राह कथना न तथैव निवेदनं कृतं पुनः ॥ ७२ ॥ १३ ॥

तानेव महेतुकान् सा दर्शयति;—

**राया रइवीएणं धणओ उउण्हायपुज्जफासेणं । चंडालरयगदंसण विच्चुगमरहस्सभक्खणया ॥ ७३ ॥**

'राया' इत्यादि राजा तावद्रतिवीजेन सुरतकाले वीजनिक्षेपरूपेण १, धनदः कुवेरः 'उउण्हायपुज्जफासेणं'ति ऋतुस्नातया चतुर्थदिवसे तस्य पूजायां कृतायां मनोहरतदाकाराक्षिप्तचित्तया यः स्पर्शस्तस्यैव सर्वाङ्गमालिङ्गनं तेन २, 'चंडालरयगदंसण'त्ति चण्डालरजकयोः ऋतुस्नाताया एव तथाविधप्रघट्टकवशादर्शनमवलोकनं मनाक्संयोगाभिलापश्च मे संपन्न इति तावपि पितरौ ३-४, 'विच्चुगमरहस्सभक्खणया' इति अत्र मकारोऽलाक्षणिकः ततो वृश्चिको रहस्यभक्षणेन रह एकान्तस्तत्र भवं रहस्यं तच्च तद्भक्षणं च तेन जनकः संपन्नः। मम हि पुत्र! त्वय्युदरगते वृश्चिकभक्षणदोहदः समजनि। संपादितश्चासौ रहसि कणिकामयस्य तस्य भक्षणेनेत्यसावपि मनाग् जनकत्वमापन्नः ॥ ७३ ॥

**कारणपुच्छा, रज्जं णाएणं दाणरोसदंडेहिं । कंविच्छिवणा य तहा रायादीणं सुतोसित्ति ॥ ७४ ॥**

एवं जनकसंख्यासंवादे संपन्नविस्मयेन राज्ञा कारणगोचरा पृच्छा कृता, यथा केन कारणेन त्वयाऽयमर्थोऽत्यन्तनिपुणधियामपि वुद्धेरगोचरो ज्ञात इति?। रोहकः,—राज्यं प्रतीतरूपमेव न्यायेन नीत्या सामादिप्रयोगरूपया यत् परि-

पालयसि, तथा दानरोषदण्डैर्दानेन कृपणादिजनस्वविभववितरणरूपेण कुबेरधनत्यागानुकारिणा, रोषेण क्वचिद्विनयवर्त्तिनि जने चण्डालचाण्डिक्यकल्पेनासहिष्णुतालक्षणेन, दण्डेन पूर्वराजनिरूपितनीतिपथप्रमाथिनो जनस्य सर्वस्वापहाररूपेण वस्त्रशोधकविधीयमानवस्त्रक्षालनतुल्येन, 'कम्बिच्छिवणा य'त्ति कम्बिकाच्छोपनाच्च कम्बिकया लीलायष्ट्या पुनः पुनर्मम विघट्टनाच्च, तथाशब्द उक्तसमुच्चये, राजादीनां सुतोऽसि त्वं हे राजन्निति । नयेनैवंविधप्राज्यराज्यपरिपालनाज्ज्ञायसे यथा राजपुत्रस्त्वम्, न हि अराजजाता एवंविधानवद्यराज्यभारधुराधरणधौरेया भवितुमर्हन्ति । एवं दानेन धनदजातः, रोषेण चण्डालपुत्रः, दण्डेन वस्त्रशोधकप्रसूतः, कम्बिकाघातेन च वृश्चिकापत्यम्, कारणस्वरूपानुकारित्वात् सर्वकार्याणाम् ॥ ७४ ॥

**साहुपरिग्गह संधण कोवो अण्णेणऽसज्झ पेसणया। धम्मोवायणसाहण वुग्गह णिवकियगकोवो उ ७५**

ततस्तदीयबुद्धिकौशलावर्जितेन नृपतिना 'साहुपरिग्गह'त्ति साधुः शोभनोऽयमिति मत्वा परिग्रहः स्वीकारः कृतस्तस्य। तस्मिंश्च समये केनचिदनन्तरभूमिवासिना भूपालेन सह कुतोऽपि निमित्ताद्वैरं लग्नमासीन्नृपस्य। तत्रच 'संधण'त्ति संधानं कर्तुमभिलषितं राज्ञा । न चासौ तत् प्रतिपद्यत इति तं प्रति 'कोवो'त्ति कोपः समजनि जितशत्रोः। ततः 'अण्णेणसज्झपेसणया' इति अन्येन रोहकव्यतिरिक्तेनासावसाध्यः साधयितुमशक्य इति कृत्वा रोहकस्य तत्र प्रेषणं कृतं भूभुजा । प्राप्तश्च तत्र रोहकः । पृष्टश्च स प्रत्यर्थी नृपः । समये च 'धम्मो वायणसाहण'त्ति यदासौ तैस्तैरुपायैरुच्यमानोऽपि अविश्वासान्न संधानमनुमन्यते तदा धर्म एवोपायनं ढौकनीयं तेन साधनं स्ववशीभावकरणं रोहकेण तस्य कृतम् । अयमत्र

भावः—इदमुक्तं रोहकेण तं प्रति, यदि स मदीयो नृपो भवद्भिः सह संधाय पश्चात् किंचिद् व्यभिचरति तदा तेन यत्तीर्थगमनदेवभवनसंपादनद्विजादिप्रदानवापीतडागादिखननादिना विधानेनोपार्जितो धर्मः स सर्वो मया भवते दत्तः, तद्रहितश्चासाविहलोकपरलोकयोर्न किंचित्कल्याणमवाप्स्यतीति करोतु भवांस्तेन सह संधानम्। न ह्येवंविधां प्रतिज्ञां कश्चिद् भनक्ति। एवं विश्वासिते तस्मिन् 'वुग्गह'त्ति व्युद्ग्रहोऽवस्कन्दो धाटिरित्यर्थः छलेन तत्र गत्वा राज्ञा संपादितः। स्वहस्तगृहीतश्चासौ कृतो द्विपन्। आनीतश्चोज्जयिन्याम्। तत्र च चिन्तितं तेन, कथमनेन राज्ञा आत्मीयधर्मस्य मत्प्रदानेन व्ययः कृतः। इति तस्य मिथ्याविकल्पापनोदाय 'निवकियगकोवो'त्ति नृपेण जितशत्रुणा रोहकं प्रति कृतकः कृत्रिमः पुनः कोपः कृतः ॥ ७५ ॥

धम्मो मे हारविओ काऊणन्नतणओ तओ दिण्णो। कह होइ मज्झ एसो जह तुह तणओ उ तस्सेव॥७६

ततो रोहकेणाभ्यधायि—किमर्थमस्मान्निरपराधानपि प्रतीत्य देवेन इयान् कोपः कृत इति। तत्रोक्तं पृथिवीपतिना 'धम्मो मे हारविओ काऊण'त्ति धर्मो मम हि यस्त्वया हारित इति कृत्वा। ततो रोहकेणान्यसत्को महर्षेः कस्यचित् संबन्धी तको धर्मो दत्तो राज्ञे। अयमभिप्रायः—देव! यदि मया दत्तो धर्मस्त्वदीयोऽन्यत्र प्रयाति, तदाऽनेन महर्षिणा आबालकालाद् यदनुष्ठितो धर्मः स मया तुभ्यं वितीर्ण इति नास्ति मयि कोपस्यावकाशः प्रभोः। राजा;—कथं भवति मम एष धर्मो महर्षिसत्को यतो मया न कृतो नापि कारित इति? रोहकः; यथा तवतनकस्त्वत्संबन्धी पुनर्धर्मः तस्यैव विपक्षभूपतेरभून्मया वितीर्णः सन्निति ॥ ७६ ॥

**जीवणदाणे पेसण–तदण्णवुग्गहगहाण, तेसिं तु । अपुत्तग्गहगोग्गहनिमित्ततित्थं तओ धाडी॥७७॥**

ततः सुप्रसन्नमानसेन जितशत्रुणा रोहकाय जीवनदाने परिपूर्णनिर्वाहस्थानवितरणे कृते सति 'पेसण'त्ति प्रेषणं कृतं रोहकस्यैव । किमर्थमित्याह,–'तयन्नवुग्गहगहाण'त्ति व्युद्ग्रहे विवादे कुतोऽपि हेतोरुत्पन्ने सति ग्रहो लोकप्रसिद्ध एव उज्जयिनीविषयमध्यवर्त्तिनो द्विपदचतुष्पदादेरर्थस्य येषां ते व्युद्ग्रहग्रहाः पर्वतवनादिव्यवस्थितपल्लिवासिनो लोकास्तस्मान्नृपादन्ये च तदन्ये ते च व्युद्ग्रहग्रहाश्च तदन्यव्युद्ग्रहग्रहास्तेषां संग्रहनिमित्तमिति गम्यते । यदा च ते सुखेन संग्रहीतुं न शक्यन्ते तदा तेषां तु संग्रहनिमित्तं पुनरपुत्रग्रहगोग्रहनिमित्ततीर्थं प्रज्ञप्तमिति गम्यते, यथा—"अपुत्रस्य गृहीतस्य शत्रुभिर्गवां च यन्मोचनं तन्महत्तीर्थमिति पूर्वमुनयो व्याहरन्ति" इति प्रज्ञप्ते उज्जयिनीराजबलेन रोहकप्रयुक्तेन बलघातिना पल्लिसंबन्धिनीषु गोषु गृहीतासु तन्मोचनाय पल्लीभिल्लेषु निर्गतेषु शून्यासु पल्लीषु ततो धाटी निपातिता । बहिर्निर्गताश्च ते गृहीता इति ॥ ७७ ॥

ततः—

**वीसासाणण पुच्छा सिट्ठं हियएणमप्पमत्तो उ । तह धम्मिगो सपुण्णो अभओ परचित्तनाणी य ७८**

विश्वासानयने सर्वेषां सामन्तमहामात्यादीनामात्मविषये विश्वासे समुत्पादिते सति रोहकेण, पृच्छा राज्ञा तेषां कृता, यथा—कीदृशो रोहको भवतां चित्ते वर्त्तत इति? । तैश्च शिष्टं हृदयेन भावसारमित्यर्थः, यथा देव! एकान्तेनैव देवका-

यं ग्रमत्तस्त्वप्रमत्त एव । तथाशब्दः समुच्चये, धार्मिकः स्वपक्षपरपक्षयोरप्यनुपद्रवकरः । सपुण्यः पुण्यवान् । अभयो निर्भयो निःशङ्कं विपक्षमध्ये प्रवेशात् । परचित्तज्ञानी च अन्यानध्यवसेयपराभिप्रायपरिज्ञानवांश्च ॥ ७८ ॥

**तुट्ठो राया सव्वेसिमुवरि मंतीण ठाविओ एसो । परिपालियं च विहिणा तं वुद्धिगुणेण एएणं॥७९॥**

एवं तस्य विचित्रैश्चित्रीयितविद्वज्जनमानसैश्चरितैस्तुष्ट आक्षिप्तचेता राजा जितशत्रुः संपन्नः । ततस्तेन सर्वेषामेकोनपञ्चशतप्रमाणानामुपरि अग्रेसरतया शिरसि नायकत्वेनेत्यर्थः, मन्त्रिणाममात्यानां स्थापितः प्रतिष्ठितः एष रोहकः । परिपालितं च निष्ठां नीतं पुनर्विधिना स्वावस्थौचित्यरूपेण मन्मन्त्रिनायकत्वं वुद्धिगुणेन औत्पत्तिकीनामकमतिसामर्थ्येन करणभूतेन एतेन रोहकेण, सर्वगुणेषु वुद्धिगुणातिशायित्वात् । यतः पठ्यते;—"श्रियः प्रसूते विपदो रुणद्धि यशांसि दुग्धे मलिनं प्रमार्ष्टि । संस्कारशौचेन परं पुनीते शुद्धा हि वुद्धिः कुलकामधेनुः ॥ १ ॥ उदन्वच्छन्ना भूः स च निधिरपां योजनशतं, सदा पान्थः पूषा गगनपरिमाणं कलयति । इति प्रायो भावाः स्फुरदवधिमुद्रामुकुलिताः, सतां प्रज्ञोन्मेषः पुनरसमसीमा विजयते ॥ २ ॥" इति ॥ ७९ ॥ १ ॥

व्याख्यातं सप्रपञ्चं भरहसिलेत्ति द्वारम् । अथ पणियत्ति द्वारम्;—

**पणिए पभूतलोमसि भक्खणजय दारणिप्फिडगमोए । चक्खण खद्धा विक्कय भुयंग दारे अणिप्फेडो**

'पणिए' इति द्वारपरामर्शः । कश्चिद् ग्रामेयकः स्वभावत एव मुग्धवुद्धिः क्वचिन्नगरे धूर्तलोकवहुले 'वहूयलोमसि'त्ति

बहुकाः शकटभरप्रमाणा लोमसिकाः कर्कटिकाः समादाय विक्रयार्थं गतवान् । तासु च विपणिपथावतारितासु केनचिद्धूर्त्तेन स उक्तः, यथा—'भक्खणजय'त्ति यदि कश्चिदेताः सर्वा भक्षयति तदा त्वं किं तेन जीयसे? तेन चासंभाव्योऽयमर्थ इति मनसि मत्वाऽसंभवनीयमेव पणितकं निबद्धं, यथा 'दारणिप्फिडगमोए' इति यो नगरद्वारेण मोदको न निर्गच्छति तं तस्य प्रयच्छामि । ततस्तेन तल्लोमसिकाशकटमारुह्य 'चक्खण'त्ति दन्तनिर्भेदमात्रेण 'खद्ध'त्ति सर्वासामपि तासां भक्षणं कृतम् । 'विक्कय'त्ति विक्रेतुमारब्धश्चासौ ताः, नच लोको गृह्णाति 'भक्षिताः केनाप्येताः' इति प्रवदन् सन् । ततो धूर्त्तेन लोकप्रवादसहायेन जितो ग्रामेयकः । तदनु तं मोदकं याचितुमारब्धः । ग्रामेयकश्च अशक्यदानोऽयं मोदक इति कृत्वा तस्य रूपकं प्रयच्छति, स नेच्छति, एवं द्वे त्रीणि यावच्छतमपि नेच्छत्यसौ । चिन्तितं च ग्रामेयकेण—नैतस्माद्धूर्त्तान्मम कथंचिन्मुक्तिरस्ति इति निपुणबुद्धिपरिच्छेद्योयं व्यवहारः, 'चतुरबुद्धयश्च प्रायो द्यूतकारा एव भवन्ती'ति तानेवावलगामि । तथैव च कृतं तेन । पृष्टश्चासौ तैः, यथा—भद्रक! किमर्थमस्मान्निरन्तरमासेवसे त्वं? । भणितं च तेनै, यथा—ममैवंविधं व्यसनमायातमिति । ततो 'भुयंग दारे अनिप्फेडो'इति भुजङ्गैर्द्यूतकारैरसावेवं शिक्षितो यथा पूतिकापणे मुष्टिप्रमाणमेकं मोदकं गृहीत्वा तद्धूर्तसहायः शेषनगरलोकसहायश्च प्रतोलीद्वारे गत्वा इन्द्रकीलस्थाने तं विमुच्य प्रतिपादय यथा निर्गच्छ भो मोदक! इति । विहितं च तेनैवं, परं द्वारे मोदकस्य अणिप्फेडो निष्काशनाभावः संपन्नः । प्रतिजितश्चासौ तेन । एवं च द्यूतकाराणामौत्पत्तिकीबुद्धिरिति ॥ ८० ॥

अथ रुक्खे इति द्वारम्;—

रुक्खे फलपडिबंधो वाणरएहिं तु लेट्ठुफलखेवो। अण्णे अभरकणिज्जा इमे फला पंथवहणाओ ॥८१॥

'रुक्खे' इति द्वारपरामर्शः। फलानां गृह्यमाणानां प्रतिबन्धः प्रतिस्खलना। केभ्य इत्याह—वानरकेभ्यस्तु कपिभ्य एव। इदमुक्तं भवति—क्वचित् पथि फलप्राग्भारनम्रशाखासंभारः कश्चिदाम्रादिर्महाद्रुमः समस्ति। तत्समीपेन च निरन्तरं तत्तत्प्रयोजनाक्षिप्तः पथिकलोको गच्छन्नागच्छंश्च पक्कान्यवलोक्य तत्फलानि बुभुक्षाक्षामकुक्षितया गृहीतुमारभते। परं तच्छाखामारूढातिचपलकपिकुलेन प्रतिस्खलितो न तानि गृहीतुं शक्नोति 'लेट्ठुफलखेवो'त्ति—अन्यदा च केनचिन्निपुणबुद्धिना पथिकेन लेष्टुक्षेपः कृतो मर्कटाभिमुखं, तदनु कोपावेगव्याकुलीकृतमानसैस्तैस्तत्प्रतिघाताय तानि फलानि क्षिप्तानि। एवं च परिपूर्णमनोरथः समजनि पथिकः। इति तस्यौत्पत्तिकी बुद्धिरिति। अत्रैव मतान्तरमाह—अन्ये आचार्या वृक्षद्वारमित्थं व्याख्यान्ति—यथा कैश्चित्पथिकैः क्वापि प्रदेशे केनाप्यनुपजीवितफलान् वृक्षानालोक्य चिन्तितम्, यथा—अभक्षणीयानि इमानि फलानि वर्त्तन्ते कुतः, 'पंथवहाणाओ' इति पान्थवहनात् पथिकलोकस्यानेन मार्गेण गमनादागमनाच्च। यदि ह्येतानि फलानि भक्षयितुं योग्यान्यभविष्यंस्तदा केनाप्यवश्यमभक्षयिष्यन्त, न च केनापि भक्षितानि तन्नूनमभक्ष्याणि। इति पथिकानामौत्पत्तिकी बुद्धिरिति॥ ८१ ॥

अथ खड्गत्ति द्वारम्;—

खड्गमंतिपरिच्छा सेणियगम सुमिण सेट्ठि णंद भए। मुद्दा कूवतडग्गह छाणुग जणणीपवेसणया ८२

रायगिहं इह नयरं समत्थि नयरम्मपरिसरुद्देसं । राया तत्थ पसेणइयनामगो पालई य रज्जं ॥ १ ॥ सेणियनामा पुत्तो जुत्तो निवलक्खणेहिं सव्वेहिं । सयलसुएसु पहाणो तस्सासि सहावओ गुणवं ॥ २ ॥ पोरिससज्जं रज्जं पुन्ने संतेवि एस जणवाओ । तो काहामि परिक्खं सुयाण इय चिंतिउं रण्णा ॥ ३ ॥ अन्नदिणे सव्वेवि हु भणिया तणया जहा मिलिय-गेहिं । तुब्भेहिं भोत्तव्वं एवं पीई कया हवई ॥ ४ ॥ जं भणइ महाराओ तं कायव्वं ति मउलियकरेहिं । पडिसुयमिमेहिं समए उवविट्ठा भोयणस्स कए ॥ ५ ॥ तत्तो य भायणाइं पायसभरियाइं तेसिं दिन्नाइं । जाव पवत्ता भोत्तुं मुक्का पारद्धिसुणगाओ ॥ ६ ॥ सद्दूलरुद्दचरणा थालाभिमुहं समागया जाव । सेणियवज्जकुमारा ताव भएणं पलाया ते ॥ ७ ॥ सेणियकुमरेण पुणो घेत्तूणं तेसिं ताइं थालाइं । खित्ताइं अभिमुहाइं लग्गा ते पायसे तम्मि ॥ ८ ॥ भुत्तं नियथालगयं पायसमेएण धीरचित्तेण । दिट्ठो एस वइयरो निवेण तो तम्मि संतुट्ठो ॥ ९ ॥ नूणं सुनिउणबुद्धी एस कुमारो जमेव वसणेवि । नो चुक्को नियकज्जा धरिया सुणगावि संतोसे ॥ १० ॥ एवं रज्जाउ इमो खोहिज्जंतोवि अन्नराईहिं । नो रज्ज-परिच्चायं काही दाणप्पयाणाओ ॥ ११ ॥ ता संपइ नो गोरवजोग्गो एसो जओ इमे कुमरा । उप्पन्नमच्छरा मारिहिंति एयंति मुणिऊण ॥ १२ ॥ दिट्ठो अवधूयगईए सेणिओ तो न जुत्तमिह मज्ज । इय चिंतिय परिचलिओ कुमरो देसंतरा-भिमुहो ॥ १३ ॥ पत्तो विन्नाइ नईइ तीरभागप्पइट्ठियत्तेण विन्नायडाभिहाणे पुरम्मि परपउरजणकलिए ॥ १४ ॥ परि-मियनियभिच्चेहिं—पसंगओ संगओ पविट्ठो य । अब्भिंतरम्मि तत्तो पत्तो एगस्स सेट्ठिस्स ॥ १५ ॥ खीणविहवस्स हट्ट-म्मि तत्थ लद्धासणो समुवइट्ठो । दिट्ठो आसि निसाए जहाऽऽगओ मम गिहे जलही ॥ १६ ॥ सुविणो मणोहरो इय

गूणं तप्फलमिमं ति चित्तेण। संतुट्ठो सो सेट्ठी तम्मि दिणे तस्स पुन्नेहिं ॥ १७ ॥ पट्टणसंखोहकरो महो पयट्टो तओ जणो नउओ। कुंकुमचंदणधूयाइकिणणकज्जेण हट्टम्मि ॥ १८ ॥ ओइन्नो अइबहुयं विढत्तमसढाए तेण नीईए। पच्छा भोयण-काले उट्ठिउकामेण सो पुट्ठो ॥ १९ ॥ कस्स इहं पाहुणगा तुम्हे, तेणावि तुम्ह भणियमिणं । नीओ घरम्मि उचिया विहिया सयलत्थपडिवत्ती ॥ २० ॥ तो तस्स वयणकोसलसुभगत्तणविणयसुयणभावेहिं । अक्खित्तमणो सिट्ठी धूयं नंदं नियं देइ ॥ २१ ॥ परिणाविओ पबंधेण भूरिणा जणियजणपमोएणं । तक्कालोचियसंपन्नसबकज्जो समं तीए ॥ २२ ॥ अच्चंतणुरत्ताए सुविणम्मिवि विप्पियं मुणंतीए । एत्तो च्चिय विणयपरायणाए मिउमहुरवयणाए ॥ २३ ॥ लग्गो भोगे भोत्तुं मोत्तुं सवाओ सेसचिंताओ । अइजामाउयवच्छलससुरजणाणीयसम्माणो ॥ २४ ॥ सुहपासुत्ता पेच्छइ अहन्नया सुविणयंम्मि सा नंदा हरहासकासधवलं चउदसणं ऊसियकरं च ॥ २५ ॥ नियवयणे पविसंतं मत्तंगयकलहमेगमह बुद्धा तक्खणमेव निवेइय पइणो तेणावि सा भणिया ॥ २६ ॥ उचियसमएण होही ते पुत्तो पुन्नलक्खणो दइए! । सुरवासा चविऊणं सपुन्नसेसो सुरो एगो ॥ २७ ॥ तो सुहलग्गे लग्गे सुपसत्थे वासरम्मि संलग्गो। गब्भो तीए अइपोढपुन्नपब्भा-रलब्भो त्ति ॥ २८ ॥ एवं वच्चइ कालो जा ताव पसेणईय नरनाहो। जाओ असमत्थतणू गवेसणा सेणियस्स कया ॥ २९ ॥ नाओ जहा बिन्नायडपुरम्मि सो संपयं सुहं वसइ । तो तस्साणयणकए विसज्जिया तक्खणं चरया ॥ ३० ॥ पत्ता तस्स समीवे निवेइयो वइयरो य रायगओ। गमणुम्मणो य जाओ तो तक्खणमेव सो कुमरो ॥ ३१ ॥ अह आ-पुच्छइ सेट्ठिं नियजणगगिहं पओयणवसाओ । वच्चामि संपइ अहं संतुट्ठमणा विसज्जेह ॥ ३२ ॥ भणिया य तेण नंदा

अम्हे रायग्गिहम्मि गोवाला । वाले! पंडुरकुड्डा जइ कज्जं तत्थ एज्जाहि ॥ ३३ ॥ पत्तो जणयसमीवम्मि सेणिओ पाविय़ं च तं रज्जं । सव्वो आणासज्जो सज्जो जाओ परियणोवि ॥ ३४ ॥ नंदाए पुण तइए मासे गब्भाणुभावओ जाओ । अइविमलो दोहलओ कहिओ तीए य सेट्ठिस्स ॥ ३५ ॥ जइ ताय! हत्थिखंधारूढा छत्ते धरिज्जमाणम्मि । नयरे सब्बाहिरब्भंतरम्मि हिंडामि अभयं च ॥ ३६ ॥ घोसिज्जंतं महया सरेण निसुणामि तो ममं तोसो । संपज्जइ अइबहुओ अन्नह मे जीवियच्चाओ ॥ ३७ ॥ तो सुट्ठुतुट्ठचित्तेण सेट्ठिणा भरियरयणभाणेण । दिट्ठो राया तेणावि मन्निओ कुणह जहइच्छं ॥ ३८ ॥ वरकरिखंधगया सा सियछत्तच्छन्ननहयलाभोगा । निसुणंती अभउग्घोसणं च परिहिंडिया नयरिं ॥३९॥ संमाणियदोहलया निच्चमणुव्विग्गमाणसा धणियं । सा साहियनवमासावसाणसमयम्मि य पसूया ॥ ४० ॥ देवकुमारागारं दारगमइरेगलोयणाणंदं । विहिओ जम्ममहो सेट्ठिणावि तक्कालजोग्गो जो ॥ ४१ ॥ पत्तम्मि पवित्तदिणे विहियं नामं सुयस्स अभओ त्ति । संजाओ जणणीए इमस्स जं अभयमोहलओ ॥ ४२ ॥ तो सुक्कपक्खससिमंडलं व सो वड्डिओ समाढत्तो । जाओ य अट्ठवरिसो बहुबंधुरबुद्धिरिद्धिल्लो ॥ ४३ ॥ पुच्छइ पत्थाववसा अम्मो! मे कत्थ परिवसइ ताओ? भणियं रायगिहपुरे सेणियनामा स नरनाहो ॥ ४४ ॥ ताहे भणिया जणणी अम्मो! नो एत्थ अत्थिउं जुत्तं । सुपसत्थसत्थसहिओ पिउगेहं पत्थिओ तत्तो ॥ ४५ ॥ पत्तो रायगिहवहिं सिविरनिवेसेण ठाविया जणणी । तत्थप्पणा पुण गओ नगरस्सब्भंतरं अभओ ॥ ४६ ॥ तम्मि समयम्मि राया अच्चब्भुयभूयबुद्धिसंपन्नं । मंतिं मग्गइ सव्वायरेण तो तस्स लाभकए ॥ ४७ ॥ नियय़ं अंगुलिमुदारयणं खित्तं महावडे गहिरे । अच्चंतं सुक्कसिरत्तणेण जलवज्जियतलम्मि ॥ ४८ ॥

भणिओ य नयरलोगो तडे निविट्ठो करेण जो गहिही । एयं तस्स जहिच्छिय वित्तिपयाणं करेमि अहं ॥ ४९ ॥ लग्गो लोओ लाओ विविहोवायप्पओगसंजुत्तो । न य फुरइ उवाओ कोवि तारिसो, जेण तग्गहणं ॥ ५० ॥ पत्तो अभयकुमारो तद्देसं, पुच्छियं किमेयं ति? कहिओ जणेण सव्वो वुत्तंतो जो कओ रन्ना ॥ ५१ ॥ फुरिओ तक्खणमेयस्स एयपडिग्गाहगो उवाओ त्ति । खित्तो य अल्लगोमयपिंडो तस्सोवरिं सहसा ॥ ५२ ॥ खुत्तं तं झत्ति तहिं जलंतगो तणमओ तओ पूलो खित्तो तस्सुण्हाए सुक्को सो गोमओ सव्वो ॥ ५३ ॥ तीरट्ठियकूवंतरसारणिसलिलेण पूरिओ अगडो । तो तेणं सो गोमयपिंडो उच्छालिओ दूरं ॥ ५४ ॥ पत्तो उवरिपएसे गहिओ अभएण तडनिविट्ठेण। आयड्ढियं च तत्तो तं खित्तं मुद्दियारयणं ॥ ५५ ॥ नीओ रायसमीवे तक्कज्जनिउत्तगेहिं पुरिसेहिं । आपुच्छिओ य रण्णा पयपणओ को सि वच्छ! तुमं? ॥ ५६ ॥ सो भणइ तुम्ह पुत्तो किह कत्थ व पूच्छिओ निवेएइ । सव्वं विन्नायडनयरसंतियं पुव्ववुत्तंतं ॥ ५७ ॥ हरिसजलपूरियच्छो उच्छंगेऊण नियवच्छम्मि । पुलयंकुरपरियरिओ पुणो पुणो तमवगूहेइ ॥ ५८ ॥ पुट्ठो कत्थ तुहंबा? सो भणई देव! नयरबाहिम्मि । चलिओ सपरियरो तप्पवेसहेउं तओ राया ॥ ५९ ॥ विन्नायवइयराए नंदाए मंडिओ तओ अप्पा । अभएणं सा विनिवारिया य नो अंब! जुत्तमिणं ॥ ६० ॥ पइविरहियाउ सुकुलुग्गमाउ रामाउ जेण नेवत्थं । अच्चुब्भडं न गिण्हंति किंतु सुपसत्थमेव त्ति ॥ ६१ ॥ तो तक्खणाउ तीए वयणं पुत्तस्स मन्नमाणीए । गहिओ सो च्चिय वेसो जो पुव्विं आसि परिभुत्तो ॥ ६२ ॥ संपाडियपवरमहं ऊसियणाणापडायरेहिल्लं । अभओ रन्ना नयरं पवेसिओ जणणिसंजुत्तो ॥ ६३ ॥ लद्धो पवरपसाओ ठविओ सव्वेसिं उवरि मंतीणं । उप्पत्तियवुद्धिगुणेण

एस एवं सुही जाओ ॥ ६४ ॥ इति ॥ अथ संग्रहगाथाक्षरार्थः—'खड्डुग'त्ति द्वारपरामर्शः । 'मंतिपरिच्छा' इति मन्त्रिणः परीक्षायां प्रक्रान्तायां अभयो दृष्टान्तः । कथमयं जात इत्याह—'सेणियगम'त्ति श्रेणिकस्य कुमारावस्थायां पित्रावज्ञातस्य विन्नातटे गमो गमनमभूत् । 'सुमिणसेट्ठिनंदभए' इति तत्र चैकेन श्रेष्ठिना निशि स्वप्नो दृष्टो यथा रत्नाकरो मद्गृहमागतः । ततस्तेन नन्दाभिधाना दुहिता तस्मै दत्ता । तस्यां चासावभयकुमारं पुत्रमजीजनत् । प्रस्तावे च श्रेणिकः स्वराज्यं गतः । अभयकुमारोऽपि समये स्वजननीं बहिर्व्यवस्थाप्य राजगृहं प्रविशन् सन् 'मुद्दाकूव'त्ति मुद्रां खड्डुकमङ्गुलीयकमित्यर्थः कूपे पतितं ददर्श, लोकं च पप्रच्छ । स चावोचत्—यस्तटस्थित इदमादत्ते तस्मै राजा महान्तं प्रसादमाधत्ते इति । ततोऽभयकुमारेण 'छाणुग'त्ति छगणको गोमयस्तदुपरि प्रक्षिप्तः, उदकं च प्रवेशितम् । ततः कथानकोक्तक्रमेण गृहीतं तत् । राज्ञा च दृष्टः । तदनु 'जणणीपवेसणया' इति जनन्या अभयकुमारसवित्र्याः प्रवेशनं नगरे कृतं राज्ञा इति ॥ ८२ ॥

**पड जुण्णादंगोहलि वच्चय ववहार सीसओलिहणा । अण्णे जायाकत्तण तद्ण्णसंदंसणा णाणं ॥ ८३ ॥**

'पट' इति द्वारपरामर्शः । 'जुन्नादंगोहलि'त्ति—किल कौचित् द्वौ पुरुषौ, तयोरेकस्य जीर्णः पटोऽन्यस्य चादिशब्दादितरः प्रावरणरूपतया वर्त्तते । तौ च क्वचिन्नद्यादिस्थाने समकालमेवाङ्गावक्षालं कर्त्तुमारब्धौ । तदेवं मुक्तौ पटौ । 'वच्चय'त्ति तयोर्जीर्णपटस्वामिना लोभेन विपर्ययो व्यत्यासश्चक्रे नूतनपटमादाय प्रस्थित इत्यर्थः । द्वितीयश्च तं निजं पटं याचितुमारब्धः । अवलसश्चानेन । संपन्नश्च तयो राजभवनद्वारे कारणिकपुरुषसमीपे व्यवहारः । ( ग्रं० २००० ) कार-

णिकैश्च किमत्र तत्त्वमित्यजानद्भिः 'सीसओलिहणा' इति शीर्षयोस्तन्मस्तकयोः कङ्कतकेन अवलेखना परोमलाभार्थं कृता । लब्धानि च रोमाणि । ततस्तदनुमानेन यो यस्य स तस्य वितीर्ण इति कारणिकानामौत्पत्तिकी बुद्धिरिति । अत्रैव मतान्तरमाह;—अन्ये आचार्या ब्रुवते, 'जाया कत्तण'त्ति तौ पुरुषौ कारणिकैः पृष्टौ यथा केनैतौ भवतोः पटौ कर्त्तितौ? प्राहतुः—निजनिजजायाभ्याम् । ततो द्वयोरपि जाये कर्त्तनं कारिते । ततस्तदन्यसंदर्शनाद् व्यत्ययेन सूत्रकर्त्त-नोपलम्भाज्ज्ञानं निश्चयः कारणिकानां संपन्नो, वितीर्णश्च यो यस्य स तस्येति ॥ ८३ ॥

अथ सरडेत्ति द्वारं;—

**सरडहिगरणे सन्नावोसिरदरि वाहि दंसणावगमो। अण्णे तवणिगचेल्लणाण पुच्छाइ पुरिसादी ॥८४॥**

इह किल कश्चिद्वणिक् क्वचिद् बहुरन्ध्रायां भुवि पुरीषमुत्स्रष्टुमारब्धः। तत्र च दैवसंयोगात् 'सरडहिगरणे' इति द्वयोः सरटयोरधिकरणं युद्धमभूत् । तत्र चैकः 'सन्नावोसिरदरि'त्ति संज्ञां व्युत्सृजतो वणिजः पुच्छेनापानरन्ध्रमाच्छोट्य तदधो-भागवर्त्तिन्यां दर्यां प्रविष्टः । अन्यस्तु तद्दृष्ट एव पलाय्यान्यत्र गतः । एवं च तस्यात्यन्तमुग्धमतेः शङ्का समुत्पन्ना;—यद्यमेकः सरटो नोपलभ्यते तन्नूनं ममापानरन्ध्रेणोदरं प्रविष्टः इत्येवं शङ्कावशेन 'वाहि'त्ति व्याधिस्तस्याभूदुदरे । निवेदितं च तेन तथाविधवैद्याय यथा ममायं वृत्तान्तः संपन्नः । वैद्येनापि स प्रतिपादितः—'यदि मम दीनारशतं वितरसि तदा त्वामहं नीरुजं करोमि' इति । अभ्युपगतं चैतत्तेन । ततो वैद्येन लाक्षारसविलिप्तमेकं सरटं विधाय घटमध्ये च प्रक्षिप्य विरेचकौषधप्रयोगेण पुरीषोत्सर्गमसौ कारितस्तत्र । ततः 'दंसणावगमो' इति पुरीषवेगाहतसरटस्य घटान्निर्गतस्य

दर्शनेऽपगमो विनाशः संपन्नो व्याधेरिति । अत्रैव मतान्तरमाह ।; अन्ये आचार्या एवं ब्रुवन्ति—'तव्वन्निगचेल्लणाण पुच्छाए' इति तृतीयवर्णिकः शाक्यभिक्षुः क्षुल्लकश्च लघुश्वेताम्बरव्रती, तयोः परस्परं पृच्छायां प्रवृत्तायां सत्यां क्षुल्लकेन पुरुषादि इति किमयं पुरुषः उत स्त्रीत्युत्तरं दत्तम् । अयमत्र भावः—क्वचित् प्रदेशे केनापि शाक्यभिक्षुणा सरटो नानाविकारैः शिरश्चालयन्नुपलब्धः । तदनु कथंचित् तत्प्रदेशे समागतः क्षुल्लकः । तेन सोपहासमेवं पृष्टः—"भो भोः क्षुल्लक, सर्वज्ञपुत्रकस्त्वं, तत्कथय किं निमित्तमेष सरटः शिरो धूनयत्येवं ?" तदनु तत्क्षणौत्पत्तिकीबुद्धिसहायः क्षुल्लकस्तस्यैवमुत्तरं दत्तवान्, यथा—"भो भोः शाक्यव्रतिन्नाकर्णय—अयं सरटो भवन्तमालोक्य चिन्ताक्रान्तमानसः सन्नूर्ध्वमधश्च निभालयति, किं भवान् भिक्षुरुपरि कूर्चदर्शनात्, उत भिक्षुकी लम्बशाटकदर्शनादिति ॥ ८४ ॥

**कागे संखे वंचिय विण्णायड सट्ठि ऊण पवासाई । अण्णे घरिणिपरिच्छा णिहिफुट्टे रायणुण्णाओ ॥८५॥**

'काक' इति द्वारपरामर्शः 'संखे वंचिय'त्ति संख्याप्रमाणं एवमेव प्राच्यकज्ञाते इव रक्तपटेन क्षुल्लकः पृष्टः, यथा—'विन्नायडसट्ठित्ति' विन्नातटे नगरे कियन्तः काका वर्त्तन्ते? ततः क्षुल्लकेनोक्तम्;—अहो भिक्षो षष्टिः काकसहस्राणि अत्र नगरे वर्त्तन्ते। भिक्षुः—ननु यद्यूना अधिका वा काका भविष्यन्ति तदा का वार्त्तेति? क्षुल्लकः—'ऊणपवासाई' इति ऊना उपलक्षणत्वाद् अभ्यधिका वा यदि भवतो गणयतः काकाः संपद्यन्ते तदा प्रोषितादयः प्रोषिता देशान्तरं गताः, आदिशब्दादन्यतो वा देशान्तरात् प्राघुर्णकाः आगताः इदमुक्तं भवति—यदि ऊनाः संजायन्ते तदान्यत्र गता इति ज्ञेयम्, अथाभ्यधिकास्तर्हि प्राघुर्णकाः समायाता इति । तदनु निरुत्तरी बभूव शाक्यशिष्यः । अत्रैव मतान्तरमाह;—अन्ये आचार्या

नुवते, यथा—केनचिद्वणिजा तथाविधाद्भुतपुण्यप्राग्भारोदयेन क्वापि विविक्ते प्रदेशे निधिर्दृष्टो गृहीतश्च। तदनु 'घरिणिपरिच्छाणिहि'त्ति—गृहिण्या भार्यायाः परीक्षा तेन निधिरक्षणार्थं कृता, किमियं रहस्यं धारयितुं शक्नोति न वेति बुद्ध्या। इदमत्रैदंपर्यम् ;—तेन निजजायैवं प्रतिपादिता, यथा—मम पुरीषोत्सर्गं कुर्वाणस्य श्वेतवायसोऽपानरन्ध्रं प्रविष्ट इति। तया तु स्त्रीत्वचापल्योपेतया निजसख्याः ख्यापितोऽयं वृत्तान्तः। तथाप्यन्यस्याः। एवं यावत् परम्परया राज्ञापि ज्ञातैषा वार्त्ता। 'ततः फुट्टे रायणुन्नाओ' इति स्फुटिते प्रकटं गतेऽस्मिन् व्यतिकरे पार्थिवेन समाहूय पृष्टोऽसौ, यथा—वणिक्! किमिदं सत्यम्, यतः श्रूयते, त्वदधिष्ठानं पाण्डुराङ्गो ध्वाङ्क्षः प्राविक्षदिति? ततो निवेदितं तेन, यथा—देव, मया निधिः प्राप्तस्ततो महिलापरीक्षणार्थमिदमसंभाव्यं मया तस्याः पुरतः प्रतिपादितं, यदीयमिदं रहस्यं धारयिष्यति तदा निधिलाभमस्या निवेदयिष्यामि इति मत्वानेनेति। एवं च सद्भावे निवेदिते राज्ञा तस्य निधिः पुनरनुज्ञात इति ॥ ८५ ॥

**उच्चार वुड्ढतरुणी तदण्णलग्गत्ति नायमाहारे। पत्तेयपुच्छ सक्कुलि सण्णावोसिरण णाणं तु ॥ ८६ ॥**

'उच्चार' इति द्वारपरामर्शः। 'वुड्ढतरुणी' इति कस्यचिद् वृद्धब्राह्मणस्य तरुणी जाया समजनि। अन्यदा चासौ तथाविधप्रयोजनवशात्तया सह ग्रामं गन्तुं प्रवृत्तः। सा चाभिनवतारुण्योन्मत्तमानसा तस्मिन्ननुरागं स्वप्नेऽप्यकुर्वाणा 'तदन्नलग्गत्ति' तस्मान्निजभर्त्तुरन्यस्मिंस्तरुणे धूर्त्ते लग्नाऽनुरागं गता स्वं भर्त्तारं परिमुच्य तेन सह प्रस्थिता इत्यर्थः। इति वाक्यपरिसमाप्तौ। 'नाय'त्ति ततो न्यायो व्यवहारः क्वापि ग्रामे तयोर्ब्राह्मणधूर्त्तयोरभूत्। 'आहारे पत्तेय पुच्छ'त्ति ततः कार-

णिकैः प्रत्येकं त्रीण्यपि तान्यतीतदिवसाहाराभ्यवहारं पृष्टानि। 'सक्कुलि'त्ति ततो ब्राह्मणेन तद्भार्यया च सत्कुलिकालक्षण
एक एवाहारः कथितः, 'तदनु सन्नावोसिरण णाणं तु' इति विरेचकप्रदाने कृते तेषां द्वितयस्यैकाकारसंज्ञाव्युत्सर्गोपल-
म्भाज्ज्ञानं पुनरजायत कारणिकानां यदुतास्यैव ब्राह्मणस्येयं भार्या, नास्य धूर्त्तस्येति ॥ ८६ ॥

अथ गज इति द्वारम्;—

**गयतुलणा मंतिपरिक्खणत्थ नावाइ उदगरेहाओ । पाहाणभरणतुलणा एवं संखापरिण्णाणं ॥ ८७ ॥**

गजस्य कुञ्जरस्य तुलना प्रारब्धा मन्त्रिपरीक्षणार्थम् । अयमभिप्रायः—क्वापि नगरे मन्त्रिपदप्रायोग्यविशदबुद्ध्युपेत-
पुरुषोपलक्षणार्थं राज्ञा पटहप्रदानपुरस्सरमेवमुद्घोषणा कारिता, यथा—यो मदीयमतंगजं तुलयति तस्याहं शतसहस्रं
दीनाराणां प्रयच्छामीति । 'नावाए उदगरेहाओ' इति । ततः केनापि निपुणधिषणेन नावि द्रोण्यां गजं प्रक्षिप्यागाधे
उदके नीतासौ नौर्यावच्चासौ गजभाराक्रान्ता सती त्रुडिता तावति भागे रेखा दत्ता । ततो गजमुत्तार्य 'पाहाणभरण'त्ति
पाषाणानां भृतासौ तावद्यावत्तां रेखां यावज्जलमध्ये निमग्ना । ततस्ते पाषाणास्तुलिताः । एवं संख्याया गजगोचरभार-
पलादिप्रमाणलक्षणायाः परिज्ञानमभूत्तस्य यावती संख्या पाषाणप्रतिबद्धभारादीनां तावत्येव गजस्यापीति ज्ञातं तेनेति
भावः । ततः परितुष्टमानसेन धराधिराजेन मन्त्रिपदमस्मै वितीर्णमिति ॥ ८७ ॥

**घयणोऽणामयदेवी रायाह ण एव गंधपारिच्छा। णाते हसणा पुच्छण कह रोसे धाडुवाह ठिती॥८८॥**

'घयण' इति द्वारपरामर्शः। 'अणामयदेवी रायाह'त्ति कोऽपि राजा सर्वराहसिकप्रयोजनवेत्तुः स्वकीयभाण्डस्याग्रत इदं प्राह;—यदुत मम देवी पट्टराज्ञी अनामया नीरोगकायलतिका कदाचित् सरोगतासूचकं वातकर्मादि कुत्सितं कर्म न विधत्त इति घयणः, 'न एव'त्ति देव! नैवायमर्थः संभवति यन्मानुषेषु वातादि न संभवतीति। ततो राज्ञोक्तम्,—कथं त्वं वेत्सि? घयणः,—'गंधपरिच्छा' इति महाराज! यदा देवी तव गन्धानुपलक्षणत्वात् पुष्पादि च सुरभिद्रव्यमर्पयति तदा परीक्षणीया सम्यग् वातकर्म विधत्ते नवेति? कृतं चैवमेव धराधिपेन। ततो ज्ञाते देव्याः शठत्वे 'हसणा'इति राज्ञा हसनं कृतम्। 'पुच्छण'त्ति तथाप्यकाण्ड एव हसन्तमालोक्य तं पृष्टोऽसौ, यथा किमर्थं देव! हसितं त्वयाऽप्रस्ताव एवेति? 'कह'त्ति ततो यथावृत्तं निवेदितं देव्या नरनाथेन अथ 'रोसे धाडुवाह'त्ति भाण्डं प्रति रोषे जाते देव्या धाटितो निर्द्धाटितो घयणः। ततो महतीं वंशयष्टिं निवद्धप्रभूतोपानद्भरामादाय देवीप्रणामार्थमुपस्थितोऽसौ। पृष्टश्च तया, यथा—किं रे एता उपानहस्त्वया वंशे निवद्धाः? तेनाप्युक्तं तावकीं कीर्त्तिं निखिलां महीवलये ख्यापयित्वा एता घर्षणीया इति। ततो लज्जितया देव्या स्थितिस्तस्य कृता विधृतोऽसावित्यर्थः॥ ८८॥

गोलग जउमयणक्के पवेसणं दूरगमणदुक्खम्मि। तत्तसलागाखोहो सीयल गाढत्ति कड्ढणया॥८९॥

'गोलग'त्ति द्वारपरामर्शः। 'जउमयनक्के पवेसणं' इति जतुमयस्य लाक्षामयस्य गोलकस्य नक्के नासिकायां क्रीडतः कस्यचिच्छिशोः प्रवेशनमभूत्। 'दूरगमणदुक्खम्मि'त्ति दूरं गते च गोलके तस्य गाढं दुःखमुत्पन्नम्। तस्मिन् सति तत्पित्रा वार्त्ता कथिता कलादाय। तेनापि 'तत्तसलागाखोहो'त्ति तप्तयाऽयःशलाकया क्षोभो भेदः कृतो गोलकस्य नासिकामध्य-

गतस्यैव । तदनु 'सीयल'त्ति पानीयं क्षिस्वा शीतला कृता शलाका । ततश्च 'गाढत्ति कड्डुणया' इति जलावसिक्ता सती गाढा लग्ना सा शलाका गोलके इति कृत्वा आकर्षणं कृतं शलाकायाः । तदाकर्षणे च गोलकोऽप्याकृष्टः । तदनु सुखितः समजनि दारकः ॥ ८९ ॥

**खंभे तलागमज्झे तव्बंधण तीरसंठिएणेव । खोंटग दीहा रज्जू भमाडणे बंधणपसिद्धी ॥ ९० ॥**

'स्तंभ' इति द्वारपरामर्शः। केनचिद्राज्ञा क्वचिन्नगरे सातिशयबुद्धिमन्त्रिलाभार्थं राजभवनद्वारे पत्रमवलम्बितम्, यथा—तडागमध्ये इति नगरपरिसरवर्त्तिनोऽस्य तडागस्य मध्ये य स्तम्भो वर्त्तते, 'तव्बंधण'त्ति तस्य स्तम्भस्य बन्धनं नियन्त्रणं येन केनचित् सुबुद्धिबलेन तीरस्थितेनैव तडागजलमध्येऽनवगाढेनैव क्रियते दीनारशतसहस्रमहं तस्मै प्रयच्छामि । एवं च सर्वत्र प्रवादे प्रवृत्ते केनचिन्मतिमता 'खुंटय'त्ति तडागतटभुवि खुण्टकः स्थाणुरेको निखातः, तत्र च दीर्घा तडागायामव्यापिनी रज्जुः प्रतीतरूपा बद्धा । ततस्तस्या भ्रमाटनेन भ्रमणेन प्रवृत्त्याऽटने सति बन्धनप्रसिद्धिः स्तम्भगोचरा संपन्ना । लब्धं च तेन यद्राज्ञा प्रतिपन्नमासीत् तथा मन्त्रिपदमपीति ॥ ९० ॥

**खुड्डग पारिव्वाई जो जं कुणइत्ति काइगापउमं । अण्णे उ कागविट्ठा पुच्छाए विण्हुमग्गणया ॥९१॥**

'खुड्डग' इति द्वारपरामर्शः। 'पारिव्वाई जो जं कुणइत्ति' काचित् सदर्पप्रकृतिः परिव्राजिका प्रसिद्धरूपा, यो यत्किंचित् कुरुते ज्ञानविज्ञानादि तत् सर्वमहं करोमीत्येवं प्रतिज्ञाप्रधानपटहकं नगरे दापितवती । क्षुल्लकेन केनचिद् भिक्षार्थं नग-

रमध्ये प्रविष्टेन श्रुतोऽयं वृत्तान्तः। चिन्तितं च तेन 'न सुन्दरावधीरणाऽस्याः'। स्पृष्टश्च पटहकः। गतश्च राजकुलम्। दृष्टा च तत्र सा राजसभोपविष्टा। तया च तं लघुवयसं क्षुल्लकमवलोक्य भणितम्,—कुतस्त्वां गिलामि? नूनं त्वं मम भक्षणनिमित्तमेव दैवेन प्रेषितोऽसि। तेन चानुरूपोत्तरदानकुशलेन झगित्येव स्वमेहनं दर्शितम्। एवं च प्रथमत एव जिता सा। तथा, 'काइया पउमं'ति कायिकया प्रतीतरूपया शनैः शनैस्तद्द्वाररूपं भुवि पद्मं विलिखितम्, भणिता च —'धृष्टे! संप्रति सर्वसभ्यपुरुषप्रत्यक्षं स्वप्रतिज्ञां निर्वाहय यदि सत्यवादिनी त्वमसि। न च सा तल्लिखितुं शक्नोति, अत्यन्तलज्जनीयत्वात् सामर्थ्यभावाच्चेति मतान्तरमाह;—अन्ये पुनराचार्या ब्रुवते, यथा—'कागविट्ठापुच्छाए' इति काकः कश्चित् क्वचित् प्रदेशे विष्ठां विकिरन् केनचिद् भागवतेन दृष्टः। तत्कालदृष्टिगोचरापन्नश्च क्षुल्लकस्तेन पृष्टः, यथा—भो लघुश्वेताम्बर! किमिदं काको विष्ठां 'विक्षिपन्नितस्ततो निभालयती'ति वद, सर्वज्ञपुत्रको यतस्त्वम्। अस्यां च पृच्छायां भणितं क्षुल्लकेन, यथा—'विण्हुमग्गणया' इति एष हि काकः "जले विष्णुः स्थले विष्णुर्विष्णुः पर्वतमस्तके। ज्वालामालाकुले विष्णुः सर्वं विष्णुमयं जगत्" ॥ १ ॥ इति श्रुतस्मृतिशास्त्रः संपन्नकौतुहलश्च किमत्र विष्णुर्विद्यते न वेति संशयापनोदाय तं मार्गयितुमारब्धः ॥ ९१ ॥

**मग्गम्मि मूलकंडरि अज्झुववाए कुडंगि पसवत्थं। जायण पेसण रमणे आगम हासे पडग्गहणं ॥९२॥**

मार्गे इति द्वारपरामर्शः। 'मूलकंडरि'त्ति मूलदेवकण्डरीकधूर्त्तौ कदाचित्कुतोऽपि निमित्तात् पथि व्रजतः। तत्र चैकः पुरुषस्तरुणरमणीसहायो गन्त्र्यारूढः सन्मुखमागच्छन्नवलोकितः। 'अज्झुववाए' इति अध्युपपन्नश्च कण्डरीकस्तस्यां यो-

षिति । निवेदितश्च स्वाभिप्रायो मूलदेवाय । तेन चोक्तम्,—मा विषीद, घटयाम्येनां ते । ततः 'कुडंगिपसवत्थं जाय-
ण'त्ति मूलदेवेन कण्डरीक एकस्यां कुडङ्ग्यां वृक्षगहनरूपायां निवेशितः । स्वयं च मार्गस्थ एवासितुमारब्धः । यावदसौ
पुरुषः सभार्यः तत्प्रदेशमागतः, भणितश्च मूलदेवेन—यथैषा मम भार्याऽत्र वंशकुडङ्ग्यां प्रसवितुमारब्धाऽऽस्ते, एका-
किनी चासौ, ततस्तस्याः प्रसवार्थं स्वभार्यां मुहूर्त्तमेकं प्रेषयेत्येवं याचनं कृतं तस्याः । 'पेसण'त्ति प्रेषणं च कृतं तेन
तस्याः । ततः 'रमणे' इति "अंबं वा निंबं वा आसन्नगुणेण आरुहइ वल्ली । एवं इत्थीओवि हु जं आसन्नं तमिच्छंति
॥ १ ॥" इति न्यायमनुवर्त्तमानायास्तस्याः कण्डरीकेन सह क्रीडने रमणे संपन्ने सति, 'आगम हासे पडग्गहणं' इति
मूलदेवान्तिकमागत्य सहासमुखी 'प्रिय! तव पुत्रो जातः' इति च वदन्ती मूलदेवमस्तकात् पटग्रहणं कृतवती सा ।
पठितं च तया निजभर्त्तारं प्रति;—"खडि गड्डुडी वइल्ल तुहुं बेटा जाया तांह । रण्णिवि हुंति मिलावडा मित्त सहाया
जांह" ॥ ९२ ॥

**इत्थी वंतरि सच्चित्थितुल्ल तीयादिकहण ववहारे। हत्थाविसए ठावण गह दीहागरिसणे णाणं॥९३॥**

स्त्रीति द्वारपरामर्शः । 'वंतरिसच्चित्थितुल्ल'त्ति कश्चिद्युवा गन्त्र्यामारूढः सभार्योऽध्वनि व्रजति। भार्या च प्रस्तावे जल-
निमित्तमुत्तीर्णा शकटात् । तत एका व्यन्तरी तस्य यूनो रूपे लुब्धा सती सत्यतत्स्त्रीतुल्यरूपमाधाय गन्त्र्यामारूढा ।
प्रस्थितश्चासौ तया सह । तदनु सत्यभार्या पश्चादवस्थिता विलपति, यथा—प्रियतम! किमिति मामेकाकिनीं कान्तारे
परित्यज्य प्रचलितोऽसि? 'तीयाइकहण'त्ति तेनापि निश्चयार्थं द्वे अपि स्वगृहवृत्तान्तमतीतमादिशब्दाद् वर्त्तमानं च पृष्टे

तदनु यथावद् द्वाभ्यामपि कथनं कृतं समग्रस्यापि तस्य । व्यवहारे इति तदनु कारणिकाग्रतः प्रारब्धे व्यवहारे कारणिकैर्निपुणौत्पत्तिकीबुद्धियुक्तैः 'हत्थाविसए ठावण'त्ति हस्तस्याविषयेऽगोचरे स्थापनं कृतं कस्यचित् पटादेर्वस्तुनः 'गह'त्ति या एतद्दूरस्थितैव गृहीष्यति सा एतद्भार्येति वदद्भिः । 'दीहा गरिसणे' इति तदनु व्यन्तर्या वैक्रियलब्ध्या दीर्घं हस्तं कृत्वा आकर्षणं कृतं तस्य वस्तुनः । तस्मिंश्च सति ज्ञानं संशयापनोदः संपन्नः कारणिकानां यदुतेयं व्यन्तरीति । तदनु निर्घाटिता सा तैरिति ॥ ९३ ॥

अथ पतिरिति द्वारम्;—

**पतिदुगतुल्ला ण परिच्छ पेसणा वरपियस्स आइओ। इहरासंभव भुज्जो समगगिलाणे असंघयणी॥९४॥**

क्वचिन्नगरे कुतोऽपि प्रघट्टकात् कस्याश्चित् स्त्रिया द्वौ पती संपन्नौ । भ्रातरौ च तौ परस्परम् । लोके महान् प्रवाद उद्घाटितो यथा;—अहो महदाश्चर्यं यदेकस्या द्वौ पती, तथापि 'पइदुगतुल्लत्ति' पतिद्वयेऽपि तुल्या समानप्रतिबद्धा एका स्त्री । एष च वृत्तान्तो जने विस्तरन् राजानं यावद् गतः । तुल्योपचारसारा च किल सा तयोर्वर्त्तते । नेति—अमात्येनोक्तम्,—न नैवायं वृत्तान्तः संभवति यदुत समानमानसिकानुरागा द्वयोरपीति ततः प्रोवाच महीपतिः,—कथमेतज्ज्ञायते? मन्त्रिणाप्युक्तम्,—'परीच्छा' इति देव, तस्याः परीक्षार्थमेतामाज्ञां देहि, यथा—अद्य त्वदीयभर्तृभ्यां नगरात् पूर्वापरदिग्भागवर्त्तिनोर्ग्रामयोर्गन्तव्यमागन्तव्यं चाद्यैव । ततो वितीर्णा चेयमाज्ञा राज्ञा। तयापि 'पेसणा वरपियस्स'त्ति यः प्रियः पतिस्तस्यापरस्यां दिशि यो वर्त्तते ग्रामस्तत्र प्रेषणं कृतं, सामर्थ्यादितरस्येतरत्र । ततः प्रोक्तममात्येन—'आइ-

म्मो' इति—देव, योऽपरस्यां दिशि प्रहितः स तस्याः समधिकं प्रियः, यतः तस्य गच्छत आगच्छतश्चादित्यः पश्चाद् भवति, इतरस्य तूभयथापि ललाटफलकोपतापकारीति। राजा—'इहरासंभव'त्ति इतरथाप्यनाभोगतोऽप्येवं प्रेषणसंभवो घटते। अतः कथं निश्चिनुमो यदुतायमेव प्रेयानिति? ततोऽमात्येन भूयः पुनः परीक्षार्थं ग्रामे गतयोरेव तयोः 'समगगिलाणे' इति समकमेककालमेव ग्लानत्वं सरोगत्वं निवेदितम्—तौ तदीयौ द्वावपि पती ग्रामगतौ ग्लानीभूतौ इत्येककालमेव तस्या ज्ञापितमिति भावः तस्मिंश्च ज्ञापिते तया प्रोक्तं योऽपरस्यां दिशि गतो मद्भर्त्ताऽसौ 'असंघयणी'ति—असंहननी अदृढशरीरसंस्थानबल इति तत्प्रतिजागरणार्थं गच्छामि तावत्। गता च तत्र। ज्ञातं च सुनिश्चितममात्यादिभिर्यदुतायमेव प्रियो विशेषत इति ॥ ९४ ॥

**पुत्ते सवत्तिमाया डिंभग पइमरण मज्झ एसत्थो। किरियाभावे भागा दो पुत्तो बेइ णो माया ॥९५॥**

इह आसि कत्थवि पुरे निवमंतीसेट्ठिसत्थवाहाण। पुत्ता पवित्तचित्ता चत्तारि कलाकलावविऊ ॥ १ ॥ अन्नोन्नदढप्पणया पत्ता तरुणत्तणं जणमणुन्नं। खणमेत्तंपि न विरहं सहंति, तत्तिं चिय वहंति ॥ २ ॥ पभणंति अन्नया ते परोप्परं जेण न अप्पा देसंतरम्मि गंतूण तोलिओ होइ। किं सोवि नरो गणणं लहेइ जणमज्झयारम्मि? ॥ ३ ॥ जेण न अप्पा देसंतरम्मि गंतूण तोलिओ एक्कमाणसा होउं। को मे कज्जारूढस्स अत्थि सामत्थसंजोगो ॥ ४ ॥ नियसामत्थपरिक्खाहेउं चलिया पभायसमयम्मि। नियतणुमेत्तसहाया एगं देसंतरं सव्वे ॥ ५ ॥ पत्ता दिणद्धसमए एगम्मि पुरे अनायकुलसीला। ओइन्ना कत्थइ देवभवणट्ठाणे अइपहाणे ॥ ६ ॥ कह अज्ज भोयणं होहित्ति भणिराण सत्थवाहसुओ। अज्ज मए भो भोयणमुप्पाइय देयमिइ भणइ

'पति'-'पुत्र'द्वा०

॥ ७ ॥ ठावित्तु तिन्निवि तहिं ठाणे णगरंतरं अहेगागी । पत्तो पुराणवणियस्स आवणे समुवइट्ठो य ॥ ८ ॥ तम्मि दिणे किल कस्सइ देवस्स महूसवो अह पयट्टो । लग्गो धूवविलेवणवासाईणं विणिमओ य ॥ ९ ॥ जाहे सो पुडियाणं बंधं काउं न पारए वणिओ । ताहे सत्थाहसुओ साहेज्जं काउमाढत्तो ॥ १० ॥ पत्ते भोयणकाले भणिओ वणिएण पाहुणो होहि । पडिभणियं तेण कहं एगागी होमि जं मज्झ ॥ ११ ॥ अण्णे तिण्णि वयंसा संति वहिं, तो भणाइ वाणियओ । आकारेज्जंतु लहुं तेवि य ते निव्विसेसा मे ॥ १२ ॥ दिण्णं तेसिं भोयणमइगउरवसारमायरं काउं । लग्गं च पंचरूवग-मेत्तं किल भोयणवयम्मि ॥ १३ ॥ बीयदिणे सेट्ठिसुओ भोयणदाणे पइण्णमह काउं । निज्जाओ सोहग्गियजणेसु सिर-रयणसारिच्छो ॥ १४ ॥ पत्तो गणियावाडगमज्झट्ठियपवरदेवकुलमेगं । उवविट्ठो तत्थ तया पेच्छणगखणो महं आसि ॥ १५ ॥ एगाए गणियाए धूया नवजोव्वणुब्भडा पुरिसं । कंपि न इच्छइ रमिओ नियसुभगत्तणमउम्मत्ता ॥ १६ ॥ सा तं दट्ठुं अक्खित्तमाणसा पेच्छिओ समाढत्ता । सकडक्खखेवमइनिद्धमुद्धदिट्ठी पुणो पुणवि ॥ १७ ॥ मुणिओ एस वइयरो गणियाए तो सतोसचित्ता सा । आमंतिय नियगेहं नेइ पणामइ य सा धूयं ॥ १८ ॥ विहिओ चउण्हवि तओ भोयणतंबोलवत्थमाईओ । रूवगसयमोल्लोऽकिवणभावकलियाइ उवयारो ॥ १९ ॥ तइयदिणेऽमच्चसुओ बुद्धिपहाणो गओ निवघरम्मि । जत्थ विवाया वट्टंति बहुविहा भूरिकाला य ॥ २० ॥ तत्थ य दो महिलाओ एगं पुत्तं उवट्ठिया घेत्तुं । भणिओ ताहिं अमच्चो भो सामिय! सुणसु विणत्तिं ॥ २१ ॥ एत्थागयाणमम्हं दूरा देसंतराउ पइमरणं । संजायं, दविणमिमं पुत्तो य इमो समत्थित्ति ॥ २२ ॥ ता जीइ एस पुत्तो दविणंपि हु तीइ निच्छयं होइ । लग्गो य बहू कालो

अम्हे तुम्हं सरंतीण ॥ २३ ॥ ता जह अज्ज विवाओ एसो परिच्छिज्जई तहा कुणसु । पुत्तं धणं च दाऊण भासियं तो अमच्चेण ॥ २४ ॥ अबो! एस अउव्वो कह छिज्जिस्सइ सुहं विवाउत्ति । इय भणिरम्मि अमच्चे भणियमहामच्चपुत्तेण ॥ २५ ॥ जइ तुम्हाणमणुन्ना विवायमेयं अहं खु छिंदामि । अणुमन्निएण तेणं भणिया महिलाउ ता दोवि ॥ २६ ॥ एत्थमुवट्ठवह धणं पुत्तं च, तओ तहा कए ताहिं । उवणीयं करवत्तं धणस्स भागा य दोवि कया ॥ २७ ॥ पुत्तस्स नाभिदेसे करवत्तं जा दुभागकरणाय । आरोवियं, न अन्नह छिज्जइ एसो विवाउत्ति ॥ २८ ॥ ता सुयजणणी निक्कित्तिमेण नेहेण लंघिया भणइ ॥ दिज्जउ पुत्तो वित्तं विमाए मा होउ सुयमरणं ॥ २९ ॥ नायममच्चसुएणं जह एस सुओ इमाइ, न इमीए । निग्घाडिया तओ सा पुत्तो य धणं च इयराए ॥ ३० ॥ एत्तो नीओ नियमंदिरम्मि तो तीइ सो अमच्चसुओ । दीणाराण सहस्सं कयन्नुयत्तेण से दिन्नं ॥ ३१ ॥ पत्ते चउत्थदिवसे रायसुओ निग्गओ नयरमज्झे । भणियं च संति जइ मज्झ रज्जसंपत्तिपुण्णाइं ॥ ३२ ॥ तो उग्घडंतु बाढं अह तप्पुण्णोदएण तत्थ खणे । तप्पुरराया अनिमित्तमेव जाओ मरणसरणो ॥ ३३ ॥ अप्पुत्तो य, पउत्ता गवेसणा रज्जजोगपुरिसस्स । नेमित्तिओवइट्ठो ठविओ सो तस्स रज्जम्मि ॥ ३४ ॥ चत्तारिवि तो मिलिया पभणंति परोप्परं पहिट्ठमणा सामत्थमेत्त कित्तियमम्हाणं तो भणंतेवं ॥ ३५ ॥ दक्खत्तणयं पुरिसस्स पंचगं, सइयमाहु सुंदेरं । बुद्धी सहस्समुल्ला सयसाहस्साइं पुण्णाइं ॥ ३६ ॥ सत्थाहसुओ दक्खत्तणेण सेट्ठीसुओ य रूवेण । बुद्धीइ अमच्चसुओ जीवइ पुण्णेहिं रायसुओ ॥ ३७ ॥ एत्थ य पत्थुयमेयं अमच्चपुत्तस्स तस्स किल बुद्धी । उप्पत्तियत्ति नेया सेसं तु पसंगओ भणियं ॥ ३८ ॥ इति ॥ अथ गाथाक्षरार्थः—पुत्त इति द्वारपरा-

मर्शः । तत्र कश्चित् प्रचुरद्रव्यसहायो वणिक् भार्यायुगलसमन्वितो राष्ट्रान्तरमवागमत् । तत्र चैकस्यास्तत्पत्न्याः पुत्रः समजनि । एवं च 'सवत्तिमायाडिंभग'त्ति तस्य डिम्भकस्य बालस्य तयोर्मध्यादेका माता सवित्री अन्या च सपत्नी पन्ना । 'पइमरण'त्ति दैवदुर्योगाच्च लघावेव तस्मिन् पुत्रके यशःशेषतां ययौ स वणिक् । डिम्भकश्च न जानाति का मम जननी तदन्या वा । तदनु निविडमायासहाया प्राह सपत्नी,—ममैषोऽर्थः पत्युः संबन्धी आभाव्यः, यतो मया जातोऽयं पुत्र इति । जातश्च तयोर्द्वयोरपि व्यवहारः प्रभूतं कालं यावत् न च छिद्यतेऽसौ । ततः 'किरियाभावे' इति क्रियाव्यवहारस्तस्या अभावे तयोः संपन्ने सति निपुणबुद्धिना प्रागुक्तकथानकोद्दिष्टेन मन्त्रिपुत्रेण प्रोक्तम्;—'भागा दो पुत्तो' इति एष नौ पुत्रो द्विभागीक्रियतां करपत्रकेण तदर्द्धमर्द्धं पुत्रार्थयोर्भवत्यो दास्यामीत्यानीतं च करपत्रम्, यावत् पुत्रकोदरोपरि दत्तं तावत्—'बेइ नो माया' इति—या सत्या माता सा ब्रवीति सस्नेहमानसा सती प्रतिपादयति यथा नो नैवामात्य! त्वयैतत् कर्त्तव्यं, गृह्णात्वेषा मत्पुत्रमर्थं च, अहं तु अस्य जीवतो मुखारविन्ददर्शनेनैव कृतार्था भविष्यामीति । ततो ज्ञातं मन्त्रिनन्दनेन यदुतेयमेव माता, दत्तश्च सपुत्रोऽर्थ एतस्यै । निर्घाटिता चापरा इति ॥ ९५ ॥

**महुसित्थकरुब्भामिय रयजालीदिट्ठकिणण पतिकहणा । गमणअदंसण तह ठाणपासणा दुट्ठसीलत्ति ९६**

'मधुसित्थ' इति द्वारपरामर्शः । 'करुब्भामिय'त्ति केनापि राज्ञा सर्वस्मिन्निजदेशे मदनकरः पातितः, यदुत—सर्वेणापि लोकेन मम तावद् मदनमानीय दातव्यमिति । इतश्च क्वापि ग्रामे कस्यचित् कोलिकस्य उद्भ्रामिका कुलटा वर्त्तते जाया । 'रयजाली दिट्ठ'त्ति अन्यदा च तया केनचिदुपपतिना सह रतं निधुवनमासेवमानया जाल्याः पीलुककुडङ्गया

मध्ये भ्रामरं दृष्टम् । ततः 'किणणपइकहणा' इति राजदेयमदनं क्रीणतः सतः पत्युः कथनं कृतं तया यथा मा क्रीणीहि त्वमेतत्, यतो मया तत्र स्थाने भ्रामरमालोकितमास्ते स्वयमेव, अतस्तदेव गृहाण, किमनेन निष्प्रयोजनेन द्रविणव्ययेन कृतेन प्रयोजनमिति । 'गमणे दंसण'त्ति तदनु तेन सभार्येण कुडङ्ग्यां गमनं कृतं मदनोपलम्भाय यदा चादर्शनं निपुणं निभालयतोऽपि अनवलोकनं मदनस्य संपन्नं तस्य, तदा भणिता तेन सा, यथा—हले ! न दृश्यते तत् । ततः 'तहठाणपासणा' इति तथास्थानं चौर्यनिधुवनकालभावी आकारस्तया धृतः, दृष्टं च तद्भ्रामरम्, गृहीतं च 'दुट्ठसील'त्ति तदनु ज्ञातं कोलिकेन यदुत दुष्टशीला विनष्टशीला इत्यस्मात् स्थानकरणलक्षणाद्धेतोरिति ॥ ९६ ॥

**मुद्दिय पुरोह णासावलाव गह मंति रण्ण परिपुच्छा। सिट्ठे जूए मुद्दा गह लाभ परिच्छय प्पिणणा॥९७॥**

मुद्रिकेति द्वारोपक्षेपः 'पुरोह'त्ति पुरोधा पुरोहित इत्यर्थः, तस्य गृहे क्वचिन्नगरे केनचिद् द्रमकेण देशान्तरं यियासुना, 'नास'त्ति—न्यासो निक्षेपो निजद्रव्यस्य कृतः । प्रत्यागतश्च यदासौ याचते तं, तदा पुरोधसा 'अवलाव'त्ति—अपलापोऽपह्नवो—न किञ्चित् त्वया मम समर्पितमेवंलक्षणो विहितः । ततस्तस्य स्वकीयं द्रव्यमलभमानस्य ग्रहो ग्रहिलत्वं संजातम् । 'मंति'त्ति अन्यदा राजमार्गे व्रजन्मन्त्री तेन दृष्टः, भणितश्च पुरोहितभ्रान्त्या, यथा—देहि मे पुरोहित ! दीनारसहस्रं यन्मया प्राग् तव समर्पितमासीदिति । चिन्तितं च मन्त्रिणा,—नूनं अयं वराकः पुरोहितेन अनाथ इति संभाव्य मुषितः । कृपा चास्य तं प्रति संपन्ना। निवेदितश्चायं वृत्तान्तस्तेन पार्थिवाय । ततः 'रण्ण परिपुच्छा' इति राज्ञा पृष्टः पुरोहितः तदग्रतोऽप्यपहुतमेतेन । द्रमकश्च सर्वं सप्रत्ययं दिवसमुहूर्त्तस्थापनासमयसाक्षिलोकप्रभृति नृपेण निर्वि-

जने पृष्टः। 'सिट्ठे' इति शिष्टे कथिते तेन सर्वस्मिन्नपि वृत्तान्ते 'जूए' इति अन्यदा राजा पुरोहितेन सह द्यूतं रन्तुमारब्धः। तत्र चालक्षितमेव केनाप्युपायेन 'मुद्दागह'त्ति पुरोहितस्य नामाङ्कं मुद्रारत्नं गृहीतं भूमीभुजा। तदनु पूर्वमेव व्युत्पादितस्यैकस्यात्मपुरुषस्य हस्ते न्यस्तं तत्, भणितश्चासावेकान्ते, यथा—पुरोहितगृहे गत्वा अनेनाभिज्ञानेन पुरोहितेन प्रेषितोऽहमिति निवेदनपूर्वं द्रमकसंबन्धिनं दीनारनकुलकं याचस्व। गतश्चासौ तत्र। 'लाभ'त्ति लब्धश्च नकुलकः। निक्षिप्तश्चान्यनकुलकमध्ये। आकारितश्च द्रमकः, भणितश्च,—गृहाणामीषां मध्यात् स्वकीयं नकुलकम्। गृहीतश्च तेन स्वकीय एव। 'परिच्छियप्पिणणा' इति एवमौत्पत्तिकीबुद्धिबलेन परीक्ष्यार्प्पणं ढौकनं कृतं राज्ञा तन्नकुलस्य। जिह्वा च च्छिन्ना पुरोहितस्येति ॥ ९७ ॥

अंकेवंचिय पल्लट्टयम्मि तह सीवणा विसंवयणं। अण्णे भुयंगछोहिय अंकियगोचेडिगामुयणं ॥९८॥

'अंकेवंचिय'त्ति अंके इति द्वारपरामर्शः। एवमेव प्राच्यज्ञातवत् केनापि कस्यचिद्वेश्मनि खरकदीनारसहस्रभृतो नकुलको निक्षिप्तः। मुद्रा च स्वकीया दत्ता। 'पल्लट्टयम्मि'त्ति तेनापि कूटरूपकभरणेन परिवर्त्तने कृते, 'तह सीवणा' इति तथैव सीवनं कृतं नकुलस्य। आगतेन स्वामिना याचितोऽसौ नकुलको लब्धश्च। यावन्निभालयति तावत् कूटकाः सर्वे दीनारा इति। कारणिकप्रत्यक्षं च व्यवहारः प्रवृत्तः। तैश्च लब्धदीनारसंख्यैस्तथैव सत्यदीनाराणां स नकुलो भृतः त्रुटितश्च। तदनु 'विसंवयनं' इति सत्यदीनाराणां द्रव्याधिकत्वेन पुष्टरूपत्वात् तत्र अमानलक्षणं संपन्नं ततो दापितोऽसौ खरकदीनारान् दण्डितश्चेति। अन्ये आचार्या ब्रुवते, यथा—केनचित् पुरुषेण निजमित्रगोकुले स्वकीया गावश्चर-

याचितश्च प्रस्तावे तेनासौ, यथा—सम-
णार्थं प्रक्षिप्ताः । मित्रेण च लुब्धेन स्वकीकास्ताश्च गावः स्वनामाङ्काः कृताः । याचितश्च प्रस्तावे तेनासौ, यथा—सम-
र्पय मदीया गाः । तेनापि प्रत्युक्तम्, यथा—गृहाण यासां नास्त्यङ्कस्ताः । ज्ञातं च तेन, यथा—वञ्चितोऽस्मीति । ततः
'भुयंगछोहिय'त्ति भुजङ्गा द्यूतकाराः छोभितेन परिभूतेन सता बुद्धेर्लाभार्थमवलगिताः, दत्ता च तैरौत्पत्तिकीबुद्धिसारै-
र्बुद्धिः, यथा—तस्य पुत्रीः केनाप्युपायेन स्वगृहमानीयात्मपुत्रिकाभिः सह 'अंकिय'त्ति अङ्किताः कुरु । कृतं च तथैव
तेन । याचितश्च मित्रेण स्वपुत्रीः । प्रतिभणितं च तेन, याः काश्चिदपातिताङ्काः सुतास्ता गृहाण । ततो द्वाभ्यामपि
वञ्चितप्रतिवञ्चिताभ्यां 'गोचेडियामुयणं'ति गवां चेटिकानां च मोचनं कृतम् ॥ ९८ ॥

**णाणेवंचिय पल्लट्ट णासकालेण नवर विण्णाणं । अन्ने नरिंददेवय उट्ठाणं टंकओ झत्ति ॥ ९९ ॥**

'नाणेवं चिय'त्ति ज्ञानके इति द्वारोपक्षेपः । एवमेव प्राग्ज्ञाते इव किल केनचित् कस्यचिन्निक्षेपकः समर्पितः । तेन च
'पल्लट्ट'त्ति नकुलकमध्यगतानां पणानां परिवर्त्तः कृतः । प्रत्यागतेन तेन याचितोऽसौ । लब्धश्च नकुलकः । यावदुद्घाट-
यति तावन्नवान्निक्षिप्तपणान् पश्यति । विवदमानौ च तौ कारणिकानुपस्थितौ । लब्धवृत्तान्तैश्च तैः संपन्नौत्पत्तिकीबु-
द्धिभिः 'नासकालेण नवर विण्णाणं'ति न्यासकालेन निक्षेपसंवत्सररूपेण नवरं केवलं पणानां ज्ञानं कृतं यथान्ये इमे
पणा अल्पद्रव्यत्वात्, निक्षेपकाले च टङ्ककसाम्येऽपि अन्ये आसन् बहुद्रव्यत्वात् । तस्मात्प्राच्यपणापलापकारी एष
इति निगृहीतः । अत्रैव मतान्तरम् । अन्ये ब्रुवते—'नरिंददेवय'त्ति नरेन्द्रेण केनचिद् द्रव्यलोभिना क्वापि पर्वतविषम-
प्रदेशे मार्गतटवर्त्तिनि यन्त्रप्रयोगेण विचित्राभरणभूषिता देवताप्रतिमा कारिता । ततः सार्थवाहादिलोकस्तेन प्रदेशेन

गच्छन् कौतुकेन तद्दर्शनार्थं देवकुलगर्भगृहे प्रविशति यदा चासौ तद्द्वारि पादनिक्षेपं करोति तदा 'उट्ठाणं टंकओ झत्ति' इति—उत्थानं संमुखं चलनं टङ्कात्ततो विषमपर्वतप्रदेशाज्झगित्येव तस्य देवता करोति । एवं च छलेन प्रतिमाचौरस्त्व-मिति कृत्वा गृह्यतेऽसौ प्रच्छन्ननियुक्तराजपुरुषैराच्छिद्यते च सर्वमपि धनं ततः सकाशात् । एवमौत्पत्तिकीबुद्ध्युपायेन राजा द्रव्यसंग्रहं कृतवानिति ॥ ९९ ॥

**भिक्खुम्मिवि एवं चिय भुयंग तव्वेस णास जायणया । अण्णेऽवाउडवसही खरिचीवरडाह उड्डाहो १००**

'भिक्खुम्मिवि एवंचिय'त्ति भिक्षाविति द्वारपरामर्शः । एवमेव प्राच्यज्ञातवत् केनापि भिक्षुणा कस्यचित्पुरुषस्य संब-न्धिनो न्यासस्यापह्नवः कृत इत्यर्थः । ततस्तेन वञ्चितपुरुषेण 'भुयंग' इति भुजङ्गानां द्यूतकारिणां निवेदितं यथाऽयं रक्त-पटो मदीयं निक्षेपकमपलप्य स्थित इति । ततस्तैस्तस्योपरि कृपां कुर्वाणैराद्यबुद्धिसहायैः 'तव्वेसनास'त्ति तस्य भिक्षोर्वेषं कृत्वा रक्तपटैर्भूत्वेत्यर्थः, तस्यैव भिक्षोः समीपे गमनं कृतम् । भणितश्चासौ यथा,—वयं तीर्थवन्दनार्थं गमिष्याम इत्ये-नमस्मदीयं सुवर्णं निक्षेपकं गृहाण । प्रत्यागतानामस्माकमर्पयेस्त्वमिति । एवं च ते यावदर्पयितुमारब्धा न चार्पयन्ति तावत्तेन वञ्चितपुरुषेण तत्संकेतितेनैवावान्तरे समागत्य 'जायणया' इति याचनं कृतं स्वकीयनिक्षेपकस्य, यथा—मदीयं प्रागृहीतं निक्षेपकं तावदर्पय भो भो भिक्षो! । ततस्तेन यद्यहमेतस्य न्यासं न ढौकयिष्यामि तदा एते न समर्पयि-ष्यन्ति मम स्वीकीयनिक्षेपकान् वञ्चकं मां मन्यमानाः, इति तत्क्षणादेव समर्पितः । द्यूतकारभिक्षुभिरपि मिषान्तरं कृत्वा नार्पिता निक्षेपका इति । अत्रैव मतांतरम्, अन्ये ब्रुवते—यथा कश्चिच्छाक्यभिक्षुः क्वचित् संनिवेशे संध्याकाले

मार्गश्रान्तः सन् 'अवाउडवसही' इति अव्यापृतानां दिगम्बराणां वसतौ मठरूपायां रात्रिवासायोपस्थितः । तत्र च प्रागेव भिक्षुदर्शनं प्रति संपन्नमत्सरैस्तदुपासकैः सकपाटं सदीपं चापवरकमेकं प्रवेशितः 'खरिचीवरदाह उड्डाहो' इति, ततो मुहूर्त्तान्तरे शयनीयस्थस्य तस्य खरी द्व्यक्षरिका प्रवेशिता, द्वारं च स्थगितम् । ततः परिभावितं च तेन 'नूनमेते मामुड्डाहयितुमिच्छन्ति । ततो "भावानुरूपफलभाजः सर्वे जीवा" इत्येतेष्वेव पतत्ववसाय इति विमृश्य प्रज्वलत्प्रदीपशिखानलेन दग्धानि सर्वाण्यपि चीवराणि, अवलम्बितं च नाग्न्यम्, दैवाच्च प्राप्ताऽपवरकमध्य एव पिच्छिका । प्रभाते च दिगम्बरवेषधारी गृहीत्वा दक्षिणकरेण खरिकां यावन्निर्गन्तुमारब्धस्तावन्मीलितस्तैः सर्वोऽपि तत्संनिवेशलोकः । भणितं च तेनोद्धुरकन्धरेणोच्चस्वरेण च भूत्वा—'यादृशोऽहं तादृशाः सर्वेऽप्येते' इति भिक्षोरौत्पत्तिकी बुद्धिरिति ॥ १०० ॥

चेडगनिहाणलाभे भद्ददिणंगारगहणऽपुण्णत्ति । इयरेण लेप्पवाणरणिमंतणा चेडपुण्णत्ति ॥ १ ॥

चेडग इति द्वारपरामर्शः । किल क्वचित् कौचिद् द्वौ वयस्यौ परस्परं प्रणयपरायणौ वसतः । तयोश्च कदाचित् क्वचित् शून्यगृहादौ हिरण्यपूर्णनिधानलाभः समजनि 'भद्ददिणंगारगहणपुन्न'त्ति परिभावितं च तद्ग्रहणोचितं भद्रं दिनं ताभ्याम् । लब्धं च तद्दिनाद् द्वितीयदिने । गतौ च तौ स्वगृहम् । तत एकेनाशुद्धाभिसंधिना तद्रात्रावेवाङ्गाराणां भृत्वा ग्रहणमुपादानं कृतं द्रविणस्य । प्रभाते च यावदागतौ तावत् पश्यतोऽङ्गारान् किमिदमित्थमकस्मादेवान्यथा संवृत्तमिति यावत् परस्परं जल्पतस्तावद् भणितं निधिग्राहकेण,—'अहो अपुण्यमावयोरिति रात्रिमात्रान्तरे एव निधिरङ्गाररूपतया परिणतः' इति । ततो ज्ञातमितरेण नूनमस्य मायाविनः कर्मेदम् । ततः 'लेप्पवानरनिमंतणा चेडपुण्ण'त्ति लेप्यं तस्यैव

वञ्चकमित्रस्य प्रतिबिम्बं मृन्मयं निजगृहमध्ये तेन कारितम्, तन्मस्तके च नित्यमसौ भक्तं मुञ्चति । द्वौ च वानरौ तन्मस्तकोपरि भक्तं ग्राहयति । तदभ्यासौ च तौ संजातौ । अन्यदा च तथाविधोत्सवप्रवृत्तौ निमन्त्रणा भोजननिमित्तं वञ्चकवयस्यचेडकयोः कृता । गोपितौ च तौ तेन । न समर्पयति च पितुः । उत्तरं च कुरुते—"किं मन्दभाग्या वयं कुर्मः, येन पश्यत एव मे त्वत्सुतौ वानरौ जातौ' । अश्रद्दधानश्च तद्गृहमागतः उपवेशितो लेप्यस्थाने अग्रत एव प्रसारिततत्प्रतिबिम्बेन तेन । मुक्तौ च वानरौ किलकिलारावं कुर्वाणावारूढौ तच्छिरसि । भणितश्च स तेन, यथाऽपुण्यैर्निधिः परावृत्तः, तथैतावपि त्वत्पुत्राविति । ज्ञातं च तेन 'शठं प्रति शठं ( शाठ्यं ) कुर्यात्' इति वचनमनुष्ठितमेतेन तदनु दत्तो निधिभागः । प्रतिसमर्पितावितरेणापि पुत्राविति ॥ १ ॥

**सिक्खा य दारपाढे वहुलाहऽवरत्तमारसंवाए । गोमयपिंडणदीए ठितित्ति तत्तो अवक्कमणं ॥ २ ॥**

शिक्षा चेति द्वारपरामर्शः । शिक्षा चात्र धनुर्वेदविषयोऽभ्यासः । तत्र चैकः कुलपुत्रको धनुर्वेदाभ्यासकुशलः पृथ्वीतलनिभालनकौतुहलेन परिभ्राम्यन् क्वचिन्नगरे कस्यचिदीश्वरस्य गृहमवतीर्णः । गृहस्वामिना च सप्रणयं परिपूज्य 'दारपाढे' इति स्वकीयदारकपाठे नियुक्तः । तस्य च तान् पाठयतो बहुलाभः संपन्नः । ततः 'अवरत्तमारसंवाए' इति । अपरक्तेन दारकपित्रा तदीयार्थलाभच्छेदनार्थं मारो मरणं संकल्पितं यथा केनाप्युपायेनामुं निर्गमनकाले मारयित्वाऽर्थो ग्रहीष्यत इति । न लभते चासौ गृहान्निर्गन्तुम् । संपादितश्चासौ तेन निजस्वजनानां वृत्तान्तः, यथा—नूनमयं मां मारयितुमभिवाञ्छतीति । तदनु च 'गोमयपिंड नईए ठिइत्ति'त्ति गोमयपिंडेषु सर्वोऽपि निजोऽर्थः संचारितस्तेन । शो-

षिताश्च ते पिण्डाः, भणितश्च स्वजनलोकः, यथाऽहं नद्यां गोमयपिण्डकान् मध्यसंगोपितार्थान् प्रक्षेप्स्यामि, भवद्भिश्च ते तरन्तो ग्राह्या इति । ततोऽसावस्माकं कुले स्थितिर्नीतिरीतिरेषा इत्युक्त्वा तिथिषु पर्वदिवसेषु च तैर्दारकैः समं तान् नद्यां निक्षिपति । निर्वाहितश्चानेनोपायेन सर्वोऽप्यर्थः 'तत्तो अवक्कमणं'ति तत एवं कृतेऽपक्रमणं ततः स्थानाल्लब्धावसरेण तेन गमनं कृतमिति ॥ २ ॥

**अत्थे बालदुमाया ववहारे देविपुत्तकालोत्ति । अण्णे उ धाउवाइयजोगो सिद्धीइ निवणाणं ॥ ३ ॥**

अर्थ इति द्वारपरामर्शः । 'बालदुमाया' इति कस्यचिद्बालस्य द्वौ मातरावभूतां । पिता च मृतः । 'ववहारे' इति संपन्नश्च द्वयोरपि जनन्योर्विवादः न चान्यः कोऽपि तत्र साक्षी समस्ति, दूरदेशान्तरादागतत्वात्तयोः ततो राजद्वारे उपस्थिते ते । 'देविपुत्तकालो'त्ति । तत्र च पट्टमहादेवी गर्भवती श्रुतश्च तयैष वृत्तान्तः उपायान्तरं चापश्यन्त्या प्रतिपादिते यथा ममैष गर्भे यः पुत्र उत्पत्स्यते, सोऽशोकपादपस्याध उपविष्टो व्यवहारं भवत्योः छेत्स्यतीति । तावन्तं च कालं यावद् भवतीभ्यां संतुष्टमानसाभ्यां उचितान्नपानवस्त्रादिभोगपराभ्यां च स्थातव्यम् । तुष्टा च सपत्नी यथा लब्धस्तावदियान् कालः, पश्चात्किं भविष्यतीति को जानीत इति । ज्ञातं च यथावस्थितं देव्या, तदीयहर्षावलोकनात् । निर्घाटिता चासौ । समर्पितश्च स्वजनन्या एव पुत्रोऽर्थश्चेति । अन्ये त्वाचार्या एवं ब्रुवते, यथा—'धाउवाइयजोगो सिद्धीइ निवणणं' इति । कैश्चिद् धातुवादिकैः क्वचित् पर्वतनिकुञ्जे सर्वः सुवर्णसिद्धिसंयोगो विहितः न च सुवर्णसिद्धिः संपद्यते विषन्नाश्चासते ते यावत्, तावदत्रान्तरे प्रागेव शैलासन्नं निवेशितकटकसन्निवेशाद्रात्रौ ज्वलन्तं ज्वलनमवलोक्य कौतुकेन राजा

तया तु निर्वन्धगृहीतया उक्तं वैश्रमणेऽभिलाषोऽभूत् । ऋतुस्नातायाः सत्यास्तुशब्दस्य भिन्नक्रमस्य योजनात् । 'सिद्धिपासणय'त्ति श्रेष्ठिनः पुनर्दर्शनं संजातं, मनागभिलाषश्च तद्गोचर इति । 'संभोगे चिय'त्ति संभोग एव श्रेष्ठिनः संजात इत्यन्ये ब्रुवते, परं न तावद् इतस्तु इत एव श्रेष्ठिसंभोगात् त्वं संसिद्धः, किंतु राजबीजादपि ॥ १५८ ॥

ततः सम्पन्नापमानस्य तस्य तेन प्रज्ञापनं कृतं यथा, देव! 'अप्पगासण'त्ति अप्रकाशनीयोऽयमर्थः । तथा नात्र दोपः । कुत इत्याह—कर्मभावात् तथाविधदैवपारवश्यात् । ततः कुशल इति कृत्वा तेन स्थापितो मंत्री मंत्रिणां सर्वेषामुपरि तु मूर्ध्नि पुनः ॥ १५९ ॥

आह—कथं तेनान्धेन सता एवंविधा विशेषा निर्णयपदमानीताः? इत्याशंक्य प्रतिवस्तूपमामाह;—

**दूरनिहित्तं पि निहिं तणवल्लिसमोत्थयाए भूमीए । णयणेहिं अपेच्छंता कुसला बुद्धीए पेच्छंति ॥१६०॥**

दूरनिहितमपि गंभीरभूमिभागगर्भनिक्षिप्तमपि निधिं हिरण्यादिनिक्षेपरूपं तृणवल्लिसमवस्तृतायां भूमौ तृणैर्वल्लिभिश्च सर्वतः संछन्नायां वसुधरायां नयनाभ्यां लोचनाभ्यां साक्षाद् अप्रेक्षमाणा अपि कुशला विशदहृदया जना बुद्ध्या तथाविधौष्मादिलिंगोपलंभात् प्रेक्षन्ते निश्चन्वन्तीति । यतः—"पेच्छंता वि न पेच्छंति लोयणा हिययचक्खुपरिहीणा । हिययं पुण लोयणवज्जियं पि दूरं पलोएइ ॥ १ ॥" ॥ १६० ॥

॥ इति पारिणामिकीबुद्धिज्ञातानि समाप्तानि ॥ ४ ॥

अथ बुद्धिवक्तव्यतामुपसंहरन्नेतज्ज्ञानश्रवणफलमाह;—

**कयमेत्थ पसंगेणं एमादि सुणंतगाण पाएणं। भवाण णिउणबुद्धी जायति सव्वत्थ फलसारा ॥ १६१ ॥**

कृतं पर्याप्तमत्र ज्ञातनिर्देशे प्रसङ्गेनातिप्रपञ्चभणनलक्षणेन, अनाद्यनन्तकाले भूतभवद्भविष्यतां प्रस्तुतबुद्धिज्ञातानामानन्त्येन ज्ञातुं वक्तुं वा अशक्यत्वात् । प्रतिबुद्धेरेकैकज्ञातभणनेऽपि प्रस्तुतबोधसम्भवात् किं ज्ञातभूयस्त्वमित्याशङ्क्याह;—'एमाइ'त्ति एवमादि निर्दिष्टज्ञातमुख्यं बुद्धिज्ञातजातमन्यदपि शृण्वतां सम्यग् आकर्णयतां सतां प्रायेण बाहुल्येन भव्यानां रक्तद्विष्टत्वादिदोषवर्जितत्वेन श्रवणयोग्यानां जीवानाम् । किमित्याह—निपुणबुद्धिर्जिज्ञासितवस्तुगर्भग्राहकत्वेन निपुणा सूक्ष्मा मतिर्जायते समुल्लसति सर्वत्र धर्मार्थादौ फलसाराऽवश्यम्भाविसमीहितफललाभसुन्दरा । प्रायोग्रहणं निकाचितज्ञानावरणादिकर्मणां माषतुषादीनामेतच्छ्रवणेऽपि तथाविधबुद्ध्युद्भवाभावेन मा भूद् व्यभिचार इति । परमेतज्जिज्ञासापि महाफलैव, यथोक्तं, "जिज्ञासायामपि ह्यत्र किंचित् कर्म निवर्त्तते । नाक्षीणपाप एकान्तात् प्राप्नोति कुशलां धियम् ॥ १ ॥" ॥ १६१ ॥

उपायान्तरमपि बुद्धिवृद्धाववन्ध्यं समस्तीति ज्ञापयन्नाह;—

**भत्तीए बुद्धिमंताण तहय बहुमाणओ य एएसिं। अपओसयसंसाओ एयाण वि कारणं जाण॥१६२॥**

भक्त्या उचितान्नपानादिसम्पादनपादधावनग्लानावस्थाप्रतिजागरणादिरूपया बुद्धिमतां प्रस्तुतबुद्धिधनानां, तथा

चेति समुच्चये, बहुमानतश्चिन्तारत्नकामदुघादिवस्तुभ्योऽपि समधिकादुपादेयतापरिणामात् । चकारोऽवधारणार्थो भिन्न-क्रमश्च । तत एतेषामेव बुद्धिमतां तथा अप्रद्वेषप्रशंसात इति अप्रद्वेषाद् अमत्सराद् ईर्ष्यापरिहारलक्षणात्, प्रशंसातश्च अहो धन्याः पुण्यभाज एते ये एवं पुष्कलमतिपरीततया स्वपरोपकारपरा वर्त्तन्त इति बुद्धिर्जायते इति प्रक्रमः । ननु बुद्धिमद्विषया भक्त्यादयोऽपि कथमाविर्भवन्तीत्याह;—एतेषामपि भक्त्यादीनां कारणं हेतुर्वर्त्तते इति जानीहि समवबुध्यस्व भो भोः! अन्तेवासिन् ! ॥ १६२ ॥

के इत्याह—

**कल्लाणमित्तजोगो एयाणमिमस्स कम्मपरिणामो। अणहो तहभवत्तं तस्सावि तहपुरिसकारजुयं॥१६३॥**

कल्याणमित्रयोगः स्वपरयोः सर्वदा श्रेयस्कराणां सुहृदां साधुसाधर्मिकस्वरूपाणां योगः सम्बन्धः, तत्सम्बन्धस्य सर्वानुचितनिरोधेन उचितप्रवृत्त्यसाधारणकारणत्वाद् एतेषां भव्यानाम् । ननु कल्याणमित्रयोगोऽपि किंहेतुक इत्याशंक्याह—अस्य कल्याणमित्रयोगस्य कारणं कर्मपरिणामः भवान्तरोपात्तदैवपरिणतिरूपः, अनघः पुण्यानुबन्धित्वेन सुवर्णघटाकारतया निर्दोषः । नहि अनीदृशकर्मणो जन्तवः कल्याणमित्रयोगवन्तो जायन्त इति । एषोऽपि किंनिबन्धन इत्याह—तथाभव्यत्वं तस्यापि अनघकर्मपरिणामस्य कारणं भव्यत्वं नाम सिद्धिगमनयोग्यत्वं अनादिः पारिणामिको भावः । तथाभव्यत्वं तु एतद् एव विचित्रं द्रव्यक्षेत्रादिभेदेन जीवानां बीजाधानादिहेतुः । कीदृशमित्याह;—तथापुरुषकारयुतं तथा तत्प्रकारोऽनन्तरपरंपरादिभेदभाक्फलहेतुर्यः पुरुषकारो जीववीर्योल्लासरूपश्चरमपुद्गलपरावर्त्तवशसमुन्मी-

लितः तेन युतम्। सर्वेषामपि भव्यानां तथाभव्यत्वमस्त्येव, परं तथाविधपुरुषकारविकलं न प्रकृतकर्मपरिणामहेतुतया सम्पद्यत इति प्रस्तुतविशेषणोपादानं कृतमिति ॥ १६३ ॥

ननु कथमित्थं अनेककारणा बुद्धिर्जाता इत्याशङ्क्य सर्वमेव कार्यमनेककालादिकारणजन्यमिति दर्शयन्नाह;—

**कालो सहावनियई पुव्वकयं पुरिसकारणेगंता। मिच्छत्तं ते चेव उ समासओ होंति सम्मत्तं ॥ १६४ ॥**

कालस्वभावनियतिपूर्वकृतपुरुषकारणरूपा एकान्ताः सर्वेऽप्येकका मिथ्यात्वं तत एव समुदिताः परस्परात्यजद्वृत्तयः सम्यक्त्वरूपतां प्रतिपद्यन्ते। इति गाथातात्पर्यार्थः ॥

तत्र काल एव एकान्तेन जगतः कारणमिति कालवादिनः प्राहुः। तथाहि;—सर्वस्य शीतोष्णवर्षवनस्पतिपुरुपादेर्जगतः प्रभवस्थितिविनाशेषु ग्रहोपरागयुतियुद्धोदयास्तमयगमनागमनादौ च कालः कारणम्, तमन्तरेण सर्वस्यास्यान्यकारणत्वाभिमतभावसद्भावेऽप्यभावात्। तदुक्तं—"कालः पचति भूतानि कालः संहरते प्रजाः। कालः सुप्तेषु जागर्त्ति कालो हि दुरतिक्रमः ॥ १ ॥" असदेतत्, तत्कालसद्भावेऽपि वृष्ट्यादेः कदाचिददर्शनात्। न च तदभवनमपि तद्विशेषकृतमेव, नित्यैकरूपतया तस्य विशेषाभावात्। विशेषे वा तज्जननाजननस्वभावतया तस्य नित्यत्वव्यतिक्रमात्,—स्वभावभेदाद् भेदसिद्धेः। न च वायुमण्डलादिकृतो वर्षादिविशेषः, तस्याप्यहेतुकतया भावात्। न च काल एव तस्य हेतुः, इतरेतराश्रयदोषप्रसक्तेः—सति कालभेदे वर्षादिभेदहेतोर्ग्रहमण्डलादेर्भेदः, तद्भेदाच्च कालभेद इति परिस्फुटमितरेतराश्रयत्वम्। अन्यतः कारणाद् वर्षादिभेदेऽभ्युपगम्यमाने न काल एवैकः कारणं भवेदित्यभ्युपगमविरोधः, कालस्य

च कुतश्चिद् भेदाभ्युपगमेऽनित्यत्वमित्युक्तम् । तत्र च प्रभवस्थितिनाशेषु यद्यपरः कालः कारणम्, तदा तत्रापि स एव
पर्यनुयोग इत्यनवस्थानाद् न वर्षादिकार्योत्पत्तिः स्यात् । न चैकस्य कारणत्वं युक्तं, क्रमयौगपद्याभ्यां तद्विरोधात् । तन्न
काल एवैकः कारणं जगतः ॥ १ ॥

अपरे तु स्वभावत एव भावा जायन्त इति वर्णयन्ति । अत्र यदि स्वभावकारणा भावा इति तेषामभ्युपगमः, तदा
स्वात्मनि क्रियाविरोधो दोषः । नह्यत्युत्पन्नानां तेषां स्वभावः समस्ति । उत्पन्नानां तु स्वभावसंगतावपि प्राक्स्वभावाऽ-
भावेऽप्युत्पत्तेर्निर्वृत्तत्वाद् न स्वभावस्तत्र कारणं भवेत् । अथवा कारणमन्तरेण भावा भवन्ति स्वपरकारणनिमित्तज-
न्मनिरपेक्षतया सर्वहेतुनिराशंसस्वभावा भावा इति शब्दार्थः । तर्हि प्रत्यक्षविरोधो दोषः । तथा हि—अध्यक्षानुपलम्भा-
भ्यामन्वयव्यतिरेकतो बीजादिकं तत्कारणत्वेन निश्चितमेव । यस्य हि यस्मिन् सत्येव भावः, यस्य च विकाराद् यस्य
विकारः, तत्तस्य कारणत्वमुच्यते । उच्छूनादिविशिष्टावस्थाप्राप्तं च बीजं कण्टकादितैक्ष्ण्यादेरन्वयव्यतिरेकवदध्यक्षानुप-
लम्भाभ्यां कारणतया निश्चितमिति न स्वभावैकान्तवादोऽपि ज्यायान् ॥ २ ॥

सर्वस्य वस्तुनस्तथा तथा नियतरूपेण भवनाद् नियतिरेव कारणमिति केचित् । तदुक्तं;—"प्राप्तव्यो नियतिबलाश्रयेण
योऽर्थः सोऽवश्यं भवति नृणां शुभोऽशुभो वा । भूतानां महति कृतेऽपि हि प्रयत्ने नाभाव्यं भवति न भाविनोऽस्ति
नाशः ॥ १ ॥" असदेतत्, शास्त्रोपदेशवैयर्थ्यप्रसक्तेः, तदुपदेशमन्तरेणाप्यर्थेषु नियतिकृतबुद्धेर्नियत्यैव भावात् । दृष्टा-
दृष्टफलशास्त्रप्रतिपादितशुभाशुभक्रियाफलनियमाभावश्च स्यात् । इति केवलनियतिवादोऽपि न श्रेयान् ॥ ३ ॥

कालादिकारणस्य सम्य० मिथ्यात्वभेदप्र०

जन्मान्तरोपात्तमिष्टानिष्टफलदं कर्म सर्वजगद्वैचित्र्यकारणमिति कर्मवादिनः । तथा चाहुः;—"यथा यथा पूर्वकृ-
तस्य कर्मणः फलं निधानस्थमिवावतिष्ठते । तथा तथा तत्प्रतिपादनोद्यता प्रदीपहस्तेव मतिः प्रवर्त्तते ॥ १ ॥" असदे-
तत्, कुलालादेर्घटादिकारणत्वेनाध्यक्षतः प्रतीयमानस्य परिहारेणापराद्दष्टकारणप्रकल्पनयाऽनवस्थाप्रसङ्गतः क्वचिदपि
कारणप्रतिनियमानुपपत्तेः । न च स्वतन्त्रं कर्म जगद्वैचित्र्यकारणमुपपद्यते, तस्य कर्त्रधीनत्वात् । न चैकस्वभावात्
ततो जगद्वैचित्र्यमुपपत्तिमत्, कारणवैचित्र्यमन्तरेण कार्यवैचित्र्यायोगात् । अनेकस्वभावत्वे च कर्मणो नाममात्रनि-
बन्धनैव विप्रतिपत्तिः, पुरुष–काल–स्वभावादेरपि जगद्वैचित्र्यकारणत्वेनार्थतोऽभ्युपगमात् । इति कर्मैकान्तवादोऽपि
न विचारसहः ॥ ४ ॥

अन्ये तु वर्णयन्ति;—पुरुष एवैकः सकललोकस्थितिसर्गप्रलयहेतुः प्रलयेऽप्यलुप्तज्ञानातिशयः । तथा चोक्तं "ऊर्ण-
नाभ इवांशूनां चन्द्रकान्त इवाम्भसां । प्ररोहाणामिव प्लक्षः स हेतुः सर्वजन्मनाम् ॥ १ ॥" इति ॥ एतदपि न घटते,
यतः प्रेक्षापूर्वकारिणां प्रवृत्तिः प्रयोजनवत्तया व्याप्ता, अतः किं प्रयोजनमुद्दिश्यायं जगत्करणे प्रवर्त्तते ? नेश्वरादिप्रेर-
णात्, अस्वातन्त्र्यप्रसक्तेः; न परानुग्रहार्थम्, अनुकम्पया दुःखितसत्त्वनिर्वर्त्तनानुपपत्तेः । न तत्कर्मप्रक्षयार्थं, दुःखित-
सत्त्वनिर्माणे प्रवृत्तेस्तत्कर्मणोऽपि तत्कृतत्वेन तत्प्रक्षयार्थं तन्निर्माणप्रवृत्तावप्रेक्षापूर्वकारितापत्तेः । इति नैतद्वादोऽपि
विदुषां मनोमोदावहः ॥ ५ ॥

अतो न कालाद्येकान्ताः प्रमाणतः सम्भवन्तीति तद्वादो मिथ्यावाद इति । त एवान्योऽन्यसव्यपेक्षानित्याद्येकान्त-

मित्राणि को देशः कौ व्ययागमौ । कश्चाहं का च मे शक्तिरिति चिन्त्यं मुहुर्मुहुः ॥ १ ॥" इति । अनुचितारम्भस्य निष्फलत्वेन चित्तविषादाद्यनेकानर्थसार्थप्रदानप्रत्यलत्वात् अनुबन्धं चैवानुबन्धमपि च तादात्विककार्यसिद्धावप्युत्तरोत्तरफलरूपं यत्नेन महता आदरेण आलोचयतीति । यतः—"सगुणमपगुणं वा कुर्वता कार्यजातं, परिणतिरवधार्या यत्नतः पण्डितेन । अतिरभसकृतानां कर्मणामाविपत्तेर्भवति हृदयदाही शल्यतुल्यो विपाकः ॥ १ ॥" इति ॥ १६७ ॥

**बुज्झति य जहाविसयं सम्मं सव्वंति एत्थुदाहरणं । वेदज्झयणपरिच्छाबडुगदुगं छागघातम्मि ॥१६८॥**

बुध्यते निर्णयति । चः समुच्चये । ततो न केवलमालोचयति, बुध्यते च यथाविषयं बोद्धुमिष्टवस्त्वंशरूपविषयानतिक्रमेण सम्यक् संशयविपर्यासबोधदोषपरिहाराद् ऐदम्पर्यशुद्धं सर्वं धर्मार्थादिवस्तु । इति वाक्यपरिसमाप्तौ । अत्र सम्यग् यथाविषयबोधे तद्विपर्यये चोदाहरणं ज्ञातं वेदाध्ययनपरीक्षाबटुकद्विकं—वेदाध्ययने उपस्थिते उपाध्यायेन परीक्षायां कोऽनयोर्मन्त्रिरूपितार्थस्य यथावद् बोद्धा तदितरो वेतिरूपायां मीमांसायां प्रक्रान्तायां समादिष्टं बटुकद्विकं पर्वतकनारदलक्षणम्; क्वेत्याह—छागघाते पशुवधे ॥ १६८ ॥

एतदेव भावयन्नाह;—

**वेयरहस्सपरिच्छा जोगच्छाग त्ति तत्थ हंतव्वो । जत्थ ण पासति कोई गुरुआणा एत्थ जतितव्वं ॥१६९॥**
**एगेणमप्पसारियदेसे वावादितो पयत्तेण । अन्नेण उ पडिसेहो गुरुवयणत्थो त्ति नेव हतो ॥ १७० ॥**

चेइयमयम्मि नयरी सुत्तिमई जयसिरिव मुत्तिमई[1] । अत्थि पवित्थरियगुणा पुरिसत्थाराहगजणोहा ॥ १ ॥ पाउस-कालकयंवोव वहलसुयपरिमलुच्छलियकित्ती । खीरकयंवो विप्पो समासि अज्झावओ तत्थ ॥ २ ॥ पव्वयओ तस्स सुओ माहणपुत्तो य नारओ बीओ । तईओ वसूनिवसुओ सीसत्तमुवागया संता ॥ ३ ॥ आरिसवेयमहिज्जंति णेव रज्जंति कत्थई विसए । तस्स समीवे अण्णम्मि वासरे साहुसंघाडो ॥ ४ ॥ भिक्खत्थमागओ तस्स मंदिरे पेच्छिऊण ते तिन्नि । वेयमहिज्जंते णाणिणेगमुणिणा तओ भणियं ॥ ५ ॥ उद्दिसिय दुइज्जमुणिं छत्ताणेयाण रायतणओ जो । होही स निवो इयरेसु दोसु एगस्स नरयगई ॥ ६ ॥ अन्नस्स सग्गगमणं होही कडगंतरेण तं सव्वं । निसुयमुवज्झाएणं तओ स चिंता-उरो जाओ ॥ ७ ॥ नायं जहा नरिंदो वसू भविस्सइ किमेत्थ चिंताए । इयरेसु दोसु दुग्गइगामी को होज्ज इयरो वा ॥ ८ ॥ पारद्धा य परिच्छा मा होउ अपत्तविज्जदाणाओ । मज्झमवज्जमसज्झं तवतित्थण्हाणमाईणं ॥ ९ ॥ छगखल-मलमापूरिऊण लक्खारसेण वहुलाए । अट्ठमितिहीनिसाए पव्वयनामा सुओ भणिओ ॥ १० ॥ अज्झावएण, एसो छगलो मंतेहिं थंभिओ विहिओ । ता उप्पाडिय नेउं जत्थ ण पासइ परो कोइ ॥ ११ ॥ तत्थ तए हंतव्वो एवं वेयत्थसुणण-जोगत्तं । संपज्जइ तेण तहा गुरुवयणमलंघणिज्जमिणं ॥ १२ ॥ मन्नंतेण स छगलो गहिओ रच्छामुहम्मि सुन्नम्मि । गंतूण जाव निहओ ताहे लक्खारसेणेस ॥ १३ ॥ उक्किन्नो सव्वंगं रुहिरमिमं मण्णमाणओ ण्हाओ । गंतुं सरे सचेलो पिउणो य निवेइयं तेण ॥ १४ ॥ भणिओ जणगेण कहं हओ इमो जेण जंभगा देवा । सव्वत्थ संचरंता पेच्छंति नहम्मि

---

1 क. मुत्तिमई ।

व्यपोहेनैकानेकस्वभावकार्यनिर्वर्त्तनपटवः प्रमाणविषयतया परमार्थसन्त इति तद्वादः सम्यग्वाद इति स्थितम् ॥१६४॥

अयं च कालादिकारणकलापो यत्रावतरति तत्स्वयमेव शास्त्रकारः समुपदिशन्नाह—

**सव्वम्मि चेव कज्जे एस कलावो बुहेहिं निद्दिट्ठो। जणगत्तेण तओ खलु परिभावेयव्वओ सम्मं ॥ १६५ ॥**

सर्वस्मिन् निरवशेषे, चैवशब्दोऽवधारणार्थः, ततः सर्वस्मिन्नेव कुम्भाम्भोरुहप्रासादाङ्कुरादौ नारकतिर्यग्नरामरभवभाविनि च निःश्रेयसाभ्युदयोपतापहर्षादौ वा बाह्याध्यात्मिकभेदभिन्ने कार्ये न पुनः क्वचिदेव एष कालादिकलापः कारणसमुदायरूपः बुधैः सम्प्रतिप्रवृत्तदुःषमातमस्विनीबललब्धोदयकुबोधतमःपूरापोहदिवाकराकारश्रीसिद्धसेनदिवाकरप्रभृतिभिः पूर्वसूरिभिः निर्दिष्टो निरूपितो जनकत्वेन जन्महेतुतया यतो वर्त्तते। ततो जनकत्वनिर्देशात्, खलुः अवधारणे भिन्नक्रमश्च, ततः परिभावयितव्यकः परिभावनीय एव, न पुनः श्रुतज्ञानचिन्ताज्ञानगोचरतयैव स्थापनीयः, सम्यग् यथावत्, भावनाज्ञानाधिगतानां भावतोऽधिगतत्वसम्भवात् ॥ १६५ ॥

अथ प्रसङ्गत एवैतत्कारणकलापान्तर्गतौ सुबोधतया लब्धप्राधान्यौ "सुकृतं धनस्य बीजं व्यवसायः सलिलमथ धृतिर्नीतिः। फलमुपनीय नराणां तत्पाकमुपैति कालेन ॥ १ ॥" इत्यादिवाक्येषु पूर्वाचार्यैरुपन्यस्तौ दैवपुरुषकारावधिकृत्य किञ्चिदाह;—

**एत्तो च्चिय जाणिज्जति विसओ खलु दिव्वपुरिसगाराणं। एयं च उवरि वोच्छं समासतो तंतनीतीए॥१६६॥**

इत एव कालादिकलापस्य कारणभावप्रज्ञानादेव ज्ञायते निश्चीयते विशदविमर्शवशावदातीभूतमतिभिर्विषयो गोचरः, खलुर्वाक्यालङ्कारे, दैवपुरुषकारयोर्दैवस्य पुराकृतस्य कर्मणः, पुरुषकारस्य च जीवव्यापाररूपस्य—इयद्दैवस्य फलमियच्च पुरुषकारस्येत्यर्थः । अयं च मतिमद्भिः कथंचिद् विज्ञायमानोऽपि न प्रायेण सुखबोधः स्यादिति परिभाव्याह;—एतं दैवपुरुषकारविषयं, च पुनरर्थे, तत एवं पुनरुपरि एतच्छास्त्राग्रभागे 'जमुदग्गं थेवेण वि कम्मं परिणम'—इत्यादिना ग्रन्थेन वक्ष्ये भणिष्यामि समासतः संक्षेपात् तन्त्रयुक्त्या शास्त्रसिद्धोपपत्तिभिरित्यर्थः, विस्तरभणनस्य दुष्करत्वाद् दुर्बोधत्वाच्च श्रोतॄणामिति ॥ १६६ ॥

इत्थं बुद्धिग्रन्थश्रवणोपलब्धबुद्धिर्बुधो यद्विदध्यात् तदाह;—

बुद्धिजुओ आलोयइ धम्मट्ठाणं उवाहिपरिसुद्धं । जोगत्तमप्पणो च्चिय अणुबंधं चेव जत्तेण ॥ १६७ ॥

बुद्धियुतः प्राक्प्रतिपादितौत्पत्तिक्यादिमतिपरिगतो जन्तुरालोचयति विमृशति किमित्याह;—धर्मस्य सर्वपुरुषार्थप्रथमस्थानोपन्यस्तस्यात एव सर्वसमीहितसिद्ध्यवन्ध्यनिबन्धनस्य श्रुतचारित्राराधनारूपस्य स्थानं विशेषो धर्मस्थानम्, उपाधिभिर्विशेषणैर्द्रव्यक्षेत्रकालभावलक्षणैरुत्सर्गापवादवादास्पदभावमुपगतैः परिशुद्धमप्राप्तदोषम्, यथा सम्प्रति एते द्रव्यादयः किं साधका बाधका वा वर्त्तन्ते प्रस्तुतधर्मस्थानस्य, यतः पठन्ति;—"उत्पद्यते हि साऽवस्था देशकालामयान् प्रति । यस्यामकृत्यं कृत्यं स्यात् कर्म कार्यं च वर्जयेत् ॥ १ ॥" तथा योग्यत्वमुचितत्वमात्मनोऽपि च स्वस्यापि न केवलं धर्मस्थानमित्यपिचशब्दार्थः, आलोचयतीत्यनुवर्त्तते । यथा कस्य धर्मस्थानस्याहं योग्यः, यथोक्तं—"कः कालः कानि

चिन्त्यं मुहुर्मुहुः ॥ १ ॥" इति । अनुचितारम्भस्य निष्फ-
मित्राणि को देशः कौ व्ययागमौ । कश्चाहं का च मे शक्तिरिति चिन्त्यं मुहुर्मुहुः ॥ १ ॥" इति । अनुचितारम्भस्य निष्फ-
लत्वेन चित्तविषादाद्यनेकानर्थसार्थप्रदानप्रत्यलत्वात् अनुबन्धं चैवानुबन्धमपि च तादात्विककार्यसिद्धावप्युत्तरोत्तरफल-
रूपं यत्नेन महता आदरेण आलोचयतीति । यतः—"सगुणमपगुणं वा कुर्वता कार्यजातं, परिणतिरवधार्या यत्नतः
पण्डितेन । अतिरभसकृतानां कर्मणामाविपत्तेर्भवति हृदयदाही शल्यतुल्यो विपाकः ॥ १ ॥" इति ॥ १६७ ॥

**बुज्झति य जहाविसयं सम्मं सव्वंति एत्थुदाहरणं । वेदज्झयणपरिच्छाबडुगदुगं छागघातम्मि ॥१६८॥**

बुध्यते निर्णयति । चः समुच्चये । ततो न केवलमालोचयति, बुध्यते च यथाविषयं बोद्धुमिष्टवस्त्वंशरूपविषयानति-
क्रमेण सम्यक् संशयविपर्यासबोधदोषपरिहाराद् ऐदम्पर्यशुद्धं सर्वं धर्मार्थादिवस्तु । इति वाक्यपरिसमाप्तौ । अत्र सम्यग्
यथाविषयबोधे तद्विपर्यये चोदाहरणं ज्ञातं वेदाध्ययनपरीक्षाबडुकद्विकं—वेदाध्ययने उपस्थिते उपाध्यायेन परीक्षायां
कोऽनयोर्मन्निरूपितार्थस्य यथावद् बोद्धा तदितरो वेतिरूपायां मीमांसायां प्रक्रान्तायां समादिष्टं बडुकद्विकं पर्वतक-
नारदलक्षणम्; क्वेत्याह—छागघाते पशुवधे ॥ १६८ ॥

एतदेव भावयन्नाह;—

**वेयरहस्सपरिच्छा जोगच्छाग त्ति तत्थ हंतव्वो । जत्थ ण पासति कोई गुरुआणा एत्थ जतितव्वं ॥१६९॥**

**एगेणमप्पसारियदेसे वावादितो पयत्तेण । अन्नेण उ पडिसेहो गुरुवयणत्थो त्ति नेव हतो ॥ १७० ॥**

चेइविसयम्मि नयरी सुत्तिमई जयसिरिव मुत्तिमई[1] । अत्थि पवित्थरियगुणा पुरिसत्थाराहगजणोहा ॥ १ ॥ पाउसकालकयंबोव बहलसुयपरिमलुच्छलियकित्ती । खीरकयंबो विप्पो समासि अज्झावओ तत्थ ॥ २ ॥ पव्वयओ तस्स सुओ माहणपुत्तो य नारओ वीओ । तईओ वसूनिवसुओ सीसत्तमुवागया संता ॥ ३ ॥ आरिसवेयमहिज्जंति णेव रज्जंति कत्थई विसए । तस्स समीवे अण्णम्मि वासरे साहुसंघाडो ॥ ४ ॥ भिक्खत्थमागओ तस्स मंदिरे पेच्छिऊण ते तिन्नि । वेयमहिज्जंते णाणिणेगमुणिणा तओ भणियं ॥ ५ ॥ उद्दिसिय दुइज्जमुणिं छत्ताणेयाण रायतणओ जो । होही स निवो इयरेसु दोसु एगस्स नरयगई ॥ ६ ॥ अन्नस्स सग्गगमणं होही कडगंतरेण तं सव्वं । निसुयमुवज्झाएणं तओ स चिंताउरो जाओ ॥ ७ ॥ नायं जहा नरिंदो वसू भविस्सइ किमेत्थ चिंताए । इयरेसु दोसु दुग्गइगामी को होज्ज इयरो वा ॥ ८ ॥ पारद्धा य परिच्छा मा होउ अपत्तविज्जदाणाओ । मज्झमवज्जमसज्झं तवतित्थण्हाणमाईणं ॥ ९ ॥ छगखलमलमापूरिऊण लक्खारसेण वहुलाए । अट्ठमितिहीनिसाए पव्वयनामा सुओ भणिओ ॥ १० ॥ अज्झावएण, एसो छगलो मंतेहिं थंभिओ विहिओ । ता उप्पाडिय नेउं जत्थ ण पासइ परो कोइ ॥ ११ ॥ तत्थ तए हंतव्वो एवं वेयत्थसुणणजोगत्तं । संपज्जइ तेण तहा गुरुवयणमलंघणिज्जमिणं ॥ १२ ॥ मन्नंतेण स छगलो गहिओ रच्छामुहम्मि सुन्नम्मि । गंतूण जाव निहओ ताहे लक्खारसेणेस ॥ १३ ॥ उक्किन्नो सव्वंगं रुहिरमिमं मण्णमाणओ ण्हाओ । गंतुं सरे सचेलो पिउणो य निवेइयं तेण ॥ १४ ॥ भणिओ जणगेण कहं हओ इमो जेण जंभगा देवा । सव्वत्थ संचरंता पेच्छंति नहम्मि

---

1 क. मुत्तिमई ।

ताराओ ॥ १५ ॥ तं चेव अप्पणा पेच्छमाणओ कह भणसि जह निहओ । एस अपेच्छिज्जंतो अहो ! महामूढया तुज्झ ॥ १६ ॥ तत्तो बहुलाए चउद्दसीए पत्ताए णारओ भणिओ । जह एस तए भद्दय ! हंतव्वो एवमेवंति ॥ १७ ॥ बहुमन्नियगुरुवयणो ताहे सो जाइ जेसु ठाणेसु । काणणसुरभवणाइसु पेच्छंति वणस्सइसुराई ॥१८॥ इय चिंततेण न किंचि अत्थि ठाणं न जत्थ दीसेज्जा । कोई केणइ ता णूणमेस वज्झो न गुरुआणा ॥ १९ ॥ आगंतूणं गुरुणा निवेइया परिणई णिया सव्वा । तस्स सुओच्चियपन्नत्तणेण संतोसमणुपत्तो ॥ २० ॥ भणितं च तेन—"उदीरितोऽर्थः पशुनापि गृह्यते हयाश्च नागाश्च वहन्ति नोदिताः । अनुक्तमप्यूहति पण्डितो जनः परेङ्गितज्ञानफला हि बुद्धयः ॥ १ ॥" भणिऊण तओ न कस्सइ रहस्समेयं पयासणिज्जंति । णो सद्दहंति जेणं मूढा कहियंपि तत्तपयं ॥ २१ ॥ इय नायमइविसेसेण तेण गुरुणा निसेहिओ पुत्तो । इयरो वेयज्झयणेऽणुमन्निओ उचियपन्नोत्ति ॥ २२ ॥

अथ गाथाक्षरार्थः;—'वेयरहस्सपरिच्छा' इति वेदरहस्याध्ययने प्रस्तुते जाताशङ्केनोपाध्यायेन परीक्षा द्वयोश्छात्रयोः कर्त्तुमारब्धा । 'जोगच्छागत्ति' त्ति योगेन युक्त्या न तु सत्यरूप एव छागश्छगलक उपस्थापितः । इति पूरणे । तत्र हन्तव्यो यत्र न पश्यति कोऽपि । गुर्वाज्ञा अध्यापकोपदेशरूपा वर्त्तते । ततोऽत्र गुर्वाज्ञायां यतितव्यमलङ्घनीयत्वात् तस्या इति परिभावितं द्वाभ्यामपि ॥ १६९ ॥

एकेन पर्वतकेन प्रसरणं प्रसर्प्पणं जनस्य प्रसारः स यत्रास्ति स प्रसारिकः तत्प्रतिषेधाद् अप्रसारिकः स चासौ देशश्च भूभागस्तत्र अन्यलोकासञ्चारे रथ्यामुखादावित्यर्थः, व्यापादितः प्रयत्नेन गाढादरेण महत्या निष्कृपवृत्त्येत्यर्थः ।

अन्येन तु नारदेन पुनः प्रतिषेधो निवारणं वधस्य गुरुवचनार्थो वर्त्तते, सर्वादर्शनेन वधस्यासम्भावनीयत्वात्, इत्यस्माद् हेतोर्नैव न सर्वथा हतः प्रस्तुतश्छाग इति ॥ १७० ॥

यथाविषयमवगमे च सर्वकार्याणां यत्करोति तदाह;—

**आढवति सम्ममेसो तहा जहा लाघवं न पावेति। पावेति य गुरुगत्तं रोहिणिवणिएण दिट्ठंतो ॥१७१॥**

आरभते उपक्रमते सम्यग् निपुणोपायलाभेन सर्वमपि कार्यम् एष प्रस्तुतबुद्धिमान् मानवः। तथा शकुनादिबुद्धिपूर्वकं यथा लाघवं प्रारब्धानिष्पादनेन पराभवरूपं न नैव प्राप्नोति लभते। पठ्यते च;—"के वा न स्युः परिभवपदं निष्फलारम्भयत्नाः?" इति तर्हि किं प्राप्नोतीत्याह;—प्राप्नोति च गुरुकत्वं सर्वलोकगरिमाणम्। अत्रोदाहरणमाह—रोहिणीवणिजा रोहिण्यभिधानस्नुषोपलक्षितत्वेन वाणिजकेन दृष्टान्तो वाच्यः—रोहिणीवणिगेव दृष्टान्त इत्यर्थः ॥ १७१ ॥

दृष्टान्तमेव भावयति;—

**रायगिहे धणसेट्ठी धणपालाइ सुतासु चत्तारि। उज्झिय भोगवती रक्खिया य तह रोहिणी वहुगा१७२**

**वयपरिणामे चिंता गिहं समप्पेमि तासि पारिच्छा। भोयणसयणणिमंतणभुत्ते तब्बंधुपच्चक्खं ॥१७३॥**

**पत्तेयं अप्पिणणं पालिज्जह मग्गिया य देज्जाह। इय भणिउमायरेणं पंचण्हं सालिकणयाणं ॥ १७४ ॥**

**पढमाए उज्झिया ते वीयाए छोल्लियत्ति ततियाए। वद्धकरंडीरक्खण चरिमाए रोहिया विहिणा ॥१७५॥**

कालेणं वहुएणं भोयणपुव्वं तहेव जायणया। पढमा सरणविलक्खा तह बितिया ततिय अप्पिणणं॥१७६॥
चरिमाए कोंचिगाओ खेत्ताओ तुम्ह वयणपालणया। सा एवं चिय इहरा सत्तिविणासा ण सम्मं ति१७७
तब्बंधूणभिहाणं तुब्भे कल्लाणसाहगा मेत्ति। किं जुत्तमेत्थ मज्झं ते आहु तुमं मुणेसि त्ति ॥ १७८ ॥
तत्तो य कज्जवुज्झण–कोट्टण–भंडार–गिहसमप्पणया। जाहासंखमिमीणं नियकज्जं साहुवाओ य॥१७९॥

रायगिहं नाम पुरं समत्थि तत्थासि हसियवेसमणो। निययविहवेण भणिओ णायभिहाणं धणो नाम ॥ १ ॥ लज्जा-लुत्तकुलीणत्तसीलपमुहेण भूरिणा धणियं। गुणभूसणेण हयदूसणेण भूसं परं पत्ता ॥ २ ॥ भद्दा अहेसि भज्जा तीए य समं मणोरमे विसए। सेवंतस्स कमेणं चत्तारि इमे सुया जाया ॥ ३ ॥ धणपालो धणदेवो धणगोवो तह चउत्थओ एसो। धणरक्खिउत्ति पियमाइपमुहगुरुलोयविणयपरा ॥ ४ ॥ निययायरणवसाओ संजाया उज्झियाइनामाणो। पुव्विं नामंतरओ लोगेणुकित्तियाओ वि ॥ ५ ॥ चत्तारि वहूओ उज्झिया इमा दुइया भोगवइनामा। तइया रक्खियसन्ना चउत्थिया रोहिणी होइ ॥ ६ ॥ वच्चंति ताण दिवसा नियकुलसीलाणुवत्तणपहाणा। पत्तम्मि थेरभावे कुडुंबचिंतापरो ता स धणो ॥ ७ ॥ चिंतेइ मए कालं गयम्मि ठाणंतरमुवगयम्मि। का नाम कुडुंवभरं वोढुं होज्जाहि वहुयासु ॥ ८ ॥ ता जुज्जइ परिक्खा इमासि नियवंधुलोयपच्चक्खं। अपरिट्ठवियकुडुंबा कुडुंविणो जं ण सोहंति ॥ ९ ॥ भोयणमंडवमुद्दंडवेस ताडेत्तु मित्तनायजणं। नियं बहूजणस्स य निमंतए भोयणट्ठाए ॥ १० ॥ णाणाविहभोयणदाणपुव्वगं आयरेण

अइमहया । भुंजावियमि तम्मी कओवयारे सुहासीणे ॥ ११ ॥ तो कलमसालिकणे पुढो पुढो ताण पंच वहुयाण । निय-
हत्थेण समप्पइ भणाइ तह जम्मि समयम्मि ॥ १२ ॥ मग्गामि तम्मि खिप्पं समप्पणिज्जा ममं इमे ताहिं । अंजलिप-
सारपुव्वं पडिवन्ना णमिरसीसाहिं ॥ १३ ॥ सट्ठाणगए बंधवणाइजणे तम्मि आइमा वहुया । ते उज्झेइ किमेए मम गेहे
तुच्छा हुंति? ॥ १४ ॥ जइया मग्गणमेयाण होज्ज तइया जओ कुओ ठाणा । गेण्हेत्तुमहं तायस्स अप्पइस्सामि अचि-
रेण ॥ १५ ॥ वीयाए पुण नित्तुसभावं आणेत्तु भक्खिया विहिया । तइयाए तायसमप्पियत्ति गउरवपरमणाए ॥ १६ ॥
उज्जलवसणेणं गोविऊण णिययम्मि भूसणकरण्डे । वूढा तिकालमणुदिवसमेव पडिजग्गए सम्मं ॥ १७ ॥ चरमाए पुण
नियजणगगेहओ सद्दिऊण बंधुजणो । भणिओ पइवरिसमिमे जह वुड्ढिं जंति तह कज्जं ॥ १८ ॥ पत्ते वासारत्ते वाविया
तेण बंधवजणेण । सुइसलिलपूरियम्मी वप्पम्मि परोहमणुपत्ता ॥ १९ ॥ सव्वेवि उक्खणित्ता पुणरवि आरोविया तओ
जाओ । सरयसमयम्मि एगो पसत्थओ पत्थओ तेहिं ॥ २० ॥ वीयम्मि आढगा वच्छरम्मि खारी तइज्जगे जाया ।
कुंभा चउत्थे पंचमम्मि कुंभसहसाणि ॥ २१ ॥ पत्ते पंचमवरिसे तहेव भोयणपुरस्सरं तेण । मिलियाण ताण बंधवज-
णाण सद्दाविया वहुया ॥ २२ ॥ भणियाओ मम समप्पह सालिकणे पंच जे पुरा तुम्ह । नियहत्थेण समप्पियपुव्वा वरि-
सम्मि पंचमए ॥ २३ ॥ पढमा सरणविलक्खा जाया कुट्ठारओ गहेऊण । जा ते तस्स समप्पइ नियसावपुरस्सरं भणिया
॥ २४ ॥ किं ते च्चिय उय अन्ने इमे कणा ताय! णेव ते भणइ । पुट्ठा ते कत्थ गया तइय च्चिय उज्झिया वाहिं ॥२५॥
वीयावि मग्गिया पुण भणेइ ते भक्खिया इमे अन्ने । तइया रयणकरंडगमज्झाओ कड्ढिउं देइ ॥ २६ ॥ जा पुण ताण

चउत्थी वहुया सा मग्गिया भणइ ताय! । ते एवमेवमइभूरिभावमिण्हिं समणुपत्ता ॥ २७ ॥ खित्ताओ कुंचियाओ कुट्ठाराणं धणस्स अग्घम्मि । एए मम जणगगिहे चिट्ठंति अणेगसालासु ॥ २८ ॥ एवं भवंति एए कयरक्खा ताव वाविया संता । सत्तिक्खयाओ नो किंचि हुंति जं निप्फला संता ॥ २९ ॥ तो बहुणा सगडगमाइवाहणेणं विणा न तीरंति । इहमाणेउं ता तप्पयाणकरणाओ आणेह ॥ ३० ॥ तो लद्धसमायारो तासिं वहुयाण सो धणो कुणइ । नियगेहमज्झकज्जेसु चित्तरूवेसु विनिओगं ॥ ३१ ॥ तण्णायबंधवाणं पुरओ च्चिय तेसिं संमएणेव । पढमाए छारछगणाइछड्डणेणं कया वित्ती ॥ ३२ ॥ बीयाए महाणसरंधणेण तह कंडणाइणा चेव । तईयाए नियघरसाररक्खणेणं चउत्थीए ॥ ३३ ॥ गिहनायगत्तणेणं सवेसुवि पुच्छणिज्जकज्जेसु । तह परिणयम्मि सयले अणइक्कमणिज्जणत्तेण ॥ ३४ ॥ बुद्धिपभावो एसो धणस्स जं तेण जाणियसरूवा । अणुरूवकज्जकरणे निजोजियाओ नियवहूओ ॥ ३५ ॥ सरयसमयेंदुमंडलधवला वहला महीयले सयले । उच्छलिया जा कित्ती धणवणिणो सावि बुद्धिफलं ॥ ३६ ॥ अह अन्नो वि उवणओ छट्ठंगे रोहिणीए नायम्मि । भणिओ सुधम्मगणनायगेण एवं सुणेह जहा ॥ ३७ ॥ जह सो धणो तह गुरू जह णायजणो तहा समणसंघो । जह वहुया तह भवा जह सालिकणा तह वयाइं ॥ ३८ ॥ जह सा उज्झियनामा ते सालिकणे समुज्झिऊण परं । पत्ता णाइज्जंतं तह कोइ जिओ कुकम्मवसा ॥ ३९ ॥ सयलसमीहियसंसिद्धिकारए तारए भवदुहाओ । वज्जेत्तु वए मरणाइआवयाओ नियच्छेइ ॥ ४० ॥ अन्नो उण बीयवहुव वत्थभोयणजलाइलाभेणं । भोत्तुं ताइं परलोयदुक्खलक्खक्खणी होइ ॥ ४१ ॥ तत्तो च्चिय जो अन्नो सो ताइं जीवियंव रक्खेत्ता । तइयावहुव जायइ सवेसिं

गउरवड्ढाणं ॥ ४२ ॥ जो पुण तओ वि अन्नो रोहिणिवहुयव वुड्ढिमाणेइ । पंच वि वयाइं जायइ संघपहाणो गणधरो
त्ता ॥ ४३ ॥ अन्नोवि इओ दीसइ ववहारे उवणओ इहं नाए । जह किल कस्सइ गुरुणो सीसा चत्तारि निप्पण्णा ॥४४॥
आयरियत्तणजोगा पज्जाएणं सुएण य समिद्धा । तो चिंतिउं पवत्तो एस समप्पेमि कस्स गणं ॥ ४५ ॥ पुव्वं ताव परिच्छं
करेमि देसंतरे विहाराय । उचियपरिवारसारा विसज्जिया कस्स का सिद्धी ॥ ४६ ॥ इह होइ, तेवि य गया खेमाइगु-
णगणिएसु देसेसु । जो तत्थ सव्वजेट्ठो मायावहुलो कडुयवयणो ॥ ४७ ॥ एगंताणुवगारी निव्वेयं तिव्वमेवमाणीओ । सव्वो
परिवारो जह अचिरा तस्सुज्झगो जाओ ॥ ४८ ॥ वीओ वि सायवहुलत्तणेण णियदेहसंठियं चेव । कारेइ सादरं सीस-
वग्गमवरं न उण किरियं ॥ ४९ ॥ तइओ पुण सारणवारणाइकरणेण निच्चमुज्जुत्तो । रक्खइ पमत्तभावं गच्छंतं तं परी-
वारं ॥ ५० ॥ जो पुण चउत्थगो सो सयलधरामंडलोवलद्धजसो । जिणसमयामयमेहो दुक्करसामन्ननिरओ य ॥ ५१ ॥
ओइन्नदेवलोगं व भूरिसंतोसपोसमणुपत्तं । निययविहारमहीयलमुवजणयंतो नियगुणेहिं ॥ ५२ ॥ देसण्णू कालण्णू पर-
चित्तण्णू जहेव कालाओ । जाओ पभूयपरिवारपरिगओ विहियजणबोहो ॥ ५३ ॥ पत्ता गुरुणो पासे उवलद्धो तेण
तेसिं वुत्तंतो । तो नियगच्छमेलणपुव्वो दिन्नो य अहिगारो ॥ ५४ ॥ सच्चित्तमचित्तं वा जं गच्छे छड्डुणारिहं किंचि ।
पढमेण परिट्ठावणमिमस्स कज्जं त्ति संठवियं ॥ ५५ ॥ जं भत्तं जं पाणं उवगरणं वा गणस्स पाउग्गं । तं दुइएणापरितं-
तेण उप्पाइयव्वं ति ॥ ५६ ॥ उप्पन्नस्स गिलाणसेहाइयाण य मुणीण । रक्खादक्खवियक्खणजोगा तइयम्मि संठविया
॥ ५७ ॥ जो पुण तेसिं कणिट्ठो गुरुभाया तस्स नियगणो सव्वो । वहुपणयपरायणमाणसेण गुरुणा समुवणीओ ॥५८॥

एवं जहजोग्गनिजोजणेण आराहणं परं पत्तो । सो सूरी तह गच्छो सव्वो गुणभायणीभूओ ॥ ५९ ॥

अथ गाथाक्षरार्थः;—राजगृहे नगरे धनदत्तो श्रेष्ठी समभूत् । तस्य च सुभद्राभार्याकुक्ष्युद्भवा धनपालादयो धनपाल–धनदेव–धनगोप–धनरक्षिताः सुतासुसूनवश्चत्वारः समजायन्त । 'उज्झिय'त्ति उज्झिका, भोगवती, रक्षिका, च तथा रोहिणी 'वहुगा' इति वधूव्यः समपद्यन्त ॥ १७२ ॥ १ ॥

"वयपरिणामे चिंता गिहं समप्पेमि तासि पारिच्छा । भोयणसयणनिमंतणभुत्ते तब्बंधुपच्चक्खं" ॥ १७३ ॥ २ ॥

वयःपरिणामे स्थविरभावलक्षणे धनस्य चिन्ता विमर्शरूपा समुदपद्यत, यथा–गृहं समर्प्पयामि आसां वधूनां मध्ये कस्याः? इति । ततस्तासां परीक्षा प्रारब्धा । कथमित्याह–भोजनाय स्वजनानां उपलक्षणत्वाद् वधूसम्बन्धिनां च निमन्त्रणा आकारणरूपा भोजनस्वजननिमन्त्रणा कृता । ततो भुक्ते स्वजनलोके सति तद्बन्धुसमक्षं वधूबन्धुप्रत्यक्षम्॥१७३॥२॥

किमित्याह;—प्रत्येकमेकैकस्या इत्यर्थः, 'अप्पिणणंति' अर्प्पणं स चकार पञ्चानां शालिकणानाम् इत्युत्तरेण योगः । कथमित्याह;—'पालयध्वं, यूयं मार्गिताश्च सत्यो ददध्वमिति' । इति भणित्वा आदरेण यत्नेन स्वहस्तसमर्प्पणरूपेण पञ्चानां पञ्चसङ्ख्यानां शालिकणानां शालिबीजरूपाणाम् ॥ १७४ ॥ ३ ॥

तत्र च प्रथमया वध्वा उज्झितास्ते शालिकणाः, द्वितीयया 'छोल्लिय'त्ति निस्तुषीकृता उपलक्षणत्वाद् भक्षिताश्च ते, इति पूरणार्थः । तृतीयया 'बद्धकरंडीरक्खण'त्ति बद्धानां शुचिवस्त्रेण करण्ड्यां निजालङ्कारसम्बन्धिन्यां क्षिप्त्वा रक्षणमारब्धम् । चरमया रोहिण्या रोहिताः प्रतिवर्षं वपनमानीता विधिना कर्षकलोकप्रसिद्धेनेति ॥ १७५ ॥ ४ ॥

कालेन बहुकेन पञ्चवर्षकलक्षणेन गतेन सता भोजनपूर्वं तथैव समर्प्पणकाल इव सर्वस्वबन्धुलोकप्रत्यक्षं याच्ञा कृता
शालिकणानाम् । तत्र च प्रथमा उज्झिका वधूः स्मरणविलक्षा प्राक्कालार्पितानां तदैव स्मरणेन विलक्षा तदवस्थसम-
र्पणीयाभावात् किंकर्त्तव्यतामूढा संजाता । तथेति प्राग्वत् स्मरणविलक्षैव द्वितीया भोगवती समभूत् । तृतीयया
रक्षिकया समर्प्पणं रत्नकरण्डाद् आकृष्य शालिकणानां कृतम् ॥ १७६ ॥ ५ ॥

परमया रोहिण्यभिधानया च वध्वा कुश्चिकाः शालिकोष्ठागारसम्बन्धिन्यः क्षिप्ताः धनश्रेष्ठिचलनकमलयुगलान्ते ।
भणितं च तया युष्मद्वचनपालना मया कर्त्तव्या, सा 'एवं चिय'त्ति एवमेव कृता भवति, प्रतिवर्षं वपनेन वृद्धिं नय-
नात् । इतरथा शक्तिविनाशात् प्ररोहसामर्थ्यक्षयाद् न सम्यक् तव वचनपालना कृता भवतीति ॥ १७७ ॥ ६ ॥

तद्बन्धूनां वधूस्वजनानामभिधानं भणनं कृतं धनेन, यथा—यूयं कल्याणसाधका मे मम इत्यस्माद् हेतोः, किं यु-
क्तमत्रैवंविधे वधूसमाचारे मम कर्त्तुम्? ततस्ते वधूस्वजनाः 'आहु'त्ति आहुरुक्तवन्तः यथा त्वं मुणसि यद् अत्रोचित-
मिति ॥ १७८ ॥ ७ ॥

ततश्च कज्जवोज्झन—जट्टन—भाण्डागार—गृहसमर्प्पणा यथासङ्ख्यमासां वधूनां निजकार्यं श्रेष्ठिना कृतम् । तत्र कज्ज-
वोज्झनं गृहकचवरशोधनम् । शेषं सुगमम् । साधुवादश्च जनश्लाघारूपः सर्वत्र विजृम्भितः श्रेष्ठिन इति ॥ १७९ ॥ ८ ॥

अनुबन्धप्रधानानि शुभप्रयोजनानि स्वं स्वरूपं लभन्त इति मनसि समाधाय 'अणुबंधं चेव जत्तेणं' इति गाथाद्वयं
विशेषेण भावयन्नाह;—

**अणुबंधं च निरूवइ पगिट्ठफलसाहगं इमो चेव। एत्थंपि वणियपुच्छियजोइसियदुगं उदाहरणं॥१८०॥**

'अनुबंधं' चेत्यादि । अनुबन्धं चानुगमनमपि च निरूपयति गवेषते, न केवलं सम्यग् आरभते । कीदृशमित्याह—प्रकृष्टफलसाधकं, आनुषङ्गिकफलत्यागेन लब्धुमिष्टसर्वान्तिमफलनिष्पादकं पलालादिपरित्यागेन कृषौ धान्याप्तिसमानम्, अयमेव बुद्धिमान् जनः, प्रधानफलस्यैव फलत्वात् । यथोक्तं—"फलं प्रधानमेवाहुर्नानुषङ्गिकमित्यपि । पलालादिपरित्यागात् कृषौ धान्याप्तिवद् बुधाः ॥ १ ॥" इति ॥ अत्राप्यनुबन्धनिरूपणे वणिक्पृष्टज्योतिषिकद्विकं वणिग्भ्यां द्वाभ्यां पृष्टं तथाविधव्यवहारारम्भकाले यज्ज्योतिषिकद्वयं यद्दैवज्ञयुगं तदुदाहरणं दृष्टान्तः । न केवलं सम्यगारम्भे धनवणिगुक्तरूप इति ॥ १८० ॥

प्रकृष्टफलसाधने अनुबन्धमुख्यता

एतदेवाह;—

**करकट्टलाभपुच्छा जोतिसियदुगम्मि दुण्हवणियाण। विहिपडिसेहा लाहो वत्ता कोवो उ इयरस्स १८१**

करो राजदेयो भागः शुल्कमित्यर्थः स कृत्तः छिन्नः पृथक् कृतो यस्मात् तद् भवति करकृत्तं, करेण कृत्तं 'कृती वेष्टने' इति वचनाद् वेष्टितमुपरुद्धमवश्यदेयत्वात् तस्य, तच्च व्यवहारप्रयुक्तं धनधान्यादि तस्माल्लाभोऽपूर्वधनागमः, तस्य पृच्छा प्रवृत्ता, क्वचिद् नगरे ज्योतिषिकद्विके द्वयोर्ज्योतिषिकयोः समीप इत्यर्थः। द्वयोर्वणिजोरावयोरस्मिन् देशान्तरव्यवहारे निरूप्यमाणे किं लाभः समस्ति नवा इति पृच्छा एकैकस्य ज्योतिषिकस्यैकैकेन कृतेत्यर्थः । तत्र ज्योतिषि-

काभ्यां द्वाभ्यां पृथग् विधिप्रतिषेधौ कृतौ लाभस्य, एकेनैकस्य लाभोऽन्यस्य चान्येन प्रतिषेधो भणित इत्यर्थः । प्रेषितं चैकेन देशान्तरे मलयविषयादौ निजभाण्डम् । संवृत्तश्च भूयान् लाभः । समागता च तत्र लाभवार्त्ता । ततः कोपस्तु असंतोषः पुनरितरस्याप्रहितभाण्डस्य बभूव ज्योतिषिकं प्रति ॥ १८१ ॥

ततः—

**मा रूस णत्थि एत्थं आगमणं सत्थघायनासो त्ति । तुट्ठनिवेयणमम्हे सव्वत्थणुबंधसार त्ति ॥ १८२ ॥**

मा रूसेत्यादि । ज्योतिषिकः प्राह (ग्रन्थ ५०००) मा रुष्य मां प्रति, यतो नास्ति न विद्यतेऽत्र नगरे आगमनं करकृत्तस्य । कुत इति चेदुच्यते—'सत्थघातनासत्ति' इति । सार्थस्य पथि समागच्छतश्चोरैर्घातेन करकृत्तस्य नाशो भविष्यतीति हेतोः । ततः कालेन तथैव संवृत्ते सति 'तुट्ठनिवेयणं'ति तुष्टस्य निजभाण्डोपघाताभावेन वणिजो निवेदनं कृतं ज्योतिषिकेण, यथा वयमनुबन्धसारा वर्त्तामह इति, अमुना प्रकारेण निरनुबन्धकार्यस्य तत्त्वतोऽकार्यत्वात् ॥१८२॥

इत्थं प्रसङ्गाद् बुद्धिगुणांस्तज्ज्ञातानि चाभिधाय साम्प्रतं 'बुद्धिजुओ आलोयइ' इत्यादिगाथोक्तमर्थं विशेषतो भावयितुमिच्छुरवगतविपक्षोऽन्वयः सुगमो भवतीति तद्विपक्षमेवाश्रित्य तावदाह;—

**धम्मट्ठाणमहिंसा सारो एसोत्ति उज्जमति एत्तो । सव्वपरिच्चाएणं एगो इह लोगनीतीए ॥ १८३ ॥**

धर्मस्थानं धर्मस्य दुर्गतिप्रवृत्तजन्तुवारनिवारणकरणप्रवणस्य जीवपरिणतिविशेषरूपस्य स्थानं विशेषोऽहिंसा सर्व-

जीवदया वर्त्तते । ततः सारः परमार्थः सर्वधर्मस्थानमध्ये एषोऽहिंसारूपो धर्मः । इत्यस्मात् कारणाद् उद्यच्छति प्रोत्साहमवलम्बतेऽस्यामेव । कथमित्याह—इतोऽहिंसायाः सकाशात् सर्वपरित्यागेन सर्वस्य गुरुकुलवासतद्विनयकरणशास्त्राभ्यासादेः शेषधर्मस्थानस्याहिंसाया एव स्वरूपपरिज्ञानाभ्युपगमपरिपालनोपायभूतस्य परित्यागेन परिहारेण, एकः कश्चन प्रासुकपुष्पफलशैवालादिभोक्ता निर्विजनारण्यवासी बालतपस्वी अगीतार्थो वा लोकोत्तरयतिः । इहापरधार्मिकजनमध्ये लोकनीत्या "श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम् । आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥ १ ॥" एवंरूपलौकिकशास्त्रानुसारेण ॥ १८३ ॥

अथैतदेवान्वयत आह;—

**अन्नो उ का अहिंसा आगमओ सो गुरूउ विहिणा उ। एयम्मि कुणति जत्तं लोउत्तरणीतितो मतिमं १८४**

अन्यस्तु प्रागुक्तधार्मिकविलक्षणः पुनः धार्मिक एव 'मीमांसते' इति गम्यते । कथमित्याह—का कीदृशी हेतुतः, स्वरूपतोऽनुबन्धतश्च अहिंसा निखिलकुशललोकाभिनन्दनीया वर्त्तते। न चासावन्यथा यथावदवगन्तुं शक्यते, किन्त्वागमतः । आगमादाप्तवचनरूपात् । यथोक्तं—"परलोकविधौ शास्त्रात् प्रायो नान्यदपेक्षते । आसन्नभव्यो मतिमान् श्रद्धाधनसमन्वितः ॥ १ ॥ उपदेशं विनाऽप्यर्थकामौ प्रतिपदुर्ज्जनाः । धर्म्मस्तु न विना शास्त्रादिति तत्रादरो हितः ॥ २ ॥ पापामयौषधं शास्त्रं शास्त्रं पुण्यनिबन्धनम् । चक्षुः सर्वत्रगं शास्त्रं शास्त्रं सर्वार्थसाधकम् ॥ ३ ॥" तथा "प्रमत्तयोगात् प्राणव्यपरोपणं हिंसा" इति हिंसाहेतोः । स्वरूपस्य च निर्देशः—"यदस्ति दुःखं त्रैलोक्ये व्याधितश्चाधितस्तथा । तद्धिं-

सर्वधर्मस्थानस्य सारत्वमहिंसायाः

माविषवृक्षस्य प्रोच्यते सकलं फलम् ॥ १ ॥ एतद्वैलक्षण्येन चाहिंसाया योजना कार्या । 'सो गुरूउ' इति स आगमः सूत्रार्थोभयरूपः सर्वहिताहितप्रवृत्तिनिवृत्तिहेतुः 'गुरूउ' इति गुरुभ्यः सकाशाल्लभ्यते । गुरुलक्षणं चेदं, यथा—"गुरुर्गृहीतशास्त्रार्थः परां निःसङ्गतां गतः । मार्त्तण्डमण्डलसमो भव्याम्भोजविकाशने ॥ १ ॥ गुणानां पालनं चैव तथा वृद्धिश्च जायते । यस्मात्सदैव स गुरुर्भवकान्तारनायकः ॥ २ ॥" अत एवान्यत्रोच्यते—"गुर्वायत्ता यस्माच्छास्त्रारम्भा भवन्ति सर्वेऽपि । तस्माद् गुर्वाराधनपरेण हितकाङ्क्षिणा भाव्यम् ॥ १ ॥ संसारसमुद्भूतकषायदोषं लिलङ्घिषन्ते गुरुणा विना ये । विभीमनक्रादिगणं ध्रुवं ते वार्धिं तितीर्षन्ति विना तरण्डम् ॥ २ ॥" इति ॥ कथमित्याह–विधिना तु विधिनैव कालविनयबहुमानादिना, अविधिलब्धस्य श्रुतस्य प्रत्युतापायफलत्वेनालब्धकल्पत्वात् । अपायाश्चामी—"उम्मायं च लभेज्जा रोगायंकं व पाढणे दीहं । तित्थयरभासियाओ धम्माओ वावि भंसेज्जा" ॥ १ ॥" इति । तत एतस्मिन् विधिना गुरुभ्यो लभ्यमाने आगमे कुरुते यत्नमादरं शुश्रूषाश्रवणग्रहणादिरूपं लोकोत्तरनीत्या लोकाद् गतिकानुगतिकरूपलोकेहेरिप्रवृत्तात् कुतीर्थिकादिभेदभिन्नादुत्तरा उपरिवर्त्तिनी नीतिर्न्यायस्तस्याः सर्वविद्वचनानुसारेणेत्यर्थः । मतिमान् प्रकृतबुद्धिधनो जनः । एवं चास्य महात्मनस्तुच्छीभूतभवभ्रमणरोगस्य सुप्रयुक्तमिवौषधं असावागमः सर्वाङ्गं परिणमते । मुच्यते चासौ तैस्तैर्भवविकारैरिति ॥ १८४ ॥

आह—किमित्यसावत्यन्तमागमे यत्नं करोति, न पुनरहिंसायामेवेत्याशङ्क्याह—

---

१ क. ° पे भीम—।

**जं आणाए चरणं आहाकम्मादिणायतो सिद्धं । ता एयम्मि पयत्तो विन्नेओ मोक्खहेउत्ति ॥ १८५ ॥**

यद्यस्मादाज्ञायाः सकाशाच्चरणं चारित्रं देशतः सर्वतो वा जीवानां सम्पद्यते, न पुनरन्यथा । अन्यत्राप्युक्तम्—"वचनाराधनया खलु धर्म्मस्तद्बाधया त्वधर्म्म इति । इदमत्र धर्मगुह्यं सर्वस्वं चैतदेवास्य ॥ १ ॥ अस्मिन् हृदयस्थे सति हृदयस्थस्तत्त्वतो मुनीन्द्र इति । हृदयस्थिते च तस्मिन्नियमात् सर्वार्थसंसिद्धिः ॥ २ ॥" एतच्चाधाकर्मादिज्ञाततः सिद्धम् । इहाधाकर्म—"सच्चित्तं जमचित्तं साहूणट्ठाए कीरई जं च । अच्चित्तमेव पच्चइ आहाकम्मं तयं बिंति ॥ १ ॥" इत्यादिसूत्रोक्तलक्षणमन्नपानादि, आदिशब्दात् प्रासुकैषणीयस्यास्यैव ग्रहः, ततस्तदेतद् ज्ञातमुदाहरणम् । ततः सिद्धं पिण्डनिर्युक्तौ प्रतिष्ठितम् । तथा हि—क्वचित् सन्निवेशे केनचिद् मुग्धबुद्धिना दानश्रद्धालुना जैनशासनानुगतेन क्वचित् समये सर्वसङ्घभक्तमुपकल्पितम् । वितीर्णं च पात्रपूरपूर्वकं तद्ग्राहकसाध्वाभासानाम् । श्रुतश्चायं दानव्यतिकरोऽत्यौदार्यसूचकः सन्निहितग्रामवासिना लिङ्गमात्रोपजीविना केनचित् साध्वाभासेन । प्राप्तश्चासावन्यस्मिन् दिने तत्र । पृष्टश्च तेन श्रावकेणागमनप्रयोजनम् । भणितं च तेन, भवदौदार्यमन्तरेण नान्यत् किञ्चित् । तद्दिने च जामातृकादिः सुबहुः प्राघुणकलोकस्तद्गृहे समागतः । उपस्कृतश्च सूपौदनपक्वान्नादिस्तन्निमित्तमाहारः । संविभागितश्च तेन पात्रपूरमसौ भुक्तवांश्चेति ॥

तथा क्वचिन्नगरे कश्चित् क्षपको मुनिर्विहितमासदिवसोपवासः पारणकदिने तत्रानेषणां सम्भावयन् अज्ञातोञ्छवाञ्छया सन्निहितग्रामे जगाम । तत्र चैकया कुटुम्बिन्या यथाभद्रिकयाऽत्यन्तसाधुदानश्रद्धानयाऽतिभूरिक्षीरान्नमुपस्कृत्या-

दरेण दीयमानं सञ्जातशङ्को नूनं न ग्रहीष्यति एतदिति तद्ग्रहणस्यानन्योपायतां पश्यन्त्या शिक्षितानि डिम्भरूपाणि यथा—क्षपकभिक्षोर्भिक्षार्थमागतस्य समक्षमिदं क्षीरान्नं मया परिवेष्यमाणमरुचिसारैर्वचनैरनादेयतामानीय प्रतिषेधनीयम्। तथा विहितं च तैः। क्षपकेणापि दत्तद्रव्यादितीव्रोपयोगेन सर्वोपधा शुद्धिरिति कृत्वा सर्वविद्वचनाराधनाप्रधानेन प्रतिगृहीतम्। तद् भोक्तुमारब्धस्य च "बायालीसेसणसंकडम्मि गहणम्मि जीव! न हु छलिओ। इण्हिं जह न छलिज्जसि भुंजंतो रागदोसेहिं ॥ १ ॥" इत्यादिशुभभावनाभावतः क्षपकश्रेणिप्राप्तौ केवलज्ञानमजनीति। एवं प्रथमस्य सर्वज्ञाज्ञोपयोगाभावेन शुद्धमपि पिण्डमुपाददानस्य क्लिष्टकर्मबन्धः। द्वितीयस्य तु विहितनिपुणोपयोगस्य तदशुद्धोपादानेऽपि केवलज्ञानफलो निर्जरालाभः संवृत्त इति। अत एवोक्तं समये "आहाकम्मपरिणओ फासुयभोईवि बंधओ भणिओ। सुद्धं गवेसमाणो आहाकम्मेऽवि सो सुद्धो ॥ १ ॥" तत्तस्मादेतस्मिन्नागमे प्रयत्नः शुश्रूषाश्रवणग्रहणादिः सर्वस्य मुमुक्षोर्विज्ञेयो मोक्षहेतुरिति, एतत्प्रयत्नमन्तरेण मोक्षाभावात्। तथा च पठन्ति "मलिनस्य यथाऽत्यन्तं जलं वस्त्रस्य शोधनम्। अन्तःकरणरत्नस्य तथा शास्त्रं विदुर्बुधाः ॥ १ ॥ शास्त्रे भक्तिर्जगद्वन्द्यैर्मुक्तिदूती परोदिता। अत्रैवेयमतो न्याय्या तत्प्राप्त्यासन्नभावतः ॥ २ ॥" ॥ १८५ ॥

एतदेव स्फुटवृत्त्या भावयन्नाह;—

**आणाबाहाए जओ सुद्धंपि य कम्ममादि निद्दिट्ठं। तदबाहाए उ फुडं तंपि य सुद्धंति एसाणा ॥ १८६ ॥**

आज्ञाबाधया जिनवचनोल्लङ्घनरूपया शुद्धमपि च सत्पिण्डादिवस्तु 'कम्ममादि' आधाकर्मादिसर्वैषणा दोषभाग्

निर्दिष्टं प्रथमसाधोरिव । तदबाधया त्वाज्ञाया अबाधया पुनर्गृह्यमाणं स्फुटं निर्व्याजमेव तदपि च आधाकर्मादि दोष-दुष्टं भक्तादि शुद्धं द्वितीयसाधोरिव । इत्येषा आज्ञा जैनी वर्त्तते । लौकिका अपि पठन्ति "भावशुद्धिर्मनुष्यस्य विज्ञेया कार्यसाधनी । अन्यथाऽऽलिङ्ग्यते कान्ता दुहिता पुनरन्यथा ॥ १ ॥" ॥ १८६ ॥

आह—"यस्य बुद्धिर्न लिप्येत हत्वा सर्वमिदं जगत् । आकाशमिव पङ्केन नासौ पापेन लिप्यते ॥ १ ॥" इत्यादिव-चनप्रामाण्याद् भावशुद्धिरेव गवेषणीया, किमाज्ञायोगेनेत्याशङ्क्याह—

**तन्निरवेक्खो नियमा परिणामोवि हु असुद्धओ चेव। तित्थगरेऽबहुमाणासग्गहरूवो मुणेयव्वो ॥ १८७॥**

तन्निरपेक्ष आज्ञाबाह्यः स्वेच्छामात्रप्रवृत्तो नियमाद् निश्चयेन 'परिणामोवि हु'त्ति प्रस्तावात् शुभोऽपि परिणामोऽन्तः-करणपरिणतिरूपोऽशुद्ध एव मलिन एव । कुतः, यतः स तीर्थङ्करे भगवति सर्वजगज्जीववत्सले विषयभूतेऽबहुमानाद् बहुः प्रभूतः स्वात्मापेक्षया मानो मननं बहुमानस्तत्प्रतिषेधादबहुमानस्तस्माद्धेतुभूतात् सकाशाद् असद्ग्रहरूपोऽसुन्द-राग्रहरूपो मुणितव्यो ज्ञेयः । यद्वक्ष्यति,—"सुर्क्षुंछाइसु जत्तो गुरुकुलचागाइणेह विन्नेओ । पिच्छत्थं सवरसरक्खव-हणपायच्छिवणतुल्लो ॥ १ ॥ इत्यादि । नहि यो यद्वचननिरपेक्षः प्रवर्त्तते स तत्र बहुमानवान् भवति, यथा कपिलादिः सुगतशिवादौ देवताविशेषे, जिनवचननिरपेक्षश्च गुरुकुलवासादिपरित्यागेन शुद्धपिण्डैषणादिकारी साधुः, तस्माद् न भगवति बहुमानवानिति ॥ १८७ ॥

अथास्य शुभलेश्यत्वमपि दृष्टान्तोपन्यासेन तिरस्कुर्वन्नाह;—

**गलमच्छभवविमोयगविसन्नभोईण जारिसो एसो। मोहा सुहो वि असुहो तप्फलओ एवमेसो वि॥१८८॥**

गलो नाम प्रान्तन्यस्तामिषो लोहमयः कण्टको मत्स्यग्रहणार्थं जलमध्ये सञ्चारितः, तद्ग्रसनप्रवृत्तो मत्स्यस्तु प्रतीत एव। ततो गलेनोपलक्षितो मत्स्यो गलमत्स्यः। भवाद् दुःखबहुलकुयोनिलक्षणाद् दुःखितजीवान् काकशृगालपिपीलिकामक्षिकादींस्तथाविधकुत्सितवचनसंस्कारात् प्राणव्यपरोपणेन मोचयत्युत्तारयतीति भवविमोचकः पाखण्डिविशेषः। विषेण मिश्रमन्नं विषान्नं तद् भुंक्ते तच्छीलश्च यः स तथाविधः। ततो गलमत्स्यश्च भवविमोचकश्च विषान्नभोजी चेति द्वंद्वस्तेषां यादृश एष परिणामः प्रत्यपायफल एव। कुतः, मोहादज्ञानात् पर्यन्तदारुणतया शुभोऽपि स्वकल्पनया स्वरुचिमन्तरेण तेषां तथा प्रवृत्तेरयोगात् सुन्दरोऽपि सन् अशुभः संक्लिष्ट एव। कुत इत्याह;—तत्फलतः भावप्रधानत्वाद् निर्देशस्य तत्फलत्वाद् अशुभपरिणामफलत्वात्। अथ प्रकृते योजयन्नाह;—एवं गलमत्स्यादिपरिणामवत् एषोऽपि जिनाज्ञोल्लङ्घनेन धर्मचारिपरिणामस्तत्फलत्वादशुभ एव। आज्ञापरिणामशून्यतया उभयत्रापि समानत्वेन तुल्यमेव किल फलमिति॥ १८८॥

आह—कस्माच्छुभोऽपि परिणामो मोहादशुभतां प्रतिपद्यत इत्याशंक्याह;—

**जो मंदरागदोसो परिणामो सुद्धओ तओ होति। मोहम्मि य पबलम्मी ण मंदया हंदि एएसिं॥१८९॥**

यः कश्चिद् रागश्च द्वेषश्च रागद्वेषौ। तत्र रागोऽभिष्वङ्गः स च स्नेहकामदृष्टिरागभेदात् त्रिप्रकारः। तत्र स्नेहरागो

जनकादिस्वजनलोकालम्बनः । कामरागः प्रियप्रमदादिविषयसाधनवस्तुगोचरः । दृष्टिरागः पुनर्योऽयं दर्शनिनां निज-निजदर्शनेषु युक्तिपथावतारासहेष्वपि कम्बललाक्षारागवत् प्रायेणोत्तारयितुमशक्यः पूर्वरागद्वयापेक्षयातिदृढस्वभावः प्रतिबन्धो विजृम्भते स इति । द्वेषो मत्सरः । अयमपि तत्तत्कार्यमपेक्ष्य सचित्ताचित्तद्रव्यगोचरतया द्विभेदः । ततो मन्दौ निर्बीजीभूतौ निर्बीजीभावाभिमुखौ वा रागद्वेषौ यस्मिन् स तथा परिणामो निरूपितरूपः शुद्धकः परिशुद्धस्वभावः 'तउ'त्ति तको भवति जायते । यत एवं, ततो मोहे च विपर्यासे मिथ्यात्वमोहनीयोदयजन्ये पुनः प्रबले गुणवत्पुरुषप्रज्ञापनाया अप्यसाध्यत्वेन बलीयसि विजृम्भमाणे सति न नैव मन्दता निहतशक्तिरूपता । हंदीति सन्निहितसभ्यजनस्य पश्यतः स्वयमेव प्रयोजनं पश्यतु भवानेव यदि मन्दता स्याद् एतयोः रागद्वेषयोः । न हि कारणमन्दतामन्तरेण कार्यमल्पीभवितुमर्हति, महाहिमपातसमये इव रोमोद्धुषणादयः शरीरिणां शरीरविकारा इति ॥ १८९ ॥

ननु मिथ्यादृशामपि केषाञ्चित् स्वपक्षनिबद्धोद्धुरानुबन्धानामपि भूयानुपशमः प्रबलमोहत्वेऽपि दृश्यते, स कथं जातः? इत्याह;—

**संमोहसत्थयाए जहाहिओ हंत दुक्खपरिणामो । आणावज्झसमाओ एयारिसओ वि विन्नेओ ॥१९०॥**

संमोहः सन्निपातो युगपद्वातपित्तश्लेष्मसंक्षोभजन्यो व्याधिविशेषः, तस्य स्वस्थता देहादनुत्तारेऽपि कुतोऽपि वेलाबलादनुद्रेकावस्था संमोहस्वस्थता तस्यां सत्यामपि, यथा अधिकः प्रभूतः भूयः संक्षोभात् प्रागवस्थामपेक्ष्य जायते, हन्तेति प्रत्यवधारणे, ततोऽस्माभिरवधार्य निगद्यमानमेतत् प्रत्यवधारयन्तु भवन्तः । दुःखपरिणामो मूर्च्छाप्रलापाङ्गभङ्गादिः

शुभपरिणामस्याशुभताप्रापकताहेतुः

'आणावज्झममाओ' इति आज्ञाबाह्यात् शमाद् रागद्वेषमन्दतालक्षणात् तथाविधदेवभवैश्वर्यमनुष्यजन्मराज्यादिसुखस्य किञ्चित्कालं लाभेऽपि पापानुबन्धिपुण्यवशाद् भगवतोऽपि सद्धर्मबीजवपनविधावेकान्तेन खीलीभूतात्मनां कुणिकब्रह्मदत्तादीनामिवोपात्तदुरन्तपापप्राग्भाराणां एतादृशकः सुसंमोहः स्वस्थतोत्तरकालभाविदुःखपरिणामतुल्य एव विज्ञेयो मुणितव्यः । तौ हि रागद्वेषावव्यावृत्तप्रबलविपर्यासौ सन्तौ पापानुबन्धिनः सातवेद्यादेः कर्मणो मिथ्यात्वमोहनीयस्य च बन्धहेतू भवतः । ततो भवान्तरे प्राप्तौ तत्पुण्यपाकेन समुदीर्णमिथ्यात्वमोहा अतएव हिताहितकृत्येषु मूढतामुपगता मलिनकर्मकारिणः प्रागुपात्तपुण्याभासकर्म्मोपरमे निष्पारनारकादिदुःखजलधिमध्यमज्जिनो जीवा जायन्त इति ॥१९०॥

एतदेव तीर्थान्तरीयमतेन संवादयन्नाह;—

**एत्तो च्चिय अवणीया किरियामेत्तेण जे किलेसा उ। मंडुक्कचुन्नकप्पा अन्नेहिवि वन्निया णवरं ॥ १९१ ॥**

इत एवाज्ञाबाह्यशमस्य दुःखपरिणामफलत्वाद् हेतोः । किमित्याह—अपनीता इवापनीताः समुद्भूतावस्थां त्याजिताः, क्रियामात्रेण क्रिययैव बालतपश्चरणाऽकामशीतोष्णाद्यधिसहनरूपया सम्यग् विवेकविकलत्वेन केवलया वक्ष्यमाणतुशब्दस्य पुनरर्थस्येहाभिसम्बन्धाद् ये तु ये पुनः क्लेशाः कामक्रोधलोभाभिमानादयो दोषाः, ते मण्डूकस्य भेकस्य मृतकस्य सतस्तथाविधप्रयोगाच्चूर्णः अतिसूक्ष्मखण्डसमूहलक्षणो मण्डूकचूर्णस्तस्मात् किञ्चिदूना मण्डूकचूर्णकल्पा वर्त्तन्ते । इत्यन्यैरपि तीर्थान्तरीयैः सौगतादिभिर्वर्णिताः स्वशास्त्रेषु निरूपिता नवरं केवलम् । तदुक्तं—"क्रियामात्रतः कर्म्मक्षयो मण्डूकचूर्णवत्, भावनातस्तु तद्भस्मवत्" इत्यादि ॥ १९१ ॥

**सम्मकिरियाए जे पुण ते अपुणब्भावजोगओ चेव । णेयग्गिदड्ढतच्चुन्नतुल्ल मो सुवयणणिओगा॥१९२॥**

सम्यक् क्रियया सर्वार्थेष्वभ्रान्तबोधगर्भया तथाविधव्रतादिसेवनरूपया ये पुनरपनीताः क्लेशाः, तेऽपुनर्भावयोगत-श्चैव, पुनर्भावयोगः—अपनीतानामपि तथाविधसामग्रीवशात् पुनरुन्मीलनं, तत्प्रतिषेधादपुनर्भावयोगस्तस्मादेव ज्ञेयाः, अग्निदग्धतच्चूर्णतुल्या वैश्वानरप्लुष्टप्लवककायचूर्णाकाराः । 'मो' इति पादपूरणार्थः । कुत इत्याह—सुवचन-नियोगात् कषच्छेदतापताडनशुद्धाप्तवचनव्यापारणात् । यथा हि मण्डूकचूर्णो दाहमन्तरेण निर्जीवतामापन्नोऽपि तथा-विधप्रावृडादि समयसमुपलब्धावनेकप्रमाणदर्दुररूपतया सद्य एवोद्भवति, तथा कायक्रियामात्रेण क्लेशाः प्रलयमानीता अपि भवान्तरप्राप्तौ तथाविधराज्यादिलाभकालेऽसह्यरूपतामादाय नरकादिफलाः सम्पद्यन्ते । स एव यथा चूर्णो दग्धः सन्निर्बीजतामागतस्तथाविधसामग्रीसंभवेऽपि नोन्मीलितुमुत्सहते, तथा सर्वज्ञाज्ञासम्पर्ककर्कशक्रियायोगतः क्लेशाः क्षयमुपनीताश्चक्रवर्त्त्यादिपदप्राप्तावपि नात्मानं लब्धुमलमिति ॥ १९२ ॥

नन्वविज्ञातसुवचनविनियोगानामपि केषांचिच्छास्त्रे चारित्ररूपः शुभपरिणामः श्रूयते, स कथं तेषां जातः? इत्या-शंक्याह;—

**मासतुसादीयाण उ मग्गणुसारित्तओ सुहो चेव। परिणामो विन्नेओ सुहोहसण्णाणजोगाओ॥१९३॥**

माषतुषादिकानां त्वागमप्रसिद्धानां जडसाधूनां पुनर्जीवाजीवादितत्त्वगोचरव्यक्तश्रुतोपयोगाभावेऽपि मार्गानुसा-

कर्मक्षयार्थं द्रव्यभावत्वयोर्मण्डूकचूर्णदृ०

रित्यतस्तीव्रमिथ्यात्वमोहनीयक्षयोपशमभावात्, इह च मार्गश्चेतसोऽवक्रगमनं भुजङ्गगमननलिकायामतुल्यो विशिष्टगुणस्थानावाप्तिप्रगुणः स्वरसवाही जीवपरिणतिविशेषस्तमनुसरति तच्छीलश्च यः स तथा तद्भावस्तत्त्वं तस्मात्, शुभश्चैव परिशुद्ध एव व्यावृत्तविपर्यासदुःख एव परिणामो विज्ञेयः । ननु मार्गानुसारित्वेऽपि वठरतया कथं तत्परिणामशुद्धिरित्याशंक्याह—शुभौघसंज्ञानयोगात् शुभमविपर्यस्तमोघेन सामान्येन सुबहुविशेषावधारणाक्षमं यत्संज्ञानं वस्तुतत्त्वसंवेदनरूपं तस्य योगात् । ते हि बहिर्बहुश्रुतमपठन्तोऽपि अतितीक्ष्णसूक्ष्मप्रज्ञतया बहुपाठकस्थूलप्रज्ञपुरुषानुपलब्धं तत्त्वमवबुध्यन्त इति । तदुक्तं—"स्पृशन्ति शरवत्तीक्ष्णाः स्वल्पमन्तर्विशन्ति च । बहुस्पृशापि स्थूलेन स्थीयते बहिरश्मवत् ॥ १ ॥"

कथानकसम्प्रदायश्चैवम्;—

बभूव कश्चिदाचार्यो गुणरत्नमहानिधिः । श्रुतमत्यर्थिशिष्यालि सेव्यमानक्रमाम्बुजः ॥ १ ॥ सूत्रार्थपाथसां दाने महाम्भोद इवाश्रमः । संघादिकार्यभाराणां निस्तारे धुर्यसन्निभः ॥ २ ॥ तस्यैवान्योऽभवद् भ्राता विशिष्टश्रुतवर्जितः । स्वेच्छया स्थाननिद्रादेः कर्त्ता स्वार्थपरायणः ॥ ३ ॥ तत्र सूरिः कचित्कार्ये श्रान्तः सन् मुग्धबुद्धिभिः । अज्ञातावसरैः शिष्यैर्व्याख्यानं कारितः किल ॥ ४ ॥ ततोऽसौ श्रान्तदेहत्वाद् व्याख्यायामक्षमत्वतः । चित्तखेदं जगामात्र चिन्तयामास चेदृशम् ॥ ५ ॥ धन्योऽयं पुण्यवानेष मद्भ्राता निर्गुणो यतः । सुखमास्ते सुखं शेते पारतंत्र्यविवर्जितः ॥ ६ ॥ वयं पुनरधन्या ये स्वगुणैरेव वश्यताम् । परेषां प्रापिताः स्थातुं सुखेन न लभामहे ॥ ७ ॥ एवं चिन्तयता तेन निबद्धं

कर्म सूरिणा। ज्ञानावरणमत्युग्रमज्ञानादिनिमित्ततः ॥ ८ ॥ नालोचितं च तत्तेन ततो मृत्वा दिवं गतः । ततोऽप्यसौ च्युतः क्वापि सत्कुले जन्म लब्धवान् ॥ ९ ॥ कालेन साधुसम्पर्काद् बुद्धोऽसौ जिनशासने । सद्गुरूणां समीपेऽथ प्रवव्राज विरागतः ॥ १० ॥ ततोऽसौ सूरिपादान्तेऽधीते सामायिकश्रुतम्। उदीर्ण्णं च तकत् तस्य कर्म जन्मान्तरार्जितम् ॥ ११ ॥ तस्योदयाद् न शक्नोति ग्रहीतुं पदमप्यसौ । प्रपठन्नप्यविश्रामं बहुमानयुतोऽपि सन् ॥ १२ ॥ ततः सूरिरशक्तं तं पाठे ज्ञात्वा तपोधनम् । सामायिकश्रुतस्यार्थं तं संक्षेपादपीपठत् ॥ १३ ॥ यथा मा रुष्य मा तुष्येत्येवमेव स भक्तितः। घोषयामास तत्रापि विस्मृतिस्तस्य जायते ॥ १४ ॥ ततो महाप्रयत्नेन संस्मृत्य किल किञ्चन। तत्रासौ घोषयामास तुष्टो मासतुषेत्यलम् ॥ १५ ॥ ततस्तद्घोषणान्नित्यं माषतुषेत्यभिख्यया। ख्यातिं नीतो महात्मासौ बालिशैः क्रीडनापरैः ॥ १६ ॥ अदोऽपि विस्मरत्येष यदा मोहात्तदा तकम् । शून्यचित्तमवाचं च हसन्तो बालका जगुः ॥ १७ ॥ अहो माषतुषः साधुरेष मौनेन तिष्ठति। एवमुक्तः स तैर्मेने साधु भो स्मारितं मम ॥ १८ ॥ ततोऽधीते तदेवासौ मन्यमानोऽत्यनुग्रहम्। साधवस्तु तथा श्रुत्वा वारयन्तिस्म सादराः ॥ १९ ॥ शिक्षयन्ति स्म तं साधो मारुष्येत्यादि घोषय। अतः प्रमोदमापन्नो घोषयामास तत्तथा ॥ २० ॥ एवं सामायिकाद्यर्थेऽप्यशक्तो गुरुभक्तितः । ज्ञानकार्यमसौ लेभे कालतः केवलश्रियम् ॥ २१ ॥ १९३ ॥

अथामुमेव शुभौघसंज्ञानयोगमेषां भावयन्नाह;—

**रुद्दो खलु संसारो सुद्धो धम्मो तु ओसहमिमस्स। गुरुकुलसंवासे सो निच्छयओ णायमेतेणं ॥ १९४ ॥**

रौद्रो विषविकारादिवद्दारुणः, खलुरवधारणे, संसारो नरनारकादिभ्रमणरूपः सर्वशरीरसाधारणः पारमार्थिकव्याधिस्वभावतामापन्नो यतः, ततः शुद्धो धर्म एव पञ्चनमस्कारस्मरणादिरूप औषधं निवृत्तिहेतुरस्य संसारस्य । यथोक्तम्—"पंचनमोक्कारो खलु विहिदाणं सत्तिओ अहिंसा य । इंदियकसायविजओ एसो धम्मो सुहपओगो ॥ १ ॥" एवमवगते यदेष पुनर्निर्णीतवान्, तदाह—गुरुकुलसंवासे गुरोरुक्तलक्षणस्य कुलं परिवारस्तत्रसम्यक् तद्गतमर्यादया वासे सति स शुद्धो धर्म्मो निश्चयतः परमार्थवृत्त्या सम्पद्यते । अनिश्चयरूपस्तु कृत्रिमसुवर्णसदृशः परीक्षामक्षममाणोऽन्यथापि स्यात् । न च तेन किञ्चित्, संसारफलत्वेनासारत्वादिति ज्ञातमेतेन माषतुषादिना साधुजडेनापि सता ॥ १९४ ॥

कुत एतदेवमिति चेदुच्यते;—

**जं कुणति एवमेवं तस्साणं सव्वहा अलंघंतो । एगागिमोयणम्मिवि तद्खंडण मो इहं णायं ॥१९५॥**

यद्यस्मात् कुरुते एवं निश्चयतः, एवं गुरुकुलसंवासं माषतुषादिः । कीदृश इत्याह—तस्य गुरोराज्ञामिच्छामिथ्याकारादिपरिपालनरूपां सर्वथा मनसा वाचा कायेन च अलंघयन्ननतिक्रामन् । नन्वेकाकिनस्तस्य किमित्याह—एकाकिमोचनेऽपि कुतोऽप्यशिवादिपर्यायादेकाकिनोऽपरसाधुसाहाय्यरहितस्य क्वचिद् ग्रामनगरादौ गुरुणा स्थापने सत्यपि तदखण्डना गुर्वाज्ञानुलंघना वर्त्तते 'मो इति प्राग्वत् । अयमत्राभिप्रायः—बहुसाधुमध्ये लज्जाभयादिभिरपि भवत्येव गुर्वाज्ञानुलंघनम् । यदा त्वसौ एकाकितया युक्तोऽपि गुरुकुलवासप्रवृत्तां सामाचारीं सर्वामनुवर्त्तते, तदा ज्ञायते निश्चयतो गुरुकुलसंवासवानसौ, तत्साध्यस्य क्रियाकलापस्य सर्वथाऽखण्डनात्, इह गुर्वाज्ञानुलंघने ज्ञातं दृष्टान्तो ज्ञेयम् ॥१९५॥

तदेवाह;—

**जह चेव चंदउत्तस्स विब्भमो सव्वहा ण चाणक्के । सव्वत्थ तहेतस्सवि एत्तो अहिगो सुहगुरुम्मि॥१९६॥**



यथा चैव यथैवेत्यर्थः, चन्द्रगुप्तस्य मौर्यवंशप्रसवप्रथमहेतो राजविशेषस्य प्राक्कथितस्य विभ्रमो विपर्यासः संशयो वा सर्वथा सर्वैः प्रकारैर्न नैव चाणक्ये प्रागुक्तलक्षणे मंत्रिणि सर्वत्र सर्वेषु प्रयोजनेषु समादिश्यमानेषु, तथैतस्यापि माषतुषादेर्यतेरितश्चन्द्रगुप्तादधिकः समर्गलो विश्वासः शुभगुरौ विजृम्भते । यथा हि चन्द्रगुप्तस्य पाटलिपुरोपरोधकाले नन्दबलनिर्द्धाटितेन चाणक्येन नीयमानस्य पश्चादनुलग्ने नन्दसैन्ये अनन्योपायां चन्द्रगुप्तरक्षां परिभावयता महति सरसि निविष्टपद्मिनीषण्डमण्डिते निक्षिप्तस्य नन्दाश्ववारेणैकेन क्व चन्द्रगुप्तस्तिष्ठतीति पृष्टेनाङ्गुल्यग्रेण दर्श्यमानस्यापि नाविश्वासो जातः, किंत्वार्य एव युक्तमयुक्तं वा जानातीति प्रतिपत्तिः, तथाऽस्य माषतुषादेः सर्वथा व्यावृत्तविपर्यासस्य संसारविषविकारनिराकरणकारिणी गुरोरस्य सेवेति मन्यमानस्य चन्द्रगुप्तस्य विश्वासादिह राज्यमात्रफलादनन्तगुणः शुभगुरौ प्रत्ययः प्रवर्त्तत इति ॥ १९६ ॥

ननु गुरुमात्रगोचरविभ्रमाभावेऽपि विशेषतत्त्वविषयविभ्रमसद्भावात् कथमस्य कृत्यं भ्रान्तिगर्भं सत् शुद्धचरित्रतया व्यवहृतमित्याशंक्याह;—

**अन्नत्थवि विन्नेओऽनाभोगो चेव नवरमेयस्स । न विवज्जउत्ति नियमा मिच्छत्ताईणभावातो ॥ १९७ ॥**

अन्यत्रापि गुरुव्यतिरिक्तेऽपि जीवादौ विषये गुरौ तावदविभ्रम एवेत्यपिशब्दार्थः, अनाभोगश्चैवानुपयोग एव नवरं केवलं निबिडश्रुतावरणप्रतिघाताद् एतस्य मापतुपादेरत्यन्ततत्त्वजिज्ञासावतोऽपि नीलपीतादिरूपोपारूढदृढदिदृक्षापरिणामस्य यथा कस्यचिद् अन्धस्य दृश्येष्वर्थेषु, व्यवच्छेद्यमाह—न नैव विपर्ययो विपर्यासः । इति पदपरिसमाप्तौ । नियमाद् निश्चयेनात्र हेतुर्मिथ्यात्वादीनां मिथ्यात्वमोहनीयस्यादिशब्दाद् अनन्तानुबन्धिनां च बोधविपर्यासकारिणां, तथा क्रियाव्यत्ययहेतूनाम् अप्रत्याख्यानावरणानां प्रत्याख्यानावरणानां च कषायाणामभावादनुदयात् । एतदुदयो हि हृत्पूरकोपयोगवत्, मद्यादिकुद्रव्योपयोगवद् वा नियमाद् आत्मानं भ्रममानयति । तद्धतश्च न तात्विकी काचित् कार्यनिष्पत्तिरिति ॥ १९७ ॥

अत एवाह;—

**एसो य एत्थ गरुओ णाणज्झवसाय संसया एवं । जम्हा असप्पवित्ती एत्तो सव्वत्थणत्थफला ॥१९८॥**

एष एव विपर्यय एव अत्रैषु बोधदोषेषु मध्ये गुरुको महान् दोषः । व्यवच्छेद्यमाह—न नैवानध्यवसायसंशयौ एवं गुरुकौ दोषौ । तत्रानध्यवसायः सुप्तमत्तपुरुषवत् क्वचिदप्यर्थे बोधस्याप्रवृत्तिः, संशयश्चानेकस्मिन् विषयेऽनिश्चायकतया प्रवृत्तिः, यथोक्तम्—“जमणेगत्थलंबणमपरिदोसपरिकुंठियं चित्तं । सयइव सव्वप्पयओ तं संसयरूवमण्णाणं ॥ १ ॥” इति । यस्माद् असत्प्रवृत्तिः परिशुद्धन्यायमार्गानवतारिणी चेष्टा, इतो विपर्यासात् सर्वत्र सर्वेष्वैहलौकिकपारलौकिकेष्वर्थेष्वनर्थफला व्यसनशतप्रसविनी प्रादुरस्ति । यदाऽवाचि—“न मिथ्यात्वसमः शत्रुर्न मिथ्यात्वसमं विषम् । न मिथ्या-

त्वसमो रोगो न मिथ्यात्वसमं तमः ॥ १ ॥ द्विषद्विषतमोरोगैर्दुःखमेकत्र दीयते । मिथ्यात्वेन दुरन्तेन जन्तोर्जन्मनि जन्मनि ॥ २ ॥" अनाभोगसंशयतो जाताप्येषा तत्वाभिनिवेशाभावात् सुखसाध्यत्वेन नात्यन्तमनर्थं सम्पादिकेति१९८

अन्यदपि चारित्रिलक्षणमत्र योजयितुमिच्छुराह;—

**मग्गणुसारी सद्धो पन्नवणिज्जो कियावरो चेव । गुणरागी सक्कारंभसंगओ जो तमाहु मुणिं ॥१९९॥**

मार्गं तत्त्वपथमनुसरत्यनुयातीत्येवंशीलो मार्गानुसारी, निसर्गतस्तत्रानुकूलप्रवृत्तिश्चारित्रमोहनीयकर्मक्षयोपशमात् । एतच्च तत्त्वावाप्तिं प्रत्यवन्ध्यं कारणम्, कान्तारगतविवक्षितपुरप्राप्तिसद्योग्यतायुक्तान्धस्येव । तथा, श्राद्धस्तत्त्वं प्रति श्रद्धावांस्तत्प्रत्यनीकक्लेशह्रासातिशयादवाप्तव्यमहानिधानतद्ग्रहणविधानोपदेशश्रद्धालुनरवत् विहितानुष्ठानकारिरुचिर्वा । तथा, अत एव कारणद्वयात् प्रज्ञापनीयः कथञ्चिदनाभोगादन्यथाप्रवृत्तावपि तथाविधगीतार्थेन सम्बोधयितुं शक्यः, तथाविधकर्मक्षयोपशमादविद्यमानासदभिनिवेशः प्राप्तव्यमहानिधितद्ग्रहणान्यथाप्रवृत्तसुकरसम्बोधनरवत् । तथात एव कारणात् क्रियापरश्चारित्रमोहनीयकर्मक्षयोपशमाद् मुक्तिसाधनानुष्ठानकरणपरायणः, तथाविध निधिग्राहकवत् । च-शब्दः समुच्चये । एवशब्दोऽवधारणे । एवं चानयोः प्रयोगः—क्रियापर एव च नाक्रियापरोऽपि, सत्क्रियारूपत्वाच्चरित्रस्य । तथा, गुणरागी विशुद्धाध्यवसायतया स्वगतेषु वा परगतेषु वा गुणेषु ज्ञानादिषु रागः प्रमोदो यस्यास्त्यसौ गुणरागी निर्मत्सर इत्यर्थः । तथा, शक्यारंभसंगतः कर्त्तुं शकनीयानुष्ठानयुक्तो, न शक्ये प्रमाद्यति न चाशक्यमारभत इति भावः । यः कश्चिदेवंविधगुणोपेतस्तमाहुर्ब्रुवते समयज्ञा मुनिं साधुमिति ॥ १९९ ॥

यदि नामैवं साधुलक्षणमुक्तं, तथापि प्रस्तुते किमायातमित्याह;—

**एयं च अत्थि लक्खणमिमस्सनिस्सेसमेव धन्नस्स। तहगुरुआणासंपाडणं उ गमगं इहं लिंगं॥२००॥**

एतच्चैतदपि मार्गानुसारित्वादि, किं पुनर्गुरुविपयोऽभ्रमः, अस्ति विद्यते लक्षणमस्य मापतुपादेर्निःशेपमेव धन्यस्य धर्मधनार्हस्य। किमत्र लिङ्गमित्याह—तथा यथा गुरुसन्निधाने तथैव तद्व्यवधानेऽपि गुर्वाज्ञासम्पादनं प्रतिलेखनाप्रमार्जनादि माधुसामाचारीपालनरूपं पुनर्गमकं ज्ञापकम्। इह मार्गानुसारित्वादौ लिङ्गं चिह्नमिति ॥ २०० ॥

ननु चारित्रिणो मोक्षं प्रत्यतिदृढानुरागत्वेनात्यन्तादौत्सुक्यादशक्यारम्भोऽपि न दुष्टः स्याद् इत्याशंक्याह;—

**सत्तीए जतितव्वं उचियपवित्तीएँ अन्नहा दोसो। महगिरिअज्जसुहत्थी दिट्ठंतो कालमासज्ज ॥ २०१ ॥**

शक्तौ—सामर्थ्ये चिकीर्षितप्रयोजनानुकूले सति यतितव्यं—प्रयत्नः कार्यः, किमविशेपेणेत्याह—'उचितप्रवृत्त्या' तत्तद्रव्यक्षेत्रकालभावैरबाध्यमानचेष्टारूपया। विपक्षे दोपमाह—अन्यथाउक्तप्रकारद्वयविरहे यत्ने क्रियमाणेऽपि दोपो—वन्ध्यचेष्टालक्षणः सम्पद्यते, सफलारम्भसारत्वाद् महापुरुपाणामिति। अत्र 'महगिरि–अज्जसुहत्थी' इति आर्यमहागिरिरार्यसुहस्ती च दृष्टान्तः—उदाहरणं 'कालं' व्यवच्छिन्नपरिपूर्णजिनकल्पाराधनायोग्यजीवं दुष्पमालक्षणमाश्रित्य, शक्तौ सत्यामुचितप्रवृत्त्या यत्ने कर्त्तव्यतयोपदिश्यमाने इति ॥ २०१ ॥

एतयोरेव वक्तव्यतां संगृह्णन्नाह;—

वणिग्धर्मपरायणौ ॥ ३३ ॥ एकस्येह तदेतस्य, जातं बीजस्य तत्फलम् । सद्बोधरूपमन्यस्य, निर्बीजत्वेन नाभवत् ॥ ३४ ॥ एवं पूर्वभवासेवां, जिनेनोक्तां सविस्तराम् । निशम्यैकस्य सञ्जातं, जातेः संस्मरणं क्षणात् ॥ ३५ ॥ ततोऽसौ प्रत्यये जाते, जातः संवेगभावितः । भावतश्च जिनोद्दिष्टं, प्रपेदे शासनं शुभम् ॥ ३६ ॥ तत्प्रतिपत्तिसामर्थ्याच्छुभकर्मानुबन्धतः । सिद्धिं यास्यत्यसौ काले परः संसारमेव हि ॥ ३७ ॥

अथ गाथाक्षरार्थः;—'कोसंबि'त्ति कौशांब्यां पुरि 'सेट्ठिसुय'त्ति श्रेष्ठिनोः सुतौ गाढप्रीतौ परस्परं प्रायेण—बहून् वारान् 'तुल्लफलसिद्धी' व्यवहारप्रवृत्तौ समानफललाभौ च प्रवर्त्तेते। अन्यदा च 'वीरोसरणे' इति वीरसमवसरणे श्रवणं—धर्मसमाकर्णनमभूत् । तयोर्बोध्यभावयोश्च—बोधाबभावे च सति विशेषः संवृत्तः ॥ २२७ ॥ १ ॥

तमेव दर्शयति—'हरिसो मज्झत्थत्तं' इत्यादि, हर्षः सन्तोष एकस्य धर्मपालजीवस्य, मध्यस्थत्वम्—उदासीनत्वमन्यस्य परस्परम्—अन्योऽन्यस्य चित्तज्ञानमभूत् । ततो भेदश्चित्तस्य संवृत्तः ततः 'पुच्छा अबोहि'त्ति अबोधिगोचरा पृच्छा कृता ज्येष्ठेन भगवतः पार्श्वे । 'नेहे बहुजोगो' इति भगवान् ! स्नेहे सत्यावयोर्बहुः प्रभूतो योगः सदा व्यवहारकारणादिसम्बन्ध एकचित्तयोरभूत् । ततः बीजं—मुक्तिकल्पतरोः सम्यक्त्वं तद्यस्य नास्ति सोऽबीजकः कथं केन हेतुनैष मत्सखा सम्पन्नः ? नु वितर्के इति ॥ २२८ ॥ २ ॥

'दंगियपुत्ता' इत्यादि । ततो भगवता प्राच्यवृत्तान्तः कथयितुमारब्धस्तयोः, यथा—द्रङ्गिकपुत्रौ, द्रङ्गो नाम गोधनबहुलः सन्निवेशविशेषः सोऽस्यास्तीति द्रङ्गिको—ग्राममहत्तरकस्तत्सुतौ युवां भूतवन्तौ । 'गोहरण'त्ति कदाचिद् भवद्भ्यां

योग्याः प्रत्युपेक्षणाप्रमार्जनादिकाश्चेष्टाः, किमित्याह अनन्ताः—अनन्तनामकसंख्याविशेषानुगता अतीताः—व्यतिक्रान्ता भवे—संसारे सकला अपि—तथाविधसामग्रीवशात् परिपूर्णा अपि सर्वेषां भवभाजां प्रायेण, अव्यवहारिकराशिगतानल्पकालतन्निर्गतांश्च मुक्त्वेत्यर्थः । ततोऽपि किमित्याह—न च—नैव तत्रापि—तास्वपि सकलासु द्रव्यलिङ्गक्रियासु जातमेतत्—सद्धर्म्मबीजमिति । कथञ्चित् कषाया प्रवृत्तिलक्षणलेश्याशुद्धावपि निरवधिभवभ्रमणयोग्यतालक्षणस्य सहजस्य भावमलस्य प्रभूतस्याद्यापि भावात् । यथोक्तम्—"एतद् भावमले क्षीणे, प्रभूते जायते नृणाम् । करोत्यव्यक्तचैतन्यो, महत् कार्यं न यत् क्वचित् ॥ १ ॥ २३३ ॥

**ता एयम्मि पयत्तो ओहेणं वीयरायवयणम्मि । बहुमाणो कायव्वो धीरेहिं कयं पसंगेण ॥ २३४ ॥**

तत्—तस्मादेतस्मिन्—धर्मबीजे प्रयत्नो—यत्नातिशयः कर्तव्यो धीरैरित्युत्तरेण योगः । किंलक्षणः प्रयत्नः कर्त्तव्य इत्याशंक्याह—ओघेन—सामान्येन वीतरागवचने—वीतरागागमप्रतिपादितेऽपुनर्बन्धकचेष्टाप्रभृत्ययोगिकेवलिपर्यवसाने तत्तच्चित्तशुद्धसमाचारे बहुमानो भावप्रतिबन्धः क्षयोपशमवैचित्र्याद् मृदुमध्याधिमात्रः कर्त्तव्यो धीरैः—बुद्धिमद्भिः । उपसंहरन्नाह—कृतं प्रसङ्गेन—पर्याप्तं धर्मबीजप्रख्यापनेनेति ॥ २३४ ॥

अथाज्ञापूर्वकप्रवृत्तावपि प्राक्प्रपञ्चितबुद्धिपरिणतिरूपा मीमांसैव कार्यसाधिकेति प्रपञ्चयितुमिच्छुराह;—

**वेयावच्चं न पडति अणुबंधेल्लंति सहरिसं एक्को । एत्तो एत्थ पयट्टति धणियं णिय सत्तिनिरवेक्खं ॥२३५॥**

चनादिना च साधुजनोपकारिणा चित्र-

वैयावृत्त्यम्-अन्नपानौषधभैषजदानादिना पादधावनशरीरसंवाहनशयनासनरचनादिना च साधुजनोपकारिणा चित्र-
रूपेण क्रियाविशेषेण व्यावृत्तभावो न-नैव पतति-भज्यते। अत्र हेतुमाह—'अणुबंधेलं' ति अनुबन्धोऽनुगमोऽव्यवच्छेद
इत्येकोऽर्थस्तदस्यास्तीत्यनुबन्धवत्, तथा चोक्तम्—"पडिभग्गस्स मयस्स व नासइ चरणं सुयं अगुणणाए। न उ
वेयावच्चकयं सुहोदयं नासए कम्मं॥१॥" इत्यस्मात् कारणात् सहर्ष-प्रकटितप्रमोदमेकः कश्चित् स्वभावत एव वैयावृत्त्यरु-
चिरितो-वैयावृत्त्यं न पततीति लक्षणात् सर्वज्ञवचनादत्र-वैयावृत्त्ये प्रवर्त्तते धनिकम्-अत्यर्थम्। इदमेव व्याचष्टे-निजश-
क्तिनिरपेक्षं स्वल्पबुद्धि तया स्वसामर्थ्यानपेक्षणेन। यथा हि कश्चिदपरिणतप्रज्ञः सञ्जाततीव्रबुभुक्षः स्वजठरानलबलोल्लङ्घनेन
भुञ्जानो न कश्चन गुणमवाप्नोति, किन्त्वग्निमान्द्यापादनेन दोषमेव। एवं प्रस्तुतवैयावृत्त्येऽपि भावनाकार्या॥ २३५॥

इत्थमल्पमतिविषयं वैयावृत्त्यमभिधाय, अधुना तद्विपर्ययेणाभिधातुमाह;—

**अन्नो उ किं इमं भन्नतित्ति वयणाओ कह व कायव्वं। सत्तीए तह पयट्टति जह साहति बहुगमेयं तु॥२३६॥**

अन्यः पुनः-वैयावृत्त्यरुचिरेव धार्मिकविशेषो बहुमतिः किमिदं-वैयावृत्त्यं भण्यते शास्त्रेष्विति वैयावृत्त्यस्वरूपं प्रथ-
मतो मीमांसते, अज्ञातस्य तु कर्त्तुमशक्यत्वात्। ततो वचनाज्जानीते संयतलोकस्योचितार्थसम्पादनरूपमेतदिति। तथा,
कथं वा-केन वा प्रकारेण गुरुबालवृद्धादिजनोचितप्रवृत्तिरूपेण कर्त्तव्यमिति। इत्यूहापोहयोगेन शक्त्या-स्वसामर्थ्यानुरूपं
तथा प्रवर्त्तते प्रस्तुत एव वैयावृत्त्ये यथा साधयति बहुकमेतत्तु-इदमेव वैयावृत्त्यं, शक्तेरत्रोटनेन प्रतिदिनं वृद्धिभावा-
दिति भावः॥ २३६॥

गवां हरणे कृते सति, दण्डपाशिकैः 'पच्छ खेडणग'त्ति पश्चात्-पृष्ठतः खेटनकं-त्रासनमारब्धम् । ततः पलायमानाभ्यां भवद्भ्यां शैलगुहायां साधुरेको दृष्टः । तत्र धर्मप्रशंसाप्रद्वेषौ भवतोः प्रवृत्तौ । ततो 'बीयाबीय'त्ति बीजमबीजं च द्वयोरपि यथाक्रमं सम्पन्नमिति ॥ २२९ ॥ ३ ॥

दृष्टांतनिगमनम्. धर्मबीजशुद्धिश्च.

अथ पूर्वोक्तमुदाहरणं निगमयन् बीजशुद्धिं दर्शयति;—

**एवं कम्मोवसमा सद्धम्मगयं उवाहिपरिसुद्धं । थेवं पणिहाणादिवि बीजं तस्सेव अणहंति ॥ २३० ॥**

एवं-द्रङ्गिकप्रथमपुत्रवत् कर्मोपशमाद्-बहलतमःपटलप्रवर्त्तकमिथ्यात्वमोहमान्द्यात् सद्धर्मगतं-शुद्धधर्म्मानुसारि, उपाधिपरिशुद्धम्-उपाधिभिः-उपादेयताबुद्धि-आहारादिदशसंज्ञाविष्कम्भफलाभिसन्धिरहितत्वलक्षणैर्निर्मलभावमानीतं, स्तोकं-वक्ष्यमाणापिशब्दस्येहाभिसम्बन्धात् स्तोकमपि 'प्रणिधानादि प्रणिधानं-कुशलचित्तन्यासः, आदिशब्दात् प्रशस्तोचितकृत्यकरणग्रहो[1] बीजं-प्ररोहहेतुस्तस्यैव-सद्धर्मस्यानघम्-अवन्ध्यमिति ॥ २३० ॥

इदमेव किञ्चिद् विशेषत आह;—

**एयं च एत्थ णेयं जहा कहिंचि जायम्मि एयम्मि । इहलोगादणवेक्खं लोगुत्तरभावरुइसारं ॥ २३१ ॥**

एतच्च-धर्मबीजमत्र-लोकोत्तरधर्म्माराधनप्रक्रमे ज्ञेयं, यथाकथञ्चित्-काकतालीयान्धकण्टकीयादिज्ञातप्रकारेण जाते

१ ख. प्रशंसोचित. ।

एतस्मिन्–कर्म्मोपशमे, कीदृशमित्याह–इहलोकाद्यनपेक्षम्–ऐहलौकिकपारलौकिकफलाभिलापविकलम् । तथा, लोकोत्तरभावरुचिमारं–जैनशासनसूचितदयादानाद्यनवद्यभावश्रद्धानप्रधानम्, लौकिकभावेषु हि दृढविपर्यासानुगतेषु श्रद्धायां व्यावृत्तविपर्याससद्धर्मबीजभावानुपपत्तेरिति ॥ २३१ ॥

एतदेवाधिकृत्याह;—

**पायमणक्खेयमिणं अणुहवगम्मं तु सुद्धभावाणं । भवखयकरंति गरुयं बुहेहिं सयमेव विन्नेयं ॥ २३२ ॥**

प्रायो–बाहुल्येन बहुमानस्वरूपेणेत्यर्थः, अनाख्येयम्–आख्यातुमशक्यमिदं–धर्मबीजं परेभ्यः । एवं तर्ह्यसंवेद्यमप्येतत्स्यादित्याशंक्याह–अनुभवगम्यं तु–स्वसंवेदनप्रत्यक्षपरिच्छेद्यं पुनः शुद्धभावानाम्–अमलीमसमानसानाम् । तथा, भवक्षयकरं–संसारव्याधिविच्छेदहेतुरिति-अस्मात् कारणाद् गुरुकं–सर्वजनाभिमतचिन्तारत्नादिभ्योऽपि महद् बुधैः स्वयमेव निजोहापोहयोगतो विज्ञेयम्, इक्षुक्षीरादिरसमाधुर्यविशेषाणामिवानुभवेऽप्यनाख्येयत्वात् । उक्तं च–"इक्षुक्षीरगुडादीनां, माधुर्यस्यान्तरं महत् । तथापि न तदाख्यातुं, सरस्वत्याऽपि शक्यते ॥ १ ॥ २३२ ॥

अथैतद् गुरुकत्वमेव भावयति;—

**जं दव्वलिंगकिरियाऽणंता तीया भवम्मि सगलावि । सव्वेसिं पाएणं णय तत्थवि जायमेयंति ॥२३३॥**

यद् यस्माद् द्रव्यलिङ्गक्रियाः–पूजाद्यभिलापेणाव्यावृत्तमिथ्यात्वादिमोहमलतया द्रव्यलिङ्गप्रधानाः शुद्धश्रमणभाव-

योग्याः प्रत्युपेक्षणाप्रमार्जनादिकाश्चेष्टाः, किमित्याह अनन्ताः—अनन्तनामकसंख्याविशेषानुगता अतीताः—व्यतिक्रान्ता भवे—संसारे सकला अपि—तथाविधसामग्रीवशात् परिपूर्णा अपि सर्वेषां भवभाजां प्रायेण, अव्यवहारिकराशिंगतानल्प-कालतन्निर्गतांश्च मुक्त्वेत्यर्थः । ततोऽपि किमित्याह—न च—नैव तत्रापि—तास्वपि सकलासु द्रव्यलिङ्गक्रियासु जातमेतत्—सद्धर्म्मबीजमिति । कथञ्चित् कषाया प्रवृत्तिलक्षणलेश्याशुद्धावपि निरवधिभवभ्रमणयोग्यतालक्षणस्य सहजस्य भावमलस्य प्रभूतस्याद्यापि भावात् । यथोक्तम्—"एतद् भावमले क्षीणे, प्रभूते जायते नृणाम् । करोत्यव्यक्तचैतन्यो, महत् कार्यं न यत् क्वचित् ॥ १ ॥ २३३ ॥

**ता एयम्मि पयत्तो ओहेणं वीयरायवयणम्मि । बहुमाणो कायव्वो धीरेहिं कयं पसंगेण ॥ २३४ ॥**

तत्—तस्मादेतस्मिन्—धर्मबीजे प्रयत्नो—यत्नातिशयः कर्तव्यो धीरैरित्युत्तरेण योगः । किंलक्षणः प्रयत्नः कर्त्तव्य इत्याशंक्याह—ओघेन—सामान्येन वीतरागवचने—वीतरागागमप्रतिपादितेऽपुनर्बन्धकचेष्टाप्रभृत्ययोगिकेवलिपर्यवसाने तत्तच्चित्तशुद्धसमाचारे बहुमानो भावप्रतिबन्धः क्षयोपशमवैचित्र्याद् मृदुमध्याधिमात्रः कर्त्तव्यो धीरैः—बुद्धिमद्भिः । उपसंहरन्नाह—कृतं प्रसङ्गेन—पर्याप्तं धर्मबीजप्रख्यापनेनेति ॥ २३४ ॥

अथाज्ञापूर्वकप्रवृत्तावपि प्राक्प्रपञ्चितबुद्धिपरिणतिरूपा मीमांसैव कार्यसाधिकेति प्रपञ्चयितुमिच्छुराह;—

**वेयावच्चं न पडति अणुबंधेछंति सहरिसं एक्को । एत्तो एत्थ पयट्टति धणियं णिय सत्तिनिरवेक्खं ॥२३५॥**

धर्मबीज-प्राप्तिकरणोपायः

वैयावृत्त्यम्–अन्नपानौषधभैषजदानादिना पादधावनशरीरसंवाहनशयनासनरचनादिना च साधुजनोपकारिणा चित्ररूपेण क्रियाविशेषेण व्यावृत्तभावो न–नैव पतति–भज्यते। अत्र हेतुमाह—'अणुवंधेलं' ति अनुबन्धोऽनुगमोऽव्यवच्छेद इत्येकोऽर्थस्तदस्यास्तीत्यनुबन्धवत्, तथा चोक्तम्—"पडिभग्गस्स मयस्स व नासइ चरणं सुयं अगुणणाए । न उ वेयावच्चकयं सुहोदयं नासए कम्मं ॥१॥" इत्यस्मात् कारणात् सहर्ष–प्रकटितप्रमोदमेकः कश्चित् स्वभावत एव वैयावृत्त्यरुचिरितो–वैयावृत्त्यं न पततीति लक्षणात् सर्वज्ञवचनादत्र–वैयावृत्त्ये प्रवर्त्तते धनिकम्–अत्यर्थम्। इदमेव व्याचष्टे–निजशक्तिनिरपेक्षं स्वल्पबुद्धि तया स्वसामर्थ्यानपेक्षणेन। यथा हि कश्चिदपरिणतप्रज्ञः सञ्जाततीव्रबुभुक्षः स्वजठरानलवह्लोल्लङ्घनेन भुञ्जानो न कञ्चन गुणमवाप्नोति, किन्त्वग्निमान्द्यापादनेन दोषमेव। एवं प्रस्तुतवैयावृत्त्येऽपि भावनाकार्या ॥ २३५ ॥

इत्थमल्पमतिविषयं वैयावृत्त्यमभिधाय, अधुना तद्विपर्ययेणाभिधातुमाह;—

**अन्नो उ किं इमं भन्नतित्ति वयणाओ कह व कायव्वं। सत्तीएँ तह पयट्टति जह साहति वहुगमेयं तु ॥२३६॥**

अन्यः पुनः–वैयावृत्त्यरुचिरेव धार्मिकविशेषो वहुमतिः किमिदं–वैयावृत्त्यं भण्यते शास्त्रेष्विति वैयावृत्त्यस्वरूपं प्रथमतो मीमांसते, अज्ञातस्य तु कर्त्तुमशक्यत्वात्। ततो वचनाज्जानीते संयतलोकस्योचितार्थसम्पादनरूपमेतदिति। तथा, कथं वा–केन वा प्रकारेण गुरुवालवृद्धादिजनोचितप्रवृत्तिरूपेण कर्त्तव्यमिति। इत्यूहापोहयोगेन शक्त्या–स्वसामर्थ्यानुरूपं तथा प्रवर्त्तते प्रस्तुत एव वैयावृत्त्ये यथा साधयति वहुकमेतत्तु–इदमेव वैयावृत्त्यं, शक्तेरत्रोटनेन प्रतिदिनं वृद्धिभावादिति भावः ॥ २३६ ॥

अत एव पौर्वापर्यशुद्धां वैयावृत्त्यविषयामाज्ञां दर्शयति;—

**पुरिसं तस्सुवयारं अवयारं वऽप्पणो य णाऊणं । कुज्जा वेयावडियं आणं काउं निरासंसो ॥ २३७ ॥**

पुरुषम्—आचार्योपाध्यायप्रवर्त्तकस्थविरगणावच्छेदकलक्षणपदस्थपुरुषपञ्चकरूपं ग्लानादिरूपं च, तथा तस्य—पुरुषस्योपकारम्—उपष्टम्भं ज्ञानादिवृद्धिलक्षणम्, अपकारं च—तथाविधावस्थावैगुण्यात् श्लेष्मादिप्रकोपलक्षणम्, तथाऽऽत्मनश्च—स्वस्यापि शुद्धसमाधिलाभरूपमुपकारमपकारं च शेषावश्यककृत्यान्तरहानिस्वभावं वा ज्ञात्वा सूक्ष्माभोगपूर्वकं कुर्याद्—विदध्यात् । वैयावृत्यम्—उक्तरूपमाज्ञां कृत्वा—सर्वज्ञोपदेशोऽयमिति मनसि व्यवस्थाप्य निराशंसः—कीर्त्यादिफलाभिलाषविकलः सन्निति ॥ २३७ ॥

न च वक्तव्यं क्रियात एव फलसिद्धिर्भविष्यतीति किं पुनः पुनराज्ञोद्घोषणेनेत्याह;—

**आणाबहुमाणाओ सुद्धाओ इह फलं विसिट्ठंति । ण तु किरियामेत्ताओ पुव्वायरिया तहा चाहु ॥२३८॥**

आज्ञाबहुमानाद्—वचनपक्षपाताच्छुद्धात्—कुग्रहादिदोषरहितात्, इह—वैयावृत्त्यादिकृत्येषु फलं विशिष्टं—पुण्यानुबन्धिपुण्यरूपं निरनुबन्धाशुभकर्म्मरूपं च सम्पद्यत इति । न पुनः क्रियामात्राद्—मन्त्रविवर्जितसर्पदष्टापमार्जनक्रियाकल्पात् साधुसमाचारासेवनादेः केवलाद् विशिष्टं फलमस्ति । एतदेव दृढीकुर्वन्नाह—पूर्वाचार्यास्तथा च—तथैव यथोच्यतेऽस्माभिस्तथाहुः—ब्रुवते ॥ २३८ ॥

वैयावृत्यस्वरूपम्.

यदाभुक्तदेव गाथाद्वयेन दर्शयति;—

भावाणाबहुमाणाओ सत्तिओ सुकिरियापवित्तीवि। नियमेणं चिय इहरा ण तको सुद्धोत्ति इट्ठा सा ॥२३९

भावाद्—अन्तःपरिणामाद् य आज्ञावहुमानः—उक्तरूपः तस्मात् कथंचिज्जातात् । किमित्याह—शक्तितः—स्वसामर्थ्यानुरूपं 'सुक्रियाप्रवृत्तिरपि' सुक्रियायां—मार्गानुसारसारायां दर्शनप्रभावनादिकायां चित्ररूपायां प्रवृत्तिः—उत्साहरूपा भवतीति, भावाज्ञावहुमानस्तावत् सम्पन्न एवेत्यपिशब्दार्थः, नियमेनैव, शुद्धभावाज्ञावहुमानस्य तथाविधमेघोन्नतेरिव जलवृष्टिक्रिया( याः सुक्रिया )या व्यभिचाराभावात्। विपक्षे वाधकमाह—इतरथा सुक्रियायाः प्रवृत्तिनिरोधेन नैव तको—भावाज्ञा—बहुमानरूपः शुद्धो वर्त्तते, स्वकार्यसाधकस्यैव कारणस्य निश्चयतः कारणभावात्। इत्यस्मात् कारणाच्छुद्धे भावाज्ञावहुमाने इष्टा सा सुक्रिया ॥ २३९ ॥

ततोऽपि किमित्याह;—

एईए उ विसिट्ठं सुवन्नघडतुल्लमिह फलं नवरं। अणुवंधजुयं संपुन्नहेउओ सम्ममवसेयं ॥ २४० ॥

एतस्याः पुनः—सुक्रियायाः सकाशाद् विशिष्टम्—अपरक्रियाजन्यपुण्यविलक्षणम् । अत एवाह—सुवर्णघटतुल्यं—शातकुम्भकुम्भसन्निभमिह—जगति फलं—पुण्यलक्षणं नवरं—केवलं जायते अनुवन्धयुतम्—उत्तरोत्तरानुगमरूपवत्। कुत इत्याह—'सम्पूर्णहेतुतः' सम्पूर्णेभ्यो हेतुभ्यो भावाद्, हेतवश्चास्य प्राणिकरुणादयः । यथोक्तम्—"दया भूतेषु संवेगो, विधिवद्

गुरुपूजनम् । विशुद्धा शीलवृद्धिश्च, पुण्यं पुण्यानुबन्ध्यदः ॥ १ ॥" सम्यग्–यथावद् अवसेयमिदम् । न हि पूर्णकारणारब्धा भावाः कदाचिद् निरनुबन्धा भवितुमर्हन्ति, अन्यथा तत्तयाऽनुपपत्तेः ॥ २४० ॥

ननु क्रियामात्रमप्याज्ञाबहुमानशून्यानां कथं ज्ञायते? इत्याशंक्याह;—

**किरियामेत्तं तु इहं जायति लद्धादवेक्खयाएऽवि । गुरुलाघवादिसन्नाणवज्जियं पायमियरेसिं ॥२४१॥**

क्रियामात्रं पुनरुक्तरूपमिह–दूरभव्येष्वभव्येषु च जायते लब्ध्याद्यपेक्षयापि, इह लब्धिर्वस्त्रपात्रकीर्त्त्यादिलाभलक्षणा गृह्यते, आदिशब्दात् स्वजनाद्यविरोधकुललज्जादिग्रहः, तान्यप्यपेक्ष्य स्यात् । गुरुलाघवादिसंज्ञानवर्जितं गुणदोषयोः प्रवृत्तौ गुरुलाघवमादिशब्दात् सत्त्वादिषु मैत्र्यादिभावग्रहस्तेषु यत्संज्ञानं शुद्धसंवेदनरूपं तेन विनिर्मुक्तं, प्रायो–बाहुल्येनेतरेषां–शुद्धाज्ञाबहुमानविहीनानामिति ॥ २४१ ॥

**एत्तो उ निरणुबंधं मिम्मयघडसरिसमो फलं णेयं । कुलडादियदाणाइसु जहा तहा हंत एयंपि ॥२४२॥**

इतस्तु–क्रियामात्रात् पुनर्निरनुबन्धम्–उत्तरोत्तरानुबन्धशून्यम्, अत एव 'मिम्मयघडसरिसमो' इति मृत्तिकामयघटसदृक्षं फलं पुण्यबन्धलक्षणं ज्ञेयम् । पुनरपि दृष्टान्तान्तरेण भावयति–कुलटाया–दुश्चारिण्याः स्त्रिया द्विजदानादयो–ब्राह्मणविभववितरण–पर्वदिवसोपवास–तीर्थस्नानप्रभृतयो धर्मक्रियाविशेषास्तेषु यथा निरनुबन्धं फलं, तथा, हन्तेति कोमलामंत्रणे, एतदपि क्रियामात्रजन्यं पुण्यमिति ॥ २४२ ॥

शुद्धाज्ञाविहीनानां क्रियाफलशून्यता.

तह्मा भावो सुद्धो सव्वपयत्तेण हंदि परलोए। कायव्वो वुद्धिमया आणोवगजोगतो णिच्चं ॥ २४३ ॥

यस्मादेवं क्रियामात्रं निरनुबन्धफलं तस्माद्–भावो–मनःपरिणामः शुद्धो–रागद्वेषमोहमलविकलः सर्वप्रयत्नेन–सर्वस्वसामर्थ्यागोपनरूपेण; हंदीत्युपप्रदर्शने, परलोके–स्वर्गापवर्गादिलक्षणे साध्ये कर्त्तव्यो–घटयितव्यो वुद्धिमता–प्रशस्तमतिना पुरुषेण । कथमित्याह—'आज्ञोपगयोगतो' आज्ञामुपगच्छन्ति–अनुवर्त्तन्ते ये ते आज्ञोपगास्ते च ते योगाश्च–अनुष्ठानभेदाः तेभ्यो, जिनाज्ञानुसारिणो धर्मारम्भान् प्रतीत्येत्यर्थः, नित्यम्–अहर्निशमिति ॥ २४३ ॥

सम्प्रत्याज्ञामेव पुरस्कुर्वन् दृष्टान्तमाह;—

जो आणं वहु मन्नति सो तित्थयरं गुरुं च धम्मं च। साहेति य हियमत्थं एत्थं भीमेण दिट्ठंतो ॥२४४॥

यो जन्तुरासन्नभव्य आज्ञाम्–उक्तरूपां वहु मन्यते–पुरस्करोति, स–आज्ञावहुमन्ता तीर्थकरम्–अर्हन्तं गुरुं च धर्माचार्यं धर्मं च श्रुतचारित्ररूपं वहु मन्यते, आज्ञावहुमानस्य तीर्थकरादिवहुमानाविनाभूतत्वात् । साधयति, घटयति, चः समुच्चये, हितं–कल्याणरूपमर्थं–पुरुषार्थलक्षणम् । अत्र–अस्मिन्नाज्ञावहुमाने भीमेन राजसूनुना दृष्टान्तः–उदाहरणं वाच्यम् ॥ २४४ ॥

एतमेव भावयति;—

तगराए रतिसारो राया पुत्तो य तस्स भीमो त्ति। साहुसगासं णीओ धम्मं सोऊण पडिवुद्धो ॥२४५॥

परमुवयारी ताओ इमस्स सति अप्पियं ण कायव्वं। घेत्तूणऽभिग्गहं तो सावगधम्मं सुहं चरति ॥२४६॥२॥
वणिकन्न राय रागे वरणं णो पुत्तरज्ज न करेमि। तुह पुत्त न परिणेमी कालेणं बंभयारित्ति ॥ २४७ ॥ ३ ॥
दिन्ना पुत्तो राया भीमो गिहबंभ सक्कथुति आणा। देवाऽऽयल्लग गणिया वावज्जति निक्खिपाऽधम्मो॥२४८॥
आणाभावणजोगा रागाभावो इमस्स धीरस्स। वयभंसपाव वावत्ति रक्खणे सुकरुणा धम्मो ॥ २४९॥५ ॥
आयारामो जाओ आणं सरिऊण वीयरागाणं। इय धम्मो सेसाणवि विसए एयं करेंताणं ॥ २५० ॥ ६ ॥

तगरायां पुरि प्रतिहतापरपुरीसमृद्ध्यभिमानतगरायां निजलावण्यजितरतिपत्याकारो रतिसारो नाम राजा समभूत्। पुत्रस्तस्य भीम इति समजायत। स च मुक्तबालभावः साधुसकाशं—तथाविधधर्म्माचार्यान्तिकं पित्रा नीतः सन् धर्मम्—उक्तरूपं श्रुत्वा प्रतिबुद्धो—लब्धबोधिः सम्पन्नः ॥ २४५ ॥ १ ॥

चिन्तितं चानेन परमोपकारी, अत्यन्तहितविधायी मे तातो येनाहं सकलत्रिलोकसारभूते जैनधर्मे नियोजितः। ततोऽस्य प्राणप्रदानेनापि प्रत्युपकर्त्तुमशक्यमिति सदा—सर्वकालमप्रियम्—अनिष्टं न कर्त्तव्यं मया। एवंरूपं गृहीत्वाऽभिग्रहं—नियमम्। ततः—तदनन्तरं गृहस्थित एव श्रावकधर्म्मं—श्रमणोपासकजनोचितानुष्ठानं शरच्छशधरकरनिकरप्राग्भारनिर्मलं सम्यग्दर्शनमूलानुव्रतगुणव्रतशिक्षाव्रतलक्षणम्, कीदृशमित्याह—सुखं स्वर्गापवर्गसमुद्भवशर्महेतुत्वात् सुखं वा यथा भवत्येवं, चरति—आसेवते, वर्त्तमानकालादेशस्तत्कालापेक्षयेति ॥ २४६ ॥ २ ॥

एवं प्रतियामरमपूर्वापूर्वपवित्रपरिणामपरंपरामधिरोहतः सतो भीमस्य यातिकालः । 'वणिकन्नरायराय'त्ति वणिजः—सागरदत्तनामधेयस्य कन्या चन्द्रलेखाभिधाना शृङ्गारक्षीरनीरधिलहरी सुभगलावण्योपहसितामरसुन्दरीका हर्म्यतलगता काञ्चनकन्दुकक्रीडारसमनुभवन्ती वातायनस्थितस्य राज्ञो रतिसारस्य लोचनमार्गमागता । ततस्तदीयराजहंसानुसारि-सलीलगमनादिगुणाक्षिप्तमानसोऽसौ तद्गोचरे रागे अभिष्वंगलक्षणो सम्पन्ने सति दारुणां मदनावस्थामाससाद । तद-वस्थं च तं समुपलभ्याऽवोचद् मन्त्री—देव! किमिदमकाण्ड एव युष्मच्छरीरस्यापाटवम्?, तेनापि नास्य गोप्यमस्तीति परिभाव्य निवेदितं निजस्वरूपं, ततो मन्त्री सागरदत्तगृहं गत्वा वरणं चन्द्रलेखायाः कर्त्तुमारब्धः । सागरदत्तेन चोक्तं 'नो पुत्तरज्ज'त्ति नो—नैवाहं राज्ञे स्वपुत्रीं प्रयच्छामि, यतस्तस्य भीमनामा राज्यार्हः पुत्रोऽस्ति स राजा भविष्यति न मत्पुत्रीपुत्र इति । ततो ज्ञातवृत्तान्तेन भीमेनोक्तम्—'न करेमि'त्ति नाहं राज्यं करोमीति देहि राज्ञे कन्याम् । ततः पुनरपि वणिजोक्तं—यदि त्वं पितुरप्रियं परिजिहीर्षुर्न करिष्यसि राज्यं, तथापि तव पुत्रो विधास्यतीति । एवं निबिड-निबन्धं वणिजं ज्ञात्वा भूयोऽपि भीमो जगाद—यद्येवं त्वं निपुणदर्शी तर्हि 'न परिणेमि'त्ति नाहं परिणेष्यामि काञ्चित् कुलबालिकाम् । अतो नास्त्येव मत्पुत्रसम्भव इति प्रतिज्ञाय कालेन व्रजता ब्रह्मचारी भीमकुमारः समजनि । इतिः परिसमाप्त्यर्थः ॥ २४७ ॥ ३ ॥

एवं सम्पूर्णमनोरथेन वणिजा राज्ञे दत्ता चन्द्रलेखा । परिणीता च प्रशस्ते वासरे प्रचुरद्रविणव्ययेन । तया च समं विषयशर्मानुभवतस्तस्य पुत्रः समभूत् । कृतश्च समुचितसमये स राजा । 'भीमोगिहवंभ' त्ति भीमोऽपि गृहस्थित एवाज्ञा-

भावितात्माऽपारसंसारपातभीतो निष्कलङ्कमब्रह्मविरतिव्रतं परिपालयन् दिनान्यनैषीत् । 'सक्कथुइ आणा' इति अथ
कदाचिच्छक्रस्तदीयदृढव्रताभिप्रायमवेत्य सौधर्म्मसभायामुपविष्टस्त्रिविष्टपसदामग्रतः तस्य स्तुतिं श्लाघालक्षणां चकार—
यथैष भीमकुमारः संक्रन्दनसहायैः सुरैरपि जगज्जनताचित्तचमत्कारकारणसौभाग्यादिगुणान्वितोऽपि ब्रह्मचर्यपरिपाल-
नारूपायाः सर्वज्ञाज्ञायाश्चालयितुं न शक्यः, किं पुनर्मानवादिभिर्वराकैः । 'देवायल्लगगणिया' इति । ततो देवेन 'आय-
ल्लग'त्ति देशीभाषया मदनज्वरातुरशरीरा वेश्या विकुर्व्य दर्शिता । भणितश्च तज्जननीरूपधारिणा तेन—ममात्यन्तवल्लभेयं
सुता त्वया असंपाद्यमानसमीहितसिद्धिरितिकष्टकालदशां प्राप्ता नियतं व्यापद्यते । निष्कृप! स्त्रीहत्योपेक्षकत्वेन हे
निर्दय? अधर्मस्तथाविधानुष्ठानेनाप्यसाध्यसिद्धिः सम्पत्स्यत इति ॥ २४८ ॥ ४ ॥

एवमुक्तस्यास्य व्याघ्रदुस्तटीन्यायमाकलय्य आज्ञावहुमानकरणाद् यदभूत् तदाह—'आणाभावणजोगा' इति । आज्ञा-
यास्तीर्थकृद्वचसो भावनाऽऽलोचना, यथा—"अपकारपरा एव, योषितः केन निर्मिताः । नरकागाधकूपस्य, समाः
सोपानपंक्तयः? ॥ १ ॥ दोषाणां राशयो ह्येताः, पराभूतेः परं पदम् । मोक्षाध्वध्वंसकारिण्यः, प्रत्यक्षा नूनमापदः ॥ २ ॥
एता हसन्ति च रुदन्ति च कार्यहेतोर्विश्वासयन्ति च परं न च विश्वसन्ति । तस्मान्नरेण कुलशीलसमन्वितेन, नार्यः
श्मशानघटिका इव वर्जनीयाः ॥ ३ ॥ सल्लं कामा विसं कामा, कामा आसीविसोवमा । कामे पत्थेमाणा, अकामा
जंति दुग्गइं ॥ ४ ॥" इत्यादि, ततस्तया आज्ञाभावनया योगः—सम्बन्धस्तस्मात् सकाशात् किमित्याह—रागाभावः—
अभिष्वङ्गनाशोऽस्य धीरस्य वर्त्तते । तथा; आज्ञाबहुमानादेवैवं विचारितवानसौ, यथा—'वयभंसपाव'त्ति व्रतभ्रंशे—व्र-

त्वविरतिविनाशे ध्रुवं पापं स्यात्, यथोक्तम्—"वरं प्रवेष्टुं ज्वलितं हुताशनं, न चापि भग्नं चिरसञ्चितं व्रतम्। वरं हि मृत्युः सुविशुद्धकर्मणा, न चापि शीलस्खलितस्य जीवितम् ॥ १ ॥" तस्माद् व्रतरक्षणे एव यत्नो विधेयः । 'वावत्ति-रक्खणे सुकरुणाधम्मो' इति एतस्या मय्यनुरक्ताया व्यापत्तावपि न मे बन्धः । यत इत्थमागमः—"अणुमेत्तोऽवि न कस्सवि बन्धो परवत्थुपच्चयो भणिओ । तहवि य जयंति जइणो परिणामविसुद्धिमिच्छंता ॥ १ ॥" तथापि व्यापत्तिरक्षणेऽस्याः शोभना करुणा सुकरुणा जैनधर्मकथनरूपा कर्त्तुं युक्तेति दुस्सहानङ्गदावानलविध्यापनाम्भोधरप्रतिमस्तेन धर्म्मो जगदे तस्यै । यथा—"मूलमेतदधर्म्मस्य, भवभावप्रवर्द्धनम् । यस्मान्निदर्शितं शास्त्रे, ततस्त्यागोऽस्य युज्यते ॥ १ ॥ धन्यास्ते वन्दनीयास्ते, तैस्त्रैलोक्यं पवित्रितम् । यैरेष भुवनक्लेशी, काममल्लो निपातितः ॥ २ ॥" तदनु तस्यामरगिरेरिवाप्रकम्पतां ज्ञात्वा निजरूपमादर्श्य देवो द्यामगच्छत् ॥ २४९ ॥

भीमोऽपि यदकरोत्, तदाह—आत्मैवारामो—नन्दनवनलक्षो यस्य स तथा वाह्यवस्तुविषयरतिरहित इत्यर्थः, जातः—सम्पन्नः, आज्ञाम्—"अप्पहियं कायव्वं जइ सक्का परहियं च कायव्वं । अप्पहियपरहियाणं अप्पहियं चेव कायव्वं ॥ १ ॥" इति लक्षणामाज्ञां स्मृत्वा अवधार्य वीतरागाणाम्—अर्हताम् । साम्प्रतमेतन्मुखेनान्येषामुपदेशमाह—इति अनेन प्रकारेण धर्मः श्रुतचारित्ररूपः शेषाणामपि प्रस्तुतभीमव्यतिरिक्तानां स्यात्, विषये यो यदा कर्त्तुमुचितोऽर्थः तत्रैवं भीमन्यायेन कुर्वतामाज्ञाम्—उचितप्रवृत्तिरूपाम् । तदुक्तम्—"उचियं खलु कायव्वं सव्वत्थ सया नरेण बुद्धिमया । एवं चिय फलसिद्धी एसच्चिय भगवओ आणा ॥ १ ॥" ॥ २५० ॥

लौकिकैरप्याज्ञाप्रामाण्यमेवाश्रितमिति दर्शयन् भीष्मवक्तव्यतामाह;—

**अन्ने गयपिंडो दब्भहत्थगाणातो दब्भदाणेणं । भीमं पियामहं खलु पाएणेवं चिय कहेंति ॥ २५१ ॥**

अन्ये—अपरे सूरयो भीष्मपितामहमेव कथयन्तीत्युत्तरेण योगः । स च किल कदाचिद् गयायां पुरि लोकप्रसिद्धायां पितृपिण्डप्रदानार्थं जगाम । तत्र च तेन कृत्येषु जलाभिषेकाग्निकर्म्मादिषु पिण्डप्रदानोचितेषु कृतेषूपस्थापिते पिण्डदाने पितृभिरेको हस्तो दर्भाङ्कुरकलिततया दर्भहस्तकः सर्वापरपिण्डप्रदातृसाधारणो वटाद् निःसार्य पिण्डग्रहणार्थं प्रगुणीकृतः । द्वितीयस्तु तदीयब्रह्मचर्यादिगुणावर्जितैस्तैरेव नानामणिखण्डमण्डितकनकचूडालंकृत इति । ततस्तेनेतरहस्तापहस्तितेन दर्भहस्तकाज्ञाया "दर्भहस्तके पिण्डः प्रदातव्यः" इत्येवंरूपायाः सकाशाद् दर्भदानेनेति—दर्भहस्ते यद्दानं पिण्डस्य विहितं तेनोपलक्षितं सन्तं भीष्मं—सान्त्वनुसूनुं गाङ्गेयापरनामकं पितामहं—पाण्डवकौरवाणां पित्रोरपि पितृभूतं, खलु वाक्यालङ्कारे, प्रायो बाहुल्येन, एवमेव—भीमकुमारवदाज्ञाबहुमानवन्तं कथयन्तीति ॥ २५१ ॥

अथ 'आणापरतंतेहिं ता बीयाहाणमेत्थ कायवं' एतत् प्रपञ्च्य साम्प्रतं येषामिदमाज्ञापारतंत्र्यं न स्यात् तानाह;—

**एवं च पारतंतं आणाए णो अभिन्नगंठीणं । पडिसोतोभिमुहाणवि पायमणाभोगभावाओ ॥ २५२ ॥**

एवं च—भीमकुमारवत् पारतन्त्र्यं—परवशभावलक्षणमाज्ञाया नो—नैवाभिन्नग्रन्थीनाम्—अविदारितघनरागद्वेषमोहपरिणामानां जीवानाम् । कीदृशानामपीत्याह—प्रतिस्रोतोऽभिमुखानामपि । इह द्विधा जीवनदीपरिणतिरूपं स्रोतः—संसार-

स्रोतो निर्वृतिस्रोतश्च, तत्र संसारस्रोत इन्द्रियाणामनुकूलतया प्रवृत्तिरनुस्रोत उच्यते,। द्वितीयं च तत्प्रतीपतया प्रतिस्रोत इति। ततः किञ्चित् परिपक्वभव्यतया तृणवत्तुलितधनजीवितव्यादीनां संसारप्रतीपप्रारब्धचेष्टानामपि तथाविधबालतपस्विनां प्रायो—बाहुल्येनानाभोगभावात्—तथाविधप्रज्ञापकाभावेनालब्धाज्ञास्वरूपत्वात्। तथा हि तीर्थान्तरीया अपि केचिद् निर्विण्णभवाभिसन्धयो निर्वाणं प्रति दृढबद्धाभिलाषा उपलभ्यन्ते, परमभिन्नग्रन्थितया आज्ञास्वरूपमविकलमजानाना न तत्परतन्त्रा भवितुमर्हन्ति। न च वक्तव्यमभिन्नग्रन्थीनामाज्ञालाभ एव नास्ति ॥ २५२ ॥

कीदृशी तेषां तत्परतन्त्रतेह चिन्त्येत्याशंक्याह;—

**गंठिगसत्तापुणबंधगाइयाणंपि दव्वतो आणा। नवरमिह दव्वसद्दो भइयव्वो समयणीतीए ॥ २५३ ॥**

इह ग्रन्थिरिव ग्रन्थिः—घनो रागद्वेषपरिणामः। एतदुक्तम्—"गंठित्ति सुदुब्भेओ कक्खडघणरूढगूढगंठिव्व। जीवस्स कम्मजणिओ घणरागद्दोसपरिणामो ॥ १ ॥" ततो ग्रन्थिकसत्त्वा ग्रन्थिस्थानप्राप्ताः प्राणिनः, ग्रन्थिकसत्त्वाश्च तेऽपुनर्बन्धकादिकाश्च ग्रन्थिकसत्त्वापुनर्बन्धकादिकास्तेषामपि द्रव्यतो द्रव्यरूपा आज्ञा भवति। तत्रापुनर्बन्धकः 'पावं न तिव्वभावा कुणइ' इत्यादिलक्षणः आदिशब्दाद् मार्गाभिमुखमार्गपतितौ यथा—प्रवृत्तकरणचरमभागजौ सन्निहितग्रन्थिभेदौ, अभव्या दूरभव्याश्च सकृद्बन्धकादयो गृह्यन्ते। नवरं केवलमिह विचारे द्रव्यशब्दो भक्तव्यो विकल्पयितव्योऽर्थमपेक्ष्य समयनीत्या सिद्धान्तस्थित्या द्वयोरर्थयोः सिद्धान्ते द्रव्यशब्दो वर्त्तत इत्यर्थः ॥ २५३ ॥

भजनामेवाह;—

**एगो अप्पाहन्ने केवलए चेव वट्टती एत्थ । अंगारमद्दगो जह द्व्वायरिओ सयाऽभव्वो ॥ २५४ ॥**

एको द्रव्यशब्दोऽप्राधान्येऽप्रधानभावे केवलके चैव प्रधानभावकारणभावांशविकले एव वर्त्तते । अत्रानयोर्द्रव्यशब्दयोर्मध्ये दृष्टान्तमाह—अङ्गारमर्द्दको यथा द्रव्याचार्योऽभूत—भविष्यद्भावाचार्ययोग्यभावः सदा सर्वकालमभव्यो वक्ष्यमाणरूपः सन् ॥ २५४ ॥

**अन्नो पुण जोगत्ते चित्ते णयभेदओ मुणेयव्वो । वेमाणिओववाउत्ति दव्वदेवो जहा साहू ॥ २५५ ॥**

अन्यः पुनर्द्रव्यशब्दो योग्यत्वे तत्पर्यायसमुचितभावरूपे चित्रे नानारूपे एकभविकवद्धायुष्काभिमुखनामगोत्रलक्षणे नयभेदतः संग्रहव्यवहारनयविशेषाद् मुणितव्यो वोद्धव्यः । यथोक्तं—"नामाइतियं दव्वट्ठियस्स भावो उ पज्जवनयस्स । संगहववहारा पढमगस्स सेसा उ इयरस्स ॥ १ ॥" द्वितीयार्द्धस्यायमर्थः—संग्रहव्यवहारौ प्रथमकस्य द्रव्यास्तिकस्य प्रतिवद्धौ, शेषास्तु ऋजुसूत्रादय इतरस्य पर्यायास्तिकस्यायत्ता इति । एतदेव प्रयोगत आह—वैमानिकेषु देवेषूपपातो यस्य स तथेत्येवं कृत्वा द्रव्यदेवो यथा साधुर्मुनिर्देवत्वकारणभावापन्न इति । अन्यत्राप्युक्तम्—"मिउपिंडो दव्वघडो सुसावगो तह य दव्वसाहुत्ति । साहू य दव्वदेवो एमाइ सुए जओ भणियं ॥ १ ॥" ॥ २५५ ॥

इत्थं द्रव्यशब्दं द्व्यर्थमभिधाय यथायोग्यं योजयति;—

**तत्थाभव्वादीणं गंठिगसत्ताणमप्पहाण त्ति । इयरेसि जोगताए भावाणाकारणत्तेण ॥ २५६ ॥**

तत्र तयोर्द्रव्यशब्दयोर्मध्येऽभव्यादीनामभव्यसकृद्वन्धकादीनां ग्रन्थिकसत्त्वानां द्रव्यत आज्ञाभ्यासपराणामप्रधानोऽप्रधानार्थो द्रव्यशब्दो वर्त्तते। इति वाक्यालंकारे। भवति चाभव्यानामपि ग्रन्थिस्थानप्राप्तानां केषाञ्चिद् आज्ञालाभो द्रव्यतः। यथोक्तम्—"तित्थकराइपूयं दट्ठूणण्णेण वावि कज्जेण। सुयसामाइयलंभो होज्जाऽभवस्स गंठिम्मि ॥१॥" इतरेषामपुनर्बन्धकादीनां योग्यतायां द्रव्यशब्दो वर्त्तते। कथमित्याह—भावाज्ञाकारणत्वेन सञ्जाताज्ञाहेतुभावेनेति ॥२५६॥

अथ प्रधानाप्रधानयोर्द्रव्याज्ञयोश्चिह्नान्यभिधातुमाह;—

**लिंगाण तीए भावो न तदत्थालोयणं ण गुणरागो। णो विम्हओ ण भवभयमिय वच्चासो य दोण्हंपि २५७**

लिङ्गानां चिह्नानां तस्यामाज्ञायां सत्यां भावः सत्तालक्षणो वाच्यः। द्वयोरपीत्युत्तरेण योगः। तत्राप्रधानायां स तावदुच्यते। न नैव तदर्थालोचनमाज्ञाभिधेयार्थपर्यालोचनं, न गुणरागः—नाज्ञाप्ररूपकाध्यापकादिपुरुषगुणपक्षपातः, तथा न विस्मयोऽहो! मयाऽप्राप्तपूर्वेयं जिनाज्ञाऽनादौ संसारे कथंचित् प्राप्तेत्येवंरूपः; तथा न भवभयं संसारभीतिः, सामान्येनाज्ञाविराधनायां वा एतावन्त्यप्रधानद्रव्याज्ञाया लिङ्गानि प्रधानद्रव्याज्ञाया इति विपर्यासश्च पूर्वोक्तलिङ्गव्यत्ययः पुनः, यथा, तदर्थालोचनगुणरागो विस्मयो भवभयं चेति द्वयोरपि प्रधानाप्रधानार्थयोर्द्रव्यशब्दयोः प्रयोगे मतीति ॥ २५७ ॥

प्रागप्रधानार्थद्रव्यशब्दप्रयोगचिन्तायामङ्गारमर्दकः केवल एवोक्तः। साम्प्रतं यौगपद्येन प्रधानाप्रधानार्थद्रव्यशब्दं नियोजयन्नङ्गारमर्दकगोविन्दवाचकावुररीकृत्याह;—

**अंगारमद्दगो च्चिय आहरणं तत्थ पढमपक्खम्मि । गोविंदवायगो पुण बीए खलु होति णायव्वो ॥ २५८ ॥**

अङ्गारमर्दक इहाज्ञाविचारपक्षे आहरणं तयोर्द्वयोर्द्रव्यशब्दयोः प्रथमपक्षेऽप्रधानार्थतालक्षणे । गोविन्दवाचकः पुन-र्द्वितीये प्रधानार्थतालक्षणे । खलु पूर्ववत् । भवति ज्ञातव्य उदाहरणतयेति ॥

इहाङ्गारकामर्दकोदाहरणमेवं वाच्यम्;—सूरिर्विजयसेनाख्यो मासकल्पविहारतः । समायातो महाभागः पुरे गर्जनकाभिधे ॥ १ ॥ अथात्र तिष्ठतस्तस्य कदाचिन्मुनिपुङ्गवैः । गवां विसर्गवेलायां स्वप्नोऽयं किल वीक्षितः ॥ २ ॥ कलभानां शतैः शूरैः सूकरः परिवारितः । पञ्चभिर्भद्रजातीनामस्मदाश्रयमागतः ॥ ३ ॥ ततस्ते कथयामासुः सूरेः स्वप्नं तमद्भुतम् । (ग्रन्थाग्रन्थ ६०००) । सूरिरुवाच तस्यार्थं साधूनां पृच्छताममुम् ॥ ४ ॥ सुसाधुपरिवारोऽद्य सूरिरेष्यति कोऽपि वः । प्राघूर्णकः परं भव्यो नासाविति विनिश्चयः ॥ ५ ॥ यावज्जल्पत्यसौ तेषां साधूनामग्रतः कृती । रुद्रदेवाभिधः सूरिस्तावत्तत्र समागतः ॥ ६ ॥ शनैश्चर इव स्फारसौम्यग्रहगणान्वितः । एरण्डतरुवत्कान्तकल्पवृक्षगणावृतः ॥ ७ ॥ कृता च तस्य तैस्तूर्णमभ्युत्थानादिका क्रिया । आतिथेयी यथायोग्यं सगच्छस्य यथागमम् ॥ ८ ॥ ततो विकलवेलायां कोलाकारस्य तस्य तैः । परीक्षणाय निक्षिप्ता अङ्गाराः कायिका भुवि ॥९॥ स्वकीयाचार्यनिर्देशात् प्रच्छन्नैश्च तकैः स्थितैः । वास्तव्यसाधुभिर्दृष्टास्ते प्राघूर्णकसाधवः ॥ १० ॥ पादसंचूर्णिताङ्गारकुशत्काररवश्रुतौ । मिथ्यादुष्कृतमित्येतद् ब्रुवाणाः प्राणिशङ्कया ॥ ११ ॥ कुशत्काररवस्थाने कृतचिह्ना इतीच्छया । दिने निभालयिष्यामः कुशत्कारः किमुद्भवः ? ॥ १२ ॥ आचार्यो रुद्रदेवस्तु प्रस्थितः कायिकाभुवम् । कुशत्काररवं कुर्वन्नङ्गारपरिमर्दनात् ॥ १३ ॥ जीवाश्रद्धानतो मूढोऽवदंश्चैतज्जिनैः किल । जन्तवोऽमी

विनिर्दिष्टाः प्रमाणैर्न्यर्थकृता अपि ॥ १४ ॥ वास्तव्यसाधुभिर्दृष्टो यथादृष्टं च साधितम् । सूरेर्विजयसेनस्य तेनापि गदितं ततः ॥ १५ ॥ स एष सूकरो भद्रास्त एते वरहस्तिनः । स्वप्ने च सूचिता ये वो न विधेयोऽत्र संशयः ॥ १६ ॥ तैः प्रभातेऽथ तच्छिष्या बोधितास्तूपपत्तिभिः । यथैवं चेष्टितेनायमभव्य इति बुध्यताम् ॥ १७ ॥ त्याज्यो वोऽयं यतो घोरसंसारतरुकारणम् । ततस्तैरप्युपायेन क्रमेणासौ विवर्जितः ॥ १८ ॥ ते चाकलङ्कसाधुत्वं विधायाथ दिवं गताः । ततोऽपि प्रच्युताः सन्तः क्षेत्रेऽत्रैव च भारते ॥ १९ ॥ श्रीवसन्तपुरे जाता जितशत्रोर्महीपतेः । पुत्राः सर्वेऽपि कालेन ते प्राप्ता यौवनश्रियम् ॥ २० ॥ अन्यदा तान् सुरूपत्वात् कलाकौशलयोगतः । सर्वत्र ख्यातकीर्त्तित्वात् सर्वानेवं न्यमन्त्रयत् ॥ २१ ॥ हस्तिनागपुरे राजा कनकध्वजसंज्ञितः । स्वकन्याया वरार्थाय तत्स्वयंवरमण्डपे ॥ २२ ॥ तत्रायातैः स तैर्दृष्टो गुरुरङ्गारमर्दकः । उष्ट्रत्वेन समुत्पन्नः पृष्ठारूढमहाभरः ॥ २३ ॥ गलावलम्बितस्थूलकुतुपो पेशलं रसन् । पामनः सर्वजीर्णाङ्गो गतत्राणोऽतिदुःखितः ॥ २४ ॥ तमुष्ट्रमीक्षमाणानां तेषां कारुण्यतो भृशम् । जातिस्मरणमुत्पन्नं सर्वेषां शुभभावतः ॥ २५ ॥ देवजन्मोद्भवज्ञानज्ञातत्वात्तैरसौ स्फुटम् । करभकः प्रत्यभिज्ञातो यथाऽयं वत नो गुरुः ॥ २६ ॥ ततस्ते चिन्तयामासुर्धिक् संसारस्य चेष्टितम् । येनैष तादृशं ज्ञानमवाप्यापि कुभावतः ॥ २७ ॥ अवस्थामीदृशीं प्राप्तः संसारं च भ्रमिष्यति । ततोसौ मोचितस्तेभ्यस्तत्स्वामिभ्यः कृपापरैः ॥ २८ ॥ ततस्तदेव ते प्राप्य भवनिर्वेदकारणम् । कामभोगपरित्यागात् प्रव्रज्यां प्रतिपेदिरे ॥ २९ ॥ ततः सुगतिसन्तानाच्छिवास्यन्त्यचिरादमी । इतरः पुनरभव्यत्वाद् भवारण्ये भ्रमिष्यति ॥ ३० ॥ इति ॥

गोविन्दवाचकस्यायं वृत्तान्त उपलभ्यते। यथासीन्नगरे क्वापि सूरिभिर्दुष्कृतास्पदे ॥१॥ गोविन्दो नाम निःशेषविद्व-ज्जनमदापहः। शाक्यभिक्षुर्महावादी दानवोद्धुरचेष्टितः ॥२॥ युग्मम् ॥ तत्रायया विहारेण कदाचिन्मुनिभिर्वृतः। सिद्धान्तशब्दसाहित्यच्छन्दस्तर्कविचक्षणैः ॥ ३ ॥ श्रीगुप्तनामकः सूरिर्भूरिभव्यकजांशुमान्। साधुलोकोचितस्थाने तस्थौ स्थास्नुयशोभरः ॥ ४ ॥ ग्रहतारागणैरिन्दुरुद्द्योतितनभस्तलैः। यथा बभस्त्येष भृशं तथान्तेवासिभिर्निजैः ॥ ५ ॥ यथा सौरभसंभारभरिताखिलदिङ्मुखे। भवेयुरलिनो लीनाः पद्मसद्मनि मानसे ॥ ६ ॥ तथा गुणज्ञस्तत्रत्यो जनः सम्मदसङ्गतः। तस्य सूरेः पदाम्भोजमालिल्ये शल्यसूदिनः ॥ ७ ॥ शुश्राव च जिनैरुक्तं धर्म्मं कर्मक्षयावहम्। तेनोच्यमानमानन्दध्वानव्याप्तविहायसा ॥ ८ ॥ जातः प्रवादो नगरे श्रुतरत्नमहोदधिः। न समस्ति जने मन्ये सूरेरस्माद्गतस्मयः ॥ ९ ॥ यथा सप्तच्छदामोदाद्वारणो मदमश्नुते। तत्प्रवादश्रुतेस्तद्वद् गोविन्दो विह्वलोऽभवत् ॥ १० ॥ को नाम मयि पाण्डित्यमहासागरपारगे। विजृम्भमाणे लभतामिलायामुज्वलं यशः? ॥ ११ ॥ गर्वोद्ग्रीवतया सम्यक् किञ्चिदग्रेऽनिभालयन्। सूरेः समीपे संप्राप संश्रितो वादसङ्गरम् ॥ १२ ॥ वाचोयुक्तिभिरुच्चाभिश्चित्राभिरचिरादपि। रेणुवद् मेघधाराभिः सूरिणा निस्फुरीकृतः ॥ १३ ॥ विलक्षभावं भूयांसं स सम्पन्नो व्यचिन्तयत्। न यावदेतत्सिद्धान्तमध्यं लब्धं कथञ्चन ॥ १४ ॥ तावन्न जीयते तस्मादपक्रम्य प्रदेशतः। दूरदेशान्तरप्राप्तौ सत्यां सूर्यन्तरान्तिके ॥ १५ ॥ समुत्पादितविश्वासो दिदीक्षे दक्षभावतः। लग्नः सिद्धान्तमध्येतुं परं सत्वरमानसः ॥ १६ ॥ विपर्यासाच्च नो सम्यक्तं बोद्धुं पारयत्यसौ। कतिचिद्दिनात्यये जाते भूयः सम्भूय सौगतः ॥ १७ ॥ उपतस्थे तथैवासौ सूरिणाऽनुत्तरीकृतः। भूयोऽप्यन्यां दिशं

गत्वा प्रव्रज्याधीत्य चागमम् ॥ १८ ॥ किञ्चित्तथैव समदः प्रपेदे वादवाञ्छया । तमेव सूरिं, तेनापि शक्त्या नीतो विज्ञताम् ॥ १९ ॥ भूयस्तृतीयवारां स दूरदेशान्तराश्रयात् । गृहीतदीक्ष आचारे आद्याध्ययनसंश्रिते ॥ २० ॥ वनस्पतीनामुद्देशे पपाठालापकानिमान् । वनस्पतीनां जीवत्वसाधकान् शुद्धयुक्तिभिः ॥ २१ ॥ यथा—"इमंपि जाइधम्मयं एयंपि जाइधम्मयं । इमंपि वुड्ढिधम्मयं एयंपि वुड्ढिधम्मयं । इमंपि चित्तमंतयं एयंपि चित्तमंतयं । इमंपि छिन्नं मिलाइ एयंपि छिन्नं मिलाइ । इमंपि आहारयं एयंपि आहारगं । इमंपि अणिययं एयंपि अणिययं । इमंपि असासयं एयंपि असासयं । इमंपि चउवचइयं एयंपि चउवचइयं । इमंपि विपरिणामयं एयंपि विप्परिणामयमिति ॥" स शाक्यमतसंस्कारात् पूर्वं जीवतया तरून् । न श्रद्दधे तदानीं तु कथञ्चिन्मोहह्रासतः ॥ २२ ॥ जात्यन्ध इव दृष्ट्वासौ लग्नो द्रष्टुं वनस्पतीन् । जीवत्वेन स्फुटीभूय स आचख्यौ निजाशयम् ॥ २३ ॥ गुरोस्तेनापि दीक्षास्मै पुनः प्रादीयतादितः । जातो युगप्रधानोऽसौ वाचकत्वोपलब्धितः ॥ २४ ॥ एवं चास्य पुरा जज्ञे द्रव्याज्ञा केवलं परा । ततः सैव गता तस्य भावाज्ञामृतरूपताम् ॥ २५ ॥ इति ॥ २५८ ॥

अथ भावाज्ञामधिकृत्याधिकारिणमाह;—

**भावाणा पुण एसा सम्मद्दिट्ठिस्स होति नियमेण । पसमादिहेउभावा णिव्वाणपसाहणी चेव ॥ २५९ ॥**

भावाज्ञा पुनरेषा सद्भूतआज्ञापरिणामः पुनरयं सम्यग्दृष्टेर्भिन्नग्रन्थितया यथावद्दृष्टवस्तुतत्त्वस्य भवति जायते

नियमेनावश्यतया । कीदृशीत्याह—प्रशमादिहेतुभावात् प्रशमसंवेगनिर्वेदानुकम्पास्तिक्यमोक्षकारणसद्भावाद् निर्वाणप्रसाधनी चैव निवृतिसंपादिकैवेति ॥ २५९ ॥

ततोऽस्यां यदसौ करोति तदाह;—

**एयाए आलोचइ हियाहियाइमतिनिउणनीतीए । किच्चे य संपयट्टति पायं कज्जं च साहेति ॥ २६० ॥**

एतस्यां भावाज्ञायां सत्यां आलोचयति जीवः । किमित्याह—हिताहितानि इहलोकपरलोकयोर्हितानि नीतिव्यवहारादिलक्षणानि, अहितानि च तद्विपरीतानि परद्रव्यापहारादीनि । कथमित्याह—अतिनिपुणनीत्यावज्रसूचेरप्यतितीक्ष्णयोहापोहयुक्त्या । तथा कृत्ये च कर्त्तव्येऽर्थे धर्मश्रवणादौ संप्रवर्त्तते सम्यक् चेष्टावान् भवति प्रायो बाहुल्येन । तथा, कार्यं च धर्मार्थादिरूपं साधयति निर्वर्त्तयति प्राय एवावन्ध्यबुद्धित्वेन सफलचेष्टत्वात् ॥ २६० ॥

आह—किं कदाचिदन्यथाभावोऽपि स्याद् येनात्र प्रायोग्रहणं कृतमिति । उच्यते—सत्यमेवैतत्, कदाचित् कस्यचित् प्रतिबन्धसम्भवात् । तमेव दर्शयन्नाह;—

**पडिबंधो वि य एत्थं सोहणपंथम्मि संपयट्टस्स । कंटगजरमोहसमो विन्नेओ धीरपुरिसेहिं ॥ २६१ ॥**

प्रतिबन्धोऽपि च स्खलनारूपः किं पुनरप्रतिबन्ध इत्यपिचशब्दार्थः, अत्र भावाज्ञायां लब्धायां सत्यां तथाविधावश्यंवेद्यकर्मविपाकात् शोभनपथे सर्वसमीहितसिद्धिसम्पादकत्वेन सुन्दरे पथि पाटलिपुत्रकादिपुरसम्बन्धिनि सम्प्रवृत्तस्य

त्यन्ति पथिकस्य ये कण्टकज्वरमोहाः प्रतिबन्धहेतुत्वात् प्रतिबन्धा जघन्यमध्यमोत्कृष्टरूपास्तैः समस्तुल्यः कण्टकज्वर-मोहसमो विज्ञेयो धीरपुरुषैः ॥ २६१ ॥

तथा—

**जह पावणिज्जगुणणाणतो इमो अवगमम्मि एतेसिं । तत्थेव संपयट्टति तह एसो सिद्धिकज्जम्मि ॥ २६२ ॥**

यथा प्रापणीयस्य प्रापयितव्यस्य पुरग्रामादेर्गुणाः सौराज्यसुभिक्षजनक्षेमादयस्तेषां ज्ञानतस्तेषु परिज्ञातेषु सत्स्वित्यर्थः, अयं पथिकोऽपगमेऽभावे जाते एतेषां कण्टकादीनां तत्रैव प्रापणीये संप्रवर्त्तते न पुनरन्यत्रापि, तथा निरूपितपथिकवदेष भावाज्ञावान् सिद्धिकार्ये सिद्धिलक्षणेऽभिधेयेऽर्थेऽजरामरत्वादितद्गुणपरिज्ञानादिति ॥ २६२ ॥

अधुना प्राक्प्रतिपादितप्रतिबन्धानधिकृत्य दृष्टान्तेनाह;—

**मेहकुमारो एत्थं डहणसुरो चेव अरिहदत्तो य । आहरणा जहसंखं विन्नेया समयनीतीए ॥ २६३ ॥**

मेघकुमारोऽत्र प्रतिबन्धे प्रतिज्ञापयितुमुपक्रान्ते, तथा, दहनसुरश्चैव द्वितीयः, अर्हद्दत्तश्च तृतीयः 'आहरण'त्ति उदाहरणानि यथासंख्यं कण्टकादिप्रतिबन्धेषु विज्ञेयाः समयनीत्या ज्ञाताधर्मकथादिसिद्धान्तस्थित्या ॥ २६३ ॥

तत्र मेघकुमारोदाहरणमादावभिधित्सुर्गाथानवकमाह;—

**रायगिहे सेणिए धारणी य गयसुमिण दोहलो मेहे । अभए देवाराहण संपत्ती पुत्तजम्मो य ॥ २६४ ॥ १ ॥**

उत्तुंग धवलपासायपंतिमालियनहंगणाभोयं । भोयपरलोयसंवासतुलियसुरलोयसिरिसोहं ॥ १ ॥ रायगिहं नाम पुरं पुराणमइरम्मयं पुराणं च । अत्थि समत्थमहीयलमज्झपवित्थरियगुणसत्थं ॥ २ ॥ तत्थासि सेणिओ नाम नरवई रायलक्खणसणाहो । निययभुयालाणनिलीणजणियपरसंपयकरेणू ॥ ३ ॥ सव्वगुणधारिणी तस्स धारिणी णामिगा पिया आसि । ससिमण्डलामलमुही अहीणनिस्सेसचंगंगी ॥ ४ ॥ सा अन्नया रइहरे गंगापुलिणुज्जले विसालम्मि । सिज्जातले पसुत्ता पासइ निसिमज्झभागम्मि ॥ ५ ॥ चउदंतमुम्मयं तं संतं मयसलिलमविरलपवाहं । रययगिरिगोरकायं गरुयं गयणादवतरंतं ॥ ६ ॥ नियवयणे पविसंतं सिंधुरमुद्धुरकरं सुरम्मतणू । तक्खणमेव विउद्धा तं सुमिणं माणसे ठविउं ॥ ७ ॥ सेणियसमीवमुवगम्म कोइलालावकोमलगिराहिं । तं पडिवोहिय साहइ जहा मए एरिसो सुमिणो ॥ ८ ॥ उवलद्धो तत्थ फलं केरिसमेसो सभावबुद्धीए । आलोचिऊण भासइ मन्ने ते पिययमे ! होही ॥ ९ ॥ कुलमउलिमणी कुलकप्पपायवो कुलणिहाणमणहं च । पुत्तो पवित्तचरियत्तणेण संपत्तवरकित्ती ॥ १० ॥ इय जंपियाऽवसाणे विसज्जिया पडिगया नियं सेज्जं । कुसुमिणदंसणभीया विमुक्कनिद्दा रयणिसेसं ॥ ११ ॥ धम्मियकहाहिं संखुज्जलाहिं चित्ताहिं नेउमारद्धा । पत्ते पभायसमए सुमिणवियाणगजणे अट्ठ ॥ १२ ॥ सद्दावेइ नरवई सुहासणेसुं कओवयारेसु । सव्वेवि सुहनिसन्ने पुच्छइ जह एयसुविणस्स ॥ १३ ॥ धारिणीदेवीदिट्ठस्स किं फलं तेवि सुमिणसत्थाइं । निययाइं परोप्परमूहिऊण उप्फुल्लमुहकमला ॥ १४ ॥ भासंति सामि ! माया जिणाण चक्कीण करिवराईए । पासेइ चउदस इमे सुमिणे कयमंगलकलावे ॥ १५ ॥ गय–वसह–सीह–अभिसेय–दाम–ससि–दिणयरं झयं कुंभं । पउमसर–सागर–विमाणभवण–रयणुच्चय सिंहिं च ॥ १६ ॥

ता पुण केवलजणणी सा सत्त इमेसिमन्नतरगे उ। बलजणणी पुण चउरो एगं मंडलियमायाओ ॥ १७ ॥ तग्गब्भला-
भकाले ता एयाए सुओ वरो होही। समयम्मि रज्जसामी राया होही मुणी अहवा ॥ १८ ॥ लद्धपोढजीवणवित्ति तो
ते गया सगेहेसु। सा पुण धारिणी देवी सुहेण तं गब्भमुव्वहइ ॥ १९ ॥ मासेसु तिसु गएसुं अकालजलवाहडोहलो
जाओ। तीमे जहा अहं हत्थिरायसेयणगमारूढा ॥ २० ॥ उवरि धरियायवत्ता सेणियरायन्नियां सपरिवारा। पाउसल-
च्छीविच्छड्डमंडिए नगरमज्झम्मि ॥ २१ ॥ वइभारगिरिपरिसरे तह वाहि सवओ वहंतीसु। गिरिनिन्नगासु नच्चंतएसु
सिहिमंडलेसु तहा ॥ २२ ॥ उद्दंडविज्जुदंडाडंबरपरिमंडिए दिसाचक्के। दद्दुरकुलारवाऊरिएसु नहविवरभागेसु ॥ २३ ॥
सुयपिच्छसच्छएहिं समंतओ मालिए धरणिवलए। हरियंकुरेहिं वित्थारिएहिं जह नीलवत्थेहिं ॥ २४ ॥ धवलवलाहयपं-
तीमंचरणालंकियासु य दिसासु। सव्वालंकारधरा हिंडामि अहं जइ, कयत्थं ॥ २५ ॥ मन्नामि जम्ममेयं, अपूरमाणम्मि
तम्मि संदेहे। जाया दुब्बलदेहा दूरं विच्छायवयणा य ॥ २६ ॥ अंगपडिचारियाहिं तं तदवत्थं पलोइय निवस्स।
साहियमज्ज जहा देव! देवी दीसइ निरभिरामा ॥ २७ ॥ इय देवीवुत्तंतं सोउं राया ससंभमो संतो। गंतुं तीए
समीवे एवं भणिउं समाढत्तो ॥ २८ ॥ दुव्वारवेरियपराजिएसु वइरीसु मइ फुरंतम्मि। कोणु पराभवमिहकाउमीसरो
तुज्झ सुविणेवि? ॥ २९ ॥ पणयब्भंसो वि ममाउ नत्थि सइ जीवियाओ अहियाए। इच्छामेत्ताणंतरसंपाइयचिंतिय-
त्थाए ॥ ३० ॥ तव चरणकमलभसरे सयले सयलाभिलासकरणसहे। देवि! सहीलोगम्मि वि दढं सढत्तं न पेच्छामो
॥ ३१ ॥ तव आणाभंगोवि हु संभाविज्जइ न बंधुलोगम्मि। तह किंकरेसु किं किं करेसु इय जंपमाणेसु ॥ ३२ ॥ संतो-

सपोसपडिघायगेसु एएसु ते असंतेसु । उव्वेयकारणं किं कहेसु सरइंदुसोममुहि ! ॥ ३३ ॥ इय सेणिएण पुट्ठा सा देवी परिकहेइ जह सामि ! । मज्झं अकालजलवाहगोयरो डोहलो जाओ ॥ ३४ ॥ मा तम्मसु जह सज्जो संपज्जइ एस तह जइस्सामि । चिंतासल्लपिसल्लो तस्स महल्लो तओ लग्गो ॥ ३५ ॥ अत्थाणे य निविट्ठो दूरं स विलक्खदिट्ठिसंचारो । दिट्ठोऽभएण पुट्ठो किं विमणा संपयं तुब्भे ? ॥ ३६ ॥ परिकहियं जह एसो असज्झरूवो मणोरहो जाओ । तव चुल्लमाउयाए तस्सोवाओ न कोइत्ति ॥ ३७ ॥ तक्खणलद्धोवाएण तेण भणियं लहुं पसाहेमि । तुब्भे अच्छह उच्छिन्नकज्जचिंताभरा संता ॥ ३८ ॥ तक्खणमेव पविट्ठो पोसहसालाए विहियउववासो । कुससंथारोवगओ परिवूढपगब्भबंभवओ ॥ ३९ ॥ सो पुव्वस्संगयामरआराहणकारणा तओ तइए । दिवसे पभायसमयम्मि सो सुरो पयडियसरूवो ॥ ४० ॥ दिव्ववरनेवत्थो रयणाभरणंसुपूरियदिसोहो । चलचारुकुंडलधरो ससिव्व सणिमंगलसहाओ ॥ ४१ ॥ दिप्पंतवियडमउडो सूरद्धासियसिरो हिमगिरिव्व । आजाणुविलंबिरदिव्वकुसुमवणमालसोहिल्लो ॥ ४२ ॥ जंपइ सप्पणयमओ किं कज्जं तोऽभओ पडिभणेइ । मम चुल्लमाउयाए इमेरिसो डोहलो जाओ ॥ ४३ ॥ ता जह पडिपुन्निच्छा संजायइ तह तुमं लहु करेहि । आमंति भणिय तक्खणविउव्विउद्दामघणमालो ॥ ४४ ॥ निस्सेसपाउससिरिं दाविय संमाणियम्मि डोहलए । देवीए सो पडिगओ जहागयं सावि नव मासे ॥ ४५ ॥ किंचहिए अतिवाहियवाहिविओगाइएहिं परिहीणा । सव्वंगोवंगविरायमाणमंगुब्भवं जणइ ॥ ४६ ॥ उच्चट्ठाणठिएसु गहेसु संतासु वाउधूलीसु । एत्तोच्चियसुपसन्ने नहम्मि सव्वासुविदिसासु ॥ ४७ ॥ वद्धावएणं पारद्धमुद्धुरं सयलनगरसामन्नं । दिज्जंतभूरिदाणं वज्जंतणवज्जतूरगणं ॥ ४८ ॥ उस्सुक्कमु-

गरं भटपवेसमुत्तं अदंडिमकुदंडं । मुत्ताहलविरइयसत्थियं व जायं पुरं सवं ॥ ४९ ॥ पत्ते दसाहदिवसे संमाणियवंधवे मुहिगणे य । अम्मापिऊहिं मेहोत्ति नामं संठावियं तस्स ॥ ५० ॥ चंकमणाइमहूसवसहस्सपरिलालिओ गिरिगउव्व । चंपयतरू व लग्गो वित्थरिउं देहसोहाए ॥ ५१ ॥ सो समए सयलकलाकलावकुसलो विसालसिरिनिलयं । पत्तो तारुण्ण-मणूणपुण्णलायण्णजलरासिं ॥ ५२ ॥ तत्तो तुल्लकलाओ तुल्लगुणाओ य तुल्लकायाओ । कन्नासु अट्ठसु सिलिट्ठएण वीवाहिओ विहिणा ॥ ५३ ॥ एक्केक्को पासाओ सेणियरन्ना विइन्नओ तासिं । तह रूप्पसुवन्नाणं कोडी पत्तेयमन्नं च ॥ ५४ ॥ ईसरजणगिहजोग्गं जं किंचि होइ वत्थु तं सवं । अट्ठगदाएण खणे पणामियं तम्मि नरवइणा ॥ ५५ ॥ ताहिं समं सो विसए विसायविसवेगविरहिओ संतो । भुंजइ देवो दोगुंदुगोव्व देवालए जाव ॥ ५६ ॥ ताव भुवणेक्कभाणू नाणुक्कोसो जियाण सवाण । अरिहा अपच्छिमो वद्धमाणसामी समोसरिओ ॥ ५७ ॥ उज्जाणे गुणसिलए लद्धपउत्ती सपरियणो राया । वंदणहेउं नयराओ निग्गओ सग्गसामीव ॥ ५८ ॥ तह मेहोवि कुमारो अस्सरहं चारुघंटमारूढो । पप्फुल्ललोयणेणं दिट्ठो नमिओ तिलोयगुरू ॥ ५९ ॥ कहिओ धम्मो जह जलियजलणजालासमाउले गेहे । नो जुत्तम-वट्ठाणं सुबुद्धिणो तह इमम्मि भवे ॥ ६० ॥ जम्मजरामरणकरालियम्मि पियविप्पओगविरसम्मि । विज्जुज्जोइव्व चले तुसखंडणम्मि व असारम्मि ॥ ६१ ॥ अइदुलहं नरजम्मं रम्मं तहवि विसमा इमे विसया । सविंदियनिग्गहपुवमायरो समुचिओ धम्मे ॥ ६२ ॥ पहियसमागमसरिसा सवेवि य संगमा दुरंता य । जीवियमवि मरणंतं विज्झावणमस्स तो जुत्तं ॥ ६३ ॥ एयं विज्झावेउं तत्तो जिणधम्मवारिवाहाओ ! अत्थि समत्थो कत्थइ ता सो सम्मं गहेयवो ॥ ६४ ॥ इय

देसणावसाणे पडिबुद्धेसुं बहूसु पाणीसु । अंसुजलकलियनयणो रोमंचंकुरियसव्वंगो ॥ ६५ ॥ दाउं पयाहिणातिगमभिवं-
दिय भासए इमं मेहो । जं तुब्भे वयह न सव्वहेव तं किंचि अलियंति ॥ ६६ ॥ इच्छामि तुम्हमंते निक्खमिउमिमाओ
भवमसाणाओ । जं नवरि जणगलोयं पुच्छामि तओ गओ सगिहं ॥ ६७ ॥ भणइ जणणिं अहम्मो ! भगवं अभिवंदि-
ओजिणो वीरो । निसुओ य तस्स धम्मो कन्नसुहो अमयसारिच्छो ॥ ६८ ॥ सा तं पडिभणइ तओ जाया ! कयलक्खणो
तुमं एगो । तं चेव य सकयत्थो अज्जं संपत्तपुण्णिच्छो ॥ ६९ ॥ जेण जगदेक्कगुरुणो तिलोयचूडामणिस्स गुणनिहिणो ।
पयकमलं वच्छ ! तए निहालियं वियसियमणेण ॥ ७० ॥ भणियं मेहेण तओ इच्छामी भयवओ चरणमूलं । गिहवा-
साओ इमाओ निक्खमिउं तिक्खदुक्खाओ ॥ ७१ ॥ खरपरसुपहयचंपयलयव्व सा ज्झत्ति धरणिवीढम्मि । पडिया विह-
डियसव्वंगभूसणा भग्गसोहग्गा ॥ ७२ ॥ पवणेण सीयलजलेहिं तह य वहलेहिं चंदणरसेहिं । सित्ता सुबुहुं तह तालविं-
टपरिवीइया संती ॥ ७३ ॥ उम्मीलियनयणजुया पच्चागयचेयणा भणइ तणयं । उंवरपुप्फंव तुमं सुदुल्लहो कहवि मे
लद्धो ॥ ७४ ॥ ता जाव अहं जीवामि ताव एत्थेव निव्वओ वससु । तुह विरहे जेण लहुं जीयं मे जाति कुलतिलय !
॥ ७५ ॥ परलोयंतरियाए मइ पवज्जं तुमं करेज्जासि । एवं च कए सुंदर ! कयन्नुयत्तं कयं होइ ॥ ७६ ॥ (मेघः--)
जलबुब्बुयविज्जुलयाकुसग्गजलधयवडोवमाणम्मि । मणुयाण जीविए मरणमग्गओ पच्छओ वावि ॥ ७७ ॥ को जाणइ
कस्स कहं होही वोही सुदुल्लहो एसो । ता धरियधीरिमाए अंबाए अहं विमोत्तव्वो ॥ ७८ ॥ (धारिणी-- )सुकुलुग्गयाओ
सुमणोहराओ लायन्नसलिलसरियाओ । निम्मलकलालयाओ सुवन्नतारुन्नपुन्नाओ ॥ ७९ ॥ मियमहुरभासिणीओ

लावण्णगुणमणोज्जाओ। सरइंदुसमसुहीओ नीलुप्पलपत्तनयणाओ ॥ ८० ॥ एयाओ अट्ठ वीवाहियाओ जायाओ तए निरुवमाओ। उवणीयनिउणविणयाओ, ताहिं सद्धिं तुमं विसए ॥ ८१ ॥ पंचपयारे सारे परिभुंजसु वट्टिए नियकुलम्मि। एगंतेण वितण्हो पच्छा पव्वज्जमणुसरसु ॥ ८२ ॥ (मेघः–)असुइद्धाणमिमाओ असुईओ च्चिय पवत्तजम्माओ। असुइक्कओवट्ठंभाओ चेव को मुणियपरमत्थो ॥ ८३ ॥ एयासु रमेज्ज अणज्जकज्जसज्जासु पायमित्थीसु। तह रोगजरापरिजज्जरासु मरणवमाणेसु ? ॥ ८४ ॥(धारिणी–)पुरिसपरंपरपत्तं वित्तमिणं पुत्त! ताव माणेहि। दिन्ने दीणाईणं भुत्ते मह वंधुलोएणं ॥ ८५ ॥ उच्छलियातुच्छजसो वंदिजणुग्गीयमाणगुणनिवहो। पच्छा वयं पवज्जसु विमुक्कतरुणत्तणो संतो ॥ ८६ ॥ (मेघः–) दाइयजलग्गिसाहारणेसु तह सरितरंगतुल्लेसु। मइमं अत्थेसु न कोइ एत्थ पडिवंधमुव्वहइ ॥ ८७ ॥ (धारिणी–)जह खग्गग्गसिहाए चंकमणं दुक्करं तहा पुत्त!। वयपरिपालणमेवं विसेसओ तुज्झ सरिसाणं ॥ ८८ ॥ (मेघः–)जा अकयववसाओ पुरिसो ता दुक्करं परं सव्वं। उज्जमधणाण धणियं सव्वं सज्झंतु पडिहाइ ॥ ८९ ॥ एवं कयनिब्बंधं जणणिं वंधवजणं तहा सव्वं। पव्वज्जापडिकूलं भासंतमणुत्तरं काउं ॥ ९० ॥ चित्तेहिं जुत्तिसयसंजुएहिं विणओवयार कलिएहिं। पच्चुत्तरेहिं एत्तो अप्पा मोयाविओ तेणं ॥ ९१ ॥ संतपरिच्चायकरी कायरजणजणियविम्हउक्करिसा। दिक्खा समत्थभवदुक्खमोक्खदक्खा तओ गहिया ॥ ९२ ॥ विहिया जिणेण करणिज्जवत्थुविसया मणोहरा गया। पण्णवणा जह एवं सोम! तए चिट्ठणिज्जंति ॥ ९३ ॥ उवणीओ गणवइणो संज्झासमए कमाणुसारेण। संथारगभूमीसुं विभज्जमाणीसु मेहस्स ॥ ९४ ॥ जाया दुवारदेसे सा साहूणं अइंतनिंताणं। कारणवसेण पायाइएहिं संघट्टि-

यस्स दढं ॥ ९५ ॥ अच्छिनिमीजणमेत्तंपि नेव जायं निसाए चिंतेइ । जइया गिहवासगओ सगउरवो आसि एएसिं ॥ ९६ ॥ इण्हिं वितण्हचित्ता एवमिमे परिभवंति मं मुणिणो । तो दुक्करं मुणित्तणमसक्कणिज्जं ममं भाइ ॥ ९७ ॥ पुच्छित्ता भयवंतं पभायसमए गिहं पुणो जामि । अह साहूहिं समेओ सूरुग्गमणे जिणसयासे ॥ ९८ ॥ भत्तीए वंदित्ता सामिं ठाणे नियम्मि उवविट्ठो । संभासिओ य अरहा जह मेह ! इमेरिसो राओ ॥ ९९ ॥ जाओ मणे वियप्पो जह गेहमईमि नेव ते जोग्गं । चिंतेउमिमं जं तं तइयभवे कुंजरो आसि ॥१००॥ एत्थेव भरहवासे वेयड्ढगिरिस्स पायमूलम्मि । वणवासिकयसुमेरुप्पहनामो पुन्नसव्वंगो ॥ १०१ ॥ जूहसहस्साहिवई निच्चं चिय रइपसत्तचित्तो य । कलभेहिं कलभियाहि य अच्चंतमणप्पियाहिं समं ॥ १०२ ॥ गिरिकुहरेसु वणेसुं नईसु तह उज्झरेसु सरसीसु । अखंडचंडभावो आहिंडंतो अह कयाइ ॥ १०३ ॥ पत्तम्मि गिम्हकाले खरेसु फरुसेसु दारुणेसु तहा । उच्छलियातुच्छरओभरेसु वाएसु सव्वत्तो ॥ १०४ ॥ वायंतेसु परोप्परसंघरिसाभासुरं तरुगणेसु । दावानलमुप्पन्नं पाससि पलयानल सरिच्छं ॥ १०५ ॥ डज्झंतेसु वणेसुं सरणविहीणे पलायमाणे य । सव्वम्मि सावयगणे भीमारवभरियभुवणयले ॥ १०६ ॥ वहु धूमधूमलासुं दिसासु वणवण्हिणा समारद्धे । सव्वम्मि भासरासिं काउं तणकट्ठनियरम्मि ॥ १०७ ॥ तज्जालावलिदूमियदेहो संकुचियघोरकरपसरो । उस्मुकभेरवरवो च्छड्डुंतो लिंडपिंडेय ॥ १०८ ॥ छिंदंतो वल्लिवियाणगाइ तण्हापरद्धसव्वंगो । परिचत्तजूहतत्ती पलायमाणो सरं एक्कं ॥ १०९ ॥ पत्तो अइतुच्छजलं कद्दमवहुलं अतित्थमोइन्नो । तत्थ जलमलभमाणो पंके खुत्तो अचायंतो ॥ ११० ॥ चलिउं पयमेत्तं पि हु दिट्ठो निवासिएण एक्केण । तरुणकरिणा सरोसं दसणेहिं सियग्गभागेहिं ॥ १११ ॥

जा सत्तदिणे वीसासमहियमेगं च वाससयं ॥ ११२ ॥ जीवित्ता अट्टवस-
भिन्नो पिट्ठपएसे दुविसहं वेयणं तओ पत्तो । चउदसणो उद्धुरनियगंधपडिवद्धसेस-
ट्टमाणसो मरिउमह समुप्पन्नो । एत्थेव भारहे विंझसेलमूले गयत्ताए ॥ ११३ ॥
करिदप्पो । मत्तंगपइट्ठाणो सरयब्भसमुज्जलसरीरो ॥ ११४ ॥ कालेण जोयणभरं पत्तो सत्तयसयाइं दंतीणं । सबरजणेणं
मेरुप्पहो त्ति संठवियनियनामो ॥ ११५ ॥ लीलाए चंकमंतो नियपरियणपरिगओ वणे तत्थ । पेच्छेसि तुमं कइयावि
गिम्हकाले वणदवग्गिं ॥ ११६ ॥ लग्गमुदग्गं, जाईसरिया तक्कालमेव पुविल्ला । अप्पा महया किच्छेण रक्खिओ ताओ
दावाओ ॥ ११७ ॥ परिभावियं तुमे तो दावो एसो सयावि गिम्हम्मि । होही ता पडियारं चिंतेमि अणागयं किंपि
॥ ११८ ॥ पढमे पाउससमए नियपरियणपरिगएण तो तुमए । गंगादाहिणकूले सव्वं रुक्खाइ फेडित्ता ॥ ११९ ॥ एगंते
सुमहंतं थंडिलमेगं कयं वणदवस्स । एगंतेणाजोग्गं पुणोवि तो पाउसस्संतो ॥ १२० ॥ तं चेव नियपरियणसमन्निओ
मगओ विसोहेसि । वासारत्तस्संते तं चेव पुणोवि तह चेव ॥ १२१ ॥ इय विहियसुत्थभावो पइवरिसं अन्नया तहेव
दवे । जाए तुमं अइगओ सपरियणो थंडिले तत्थ ॥ १२२ ॥ अन्नेवि रणजीवा तत्थ पविट्ठा दवाओ संतट्ठा । तह जह
कत्थइ कोइवि थेवंपि सहो न फंदेउं ॥ १२३ ॥ एगविलम्मि जह गओ परोप्परं मुक्कमच्छरो वसइ । पाणिसमूहो तह
तेन तेवि भयभूरिभावाओ ॥ १२४ ॥ तणुकंडुयणनिमित्तं अहन्नया ते कमो समुक्खित्तो । वलवंतपेल्लिओ तप्पएस
मेको गओ ससओ ॥ १२५ दिट्ठो तए दयाए तक्खणमापूरियं मणं तुज्झ । धरिओ उक्खित्तो वि य पाओ नियपीड-
गणणाओ ॥ १२६ ॥ तीए दयाए अइदुक्कराए तुच्छीकओ भवो तुमए । मणुयाउयं निवद्धं लद्धं सम्मत्तवीयं च ॥ १२७ ॥

अड्ढाइज्जदिणंते उवसंते वणदवम्मि जीवगणे । निस्सरियम्मि पएसा ताओ पायं तुमं मोत्तुं ॥ १२८ ॥ जा चेट्ठसि ता थेरत्तणेण परिजुन्नपुन्नसव्वंगो । रुहिराऊरियसंधिट्ठाणो दूरं परिकिलंतो ॥ १२९ ॥ वज्जाहउव्व सेलो धसत्ति धरणीयले तओ पडसि । दाहजराउरदेहो कागसिगालाइभक्खणओ ॥ १३० ॥ तिक्खं वियणमुवगओ तिन्नि य राइंदियाणि जीवित्ता । वाससयमाउयं पालिऊण सुहभावणोवगओ ॥ १३१ ॥ कालं किच्चा इह धारिणीए कुच्छिंसि पुत्तभावेण । उववन्नो ता मेहा ! तुमए एयारिसा वियणा ॥ १३२ ॥ सोढा तिरिएणावि हु अमुणियदुत्तरभवस्सरूवेण । ता अज्ज किमंग सहेसि नेव मुणिदेहसंघट्टं ? ॥ १३३ ॥ सुयपुव्वभवो जाओ जाईसरणो खणेण सो ताहे । दूरुग्गयवेरग्गो हरिसंसुजलाउलच्छो य ॥ १३४ ॥ काउं पयाहिणतिगं वंदित्ता भावओ य भयवंतं । मिच्छादुक्कडपुव्वं भणइ मोत्तु ममच्छिजुगं ॥ १३५ ॥ जं सेसमंगमेयं दिन्नं साहूण तो जहिच्छाए । संघट्टंतु अभिग्गहमिय गिण्हइ सो मुणी मेहो ॥ १३६ ॥ एक्कारस अंगाइं अहिज्जिउं विहियभिक्खुपडिमो सो । गुणरयणवच्छरतवं काउं संलिहियसव्वंगो ॥१३७॥ परिचिंतइ जाव जिणो सवसुहत्थी विहारमायरइ । ता चरमकालकिरिया काउं मे जुज्जए तत्तो ॥१३८॥ आपुच्छइ भगवंतं जह अहयं सामि ! तवविसेसेण । एएणुट्ठाणणिसीयणाइकट्ठेण काहामि ॥ १३९ ॥ तुम्हाणुन्नाए गिरिम्मि विउलनामम्मि रायगिहबाहिं । एयम्मि अणसणविहिं विहेउमिच्छा मम समत्थि ॥ १४० ॥ तो लद्धाणुन्नाओ खामित्ता समणसंघमन्नेहिं । कडजोगीहिं समेओ मुणीहिं सणियं समारुहइ ॥१४१॥ तत्थ गिरिम्मि विसुद्धे सिलायले सयलसल्लविमुक्को । पालियपक्खाणसणो विजयविमाणे समुप्पन्नो ॥ १४२ ॥ तस्स दुवालसवरिसो परियाओ सो तओ चुओ संतो । वासे महाविदेहम्मि सिज्झिही बुज्झिही झत्ति ॥१४३॥

मेहकुमारो नामं सावगसंवेगओ य पव्वज्जा । संकुडवसहीसेज्जा राओ पादादिघट्टणया ॥ २६५ ॥ २ ॥
कम्मोदयसंकेसो गिहिगोरव तीमि तहिं चिंता । गोसे वीराभासण सच्चंति न जुत्तमेयं ते ॥२६६॥३॥
जमिओ उ तइय जम्मे तमासि हत्थी सुमेरुपहनामा । वुड्ढो वणदवदड्ढो सरातित्थे अप्पसलिलम्मि ॥२६७
गयभिन्नो त्रियणाए सत्तदिण मओ पुणो गजो जाओ । मेरुप्पभजूहवईवणदव जातीसर विभासा ॥२६८॥
वासे थंडिलकरणं कालेण वणदवे तहिं ठाणं । अन्नाण वि जीवाणं संवट्टे पायकंडूयणं ॥ २६९ ॥ ६ ॥
तद्देसे ससठाणे अणुकंपाए य पायसंवरणं । तह भवपरित्तकरणं मणुयाउ य ततियदिणपडणं ॥ २७० ॥ ७
एत्थं जम्मो धम्मो तम्मि मयकलेवरे सिगालाई । तह सहणाओ जह गुणो एसोत्ति गओय संवेगं ॥२७१॥८
मिच्छादुक्कडसुद्धं चरणं काउं तहेव पव्वज्जं । विजओववाओ जम्मंतरम्मि तह सिज्झणा चेव ॥२७२॥ ९

अथ संग्रहगाथाक्षरार्थः—राजगृहे नगरे श्रेणिको नाम राजा धारिणी च तद्देवी 'गयसुमिण'त्ति गजस्वप्नस्तया दृष्टः ततस्तृतीये मासे दोहदो मेघविषयः समजायत । ततः 'अभए' इति अभयकुमारेण 'देवाराधनसंपत्ति' देवताराधनेन प्राप्तिस्तस्य कृता । पुत्रजन्म कालेन बभूव ॥ २६४ ॥ १ ॥ मेघकुमारो नाम तस्य कृतम् । श्रावकसंवेगतस्तु श्रावकस्य भगवदन्तिके धर्मं श्रुतवतः सतः प्रथमवेलायामपि यः संवेगो मोक्षाभिलाषलक्षणस्तस्मादेव प्रव्रज्या जातेति ।

'संकुडवसति' द्वारे संकीर्णायां वसतौ द्वारदेशे शय्या संस्तारकभूमिरस्य संजाता ततो रात्रौ पादादिघट्टनया हेतुभूतया २६५॥२

कर्म्मोदयसंक्लेशश्चारित्रमोहोदयात् संक्लेशो मालिन्यरूपो जातः । कथं 'गिहिगोरव'त्ति गृहिणो मम सत एते मे गौरवमकार्षुस्ततो व्रजामि 'तहिं'त्ति गृहे । इति चिन्ता समुत्पन्ना । 'गोसे वीराभासण'त्ति प्रभाते वीरेणाभाषणं कृतं यथा रात्रावित्थं भवांश्चिन्तितवानिति । सत्यमिति प्रतिपन्नं च तेनेति । उक्तं च भगवता न युक्तमेतत्तु इदं पुनस्ते इति ॥२६६॥३॥

यद्यस्मादितस्तु इत एव भवात् तृतीयजन्मनि त्वमासीर्हस्ती सुमेरुप्रभनामा । ततो वृद्धः सन् वनदवदग्धः सरोऽतीर्थेऽल्पसलिलेऽवतीर्ण्णः सन् ॥ २६७ ॥ ४ ॥

गजभिन्नः दशनाभ्यां वेदनया 'सत्त दिण'त्ति सप्तदिनानि यावत् स्थित्वा मृतः । पुनर्गजो हस्ती जातः मेरुप्रभनामा यूथपतिः । 'वणदव'त्ति पुनर्दवे प्रवृत्ते जातिस्मरो जातः । ततो विभाषा विविधार्थभाषणरूपा वक्तव्या, यथा मया पूर्वभवे इतो वनदवाद् मरणं प्राप्तं ततः करोमि प्रतिविधानमिति ॥ २६८ ॥ ५ ॥

वर्षे वर्षाकाले सञ्जाते स्थण्डिलकरणं तृणकाष्ठाद्यपनयनेन कालेन चोष्णकाललक्षणेन वनदवे प्रवृत्ते तत्र स्थण्डिले स्थानं स्थितिः सञ्जाता तस्य । अन्येषामपि जीवानां तत्र स्थानमिति सम्बध्यते। ततः संवर्त्तेऽत्यन्तसम्बाधलक्षणे वर्त्तमाने पादकण्डूयनं निजाङ्गस्य पादेन कण्डूयनमारब्धं भवतेति ॥ २६९ ॥ ६ ॥

तद्देशे पादप्रदेशे शशस्थानं शशकजीवस्थितिर्जाता । अनुकम्पया त्वया पादसंवरणं विहितम् । तथेति समुच्चयार्थो

भिन्नक्रमश्च। ततो भवपरीत्तकरणं संसारतुच्छभावसम्पादनं 'मणुयाउय'त्ति मनुष्यायुश्च निबद्धम्। तृतीये दिने पतनं भूमौ सम्पन्नमिति ॥ २७० ॥ ७ ॥

ततोऽत्र राजगृहे जन्म। धर्म्मश्चारित्रभावलक्षणः। तस्मिन् मृगकलेवरे मृगस्याटव्यजन्तोः सतः, अथवा मृगस्याप्रवुद्धस्य मतो यत् कलेवरं तत्र ये शृगालादयो जीवा भक्षकतया लग्नाः प्राग्भवे, तेषामिति गम्यते, तथासहनतो यथा लग्नाधिसहनाच्चकाराच्छशकानुकम्पया च गुण उपकार एषः प्रव्रज्यालाभलक्षण इत्येतच्छ्रुत्वा गतस्तु गतश्च संवेगम् ॥२७१॥

मिथ्यादुष्कृतशुद्धं 'मिथ्यादुष्कृतं शुद्धं मेऽस्तु' एवंरूपप्रायश्चित्ताद् निर्मलं चरणमन्तश्चारित्रपरिणतिरूपं कृत्वा तथैव प्रव्रज्यां यावज्जीवमेव शुद्धप्रवृत्तिरूपाम्, विजयोपपातो विजयविमानोपपत्तिर्जन्मान्तरे तथा 'सिज्झणा चेव'त्ति सिद्धिश्च सम्पत्स्यत एव ॥ २७२ ॥ ९ ॥

**कंटगखलणातुल्लो इमस्स एसो त्ति थेवपडिबंधो। तत्तो य आभवंपि हु गमणं चिय सिद्धिमग्गेण ॥ २७३ ॥**

कण्टकस्खलनातुल्यो मार्गे प्रवृत्तपथिककण्टकवेधसमोऽस्य मेघमुनेरेष इति चित्तसंक्लेशः। 'कीदृश' इत्याह—स्तोकप्रतिबन्धः परिमितविघ्नकारी। ततश्च प्रतिबन्धाद् उद्वृत्ताद् उत्तरकालं आभवमपि च गमनमेव सिद्धिमार्गेण सम्यग्दर्शनादिरूपेण ॥ २७३ ॥

अथ दहनसुरोदाहरणमभिधित्सुराह;—

पाडलिपुत्त हुयासण जलणसिहा चेव जलणडहणाय। सोहम्मपलियपणगं आमलकप्पाय णट्टत्थे॥२७४॥

पाटलिपुत्रे नगरे 'हुयासण'त्ति हुताशनो नाम ब्राह्मणोऽभवत्। तस्य ज्वलनशिखा चैव जाया समजायत। श्रावके चैते। तयोश्च 'जलणडहणाय'त्ति ज्वलनो दहनश्च पुत्रौ जातौ। तयोश्च कृतप्रव्रज्ययोः 'सोहम्म'त्ति सौधर्मे देवलोके पल्यपञ्चकमायुरजनि। आमलकल्पायां नगर्यामवतीर्णयोर्भगवतो महावीरस्य पुरतो नाट्यार्थं नाट्यनिमित्तं कृतवैक्रिययोर्गणधरेण पृच्छा कृतेति ॥ २७४ ॥

अथैनामेव गाथां गाथाषट्केन भावयन्नाह;—

संघाडग सज्झिलगा कुडुंबगं धम्मघोसगुरुपासे। पव्वइयं कुणाति तवं पवज्जं चेव जहसत्तिं ॥ २७५ ॥ १ ॥
जलणडहणाण णवरं रिजुभावो तत्थ पढमगो सम्मं। बिदिओ पुण मायावी किरियाजुत्तो उ तह चेव २७६
किरियाण अइसंधति इतरं मायाए तग्गयाए उ। एवं पायं कालो संलेहण मो उ सोहम्मे ॥ २७७ ॥ ३ ॥
अब्भिंतरपरिसाए पणपलियाऊ महिड्डिया जाया। आमलकप्पोसरणे णट्टविहिविवज्जओ तेसिं॥२७८॥४॥
एवंविउव्वइस्सं एवं चिय तत्थ होति एक्कस्स। इयरस्स उ विवरीयं जाणगपुच्छा गणहरस्स ॥ २७९ ॥ ५॥
भगवंत कहण मायादोसो किरियागतो उ एसोत्ति। अणुगामिओ य पायं एवं चिय कइत्ति भवगहणे२८०

क्वेत्याह–मंजूषायां तथा पक्षस्य भोजनं पानकं च पुत्रनिमित्तं निरूपितं । तालाश्च तालकानि दत्तानि । ततो मंत्रिणा अर्थं संहर स्वीकुर्विति राज्ञो भणनमकारि । अनिच्छे नृपतौ कथंचिदुपरुध्य तदानयनं मंजूषानयनं राजकुले कृतम् ॥ ३३३ ॥ ४ ॥

उक्तं च–देव इह मंजूषायां सर्वसारं तिष्ठति । राजा–किमनेन सर्वसारेण त्वद्व्यसनपाते सति कार्यम्? मंत्री–तथापि देवपक्षमेकं रक्षयत रक्षां कारयत । ततो राज्ञा द्वारान्यतालशीर्षमुद्रास्तथा 'अट्ठट्ठ'त्ति अष्टौ दिनेऽष्टौ निशि प्राहरिका निरूपिताः ॥ ३३४ ॥ ५ ॥

एवं व्यवस्थापिते त्रयोदशे च दिवसे राज्ञो दुहितुरकस्मादेव वेणिच्छेदो जातः । इत्येतन्मंत्रिसुतात् किलेति जनप्रवादात् स्फुटितं प्रकाशीभूतं रोदने दुहितुः स्वयमेव दृष्टे राज्ञो जितशत्रोर्महाकोपः समजनीति ॥ ३३५ ॥ ६ ॥

भणितं च तेन यथा घातयत तकं मंत्रिसुतमथवा किमनेनैकेन घातितेन सर्वाण्येव मंत्रिमानुषाणि दहत भस्मीकुरुत । येनोन्मत्तकान्येतानि वर्त्तन्त इति । ततः किंकरणमो मंत्रिगृहे । ग्रहणं कुटुंबस्य प्रारब्धं । भण्डना च मंत्रिपरिवारेण सह लग्ना । मंत्रिणोक्तं प्रेक्षामहे तावद्देव? इति ॥ ३३६ ॥ ७ ॥

दृष्टे चात्र राज्ञि मंत्री प्राह–योगाद् मञ्जूषासम्बन्धात् समुद्घाट्येत्यर्थः । तत्त्वं मत्पुत्रकृतोऽन्यकृतो वाऽयमनर्थ इत्येवं-लक्षणं जानीहि समवबुध्यस्व स्वात्मनैव । ततो गतो राजा मञ्जूषोद्घाटनार्थम् । दृष्टायां च तस्यां मुद्रासंवादे उद्घाटने कृते सति निरूपणानि भालना यावत् क्रियते, तावत् क्षुरिकायुक्तया वेण्या समुपलक्षितो मंत्रिसुतो दृष्टः ॥ ३३७ ॥ ८ ॥

साध्वसं भयं तद्दर्शने किमिदमित्थमसंभाव्यं दृश्यते । एवं मीमांसयितुमारब्धे मंत्रिणोक्तं देवो जानाति तत्त्वं योऽस्या
रक्षकत्वेन व्यवस्थित इति । तस्माद् विस्मयस्त्वाश्चर्यं च सर्वेषामहोऽदृष्टाऽश्रुतपूर्वमिदमिति । ततः 'तप्पुच्छ'त्ति मंत्रि-
पृच्छा, पूजना च तस्य राज्ञा कृता । मंत्रिणोक्तं–देव ! सर्वनाशस्ते पुत्राद्भविष्यतीति एतावदेव नैमित्तिकादुपलब्धं
नो वेणिच्छेदादिति ॥ ३३८ ॥ ९ ॥

इतस्त्वेतस्मादेव नैमित्तिकवचनात् किलेत्याप्तप्रवादरूपात् प्रवृत्तोऽत्र पुत्रसंगोपनेऽहं यावत्तावदेतद् नैमित्तिकोक्तं
संवृत्तम् । इतिरर्थपरिसमाप्तौ । अथ निगमयन्नाह–एवमुक्तनीत्याऽचिन्त्यमचिन्त्यसामर्थ्यं कर्म यदित्थं विहितप्रतीकार-
मपि फलाय समुपस्थितम् वीर्यमपि च पराक्रमोऽपि बुद्धिमतोऽचिन्त्य एव य इत्थं समुपस्थितमपि कर्म विफलीकरो-
तीति ॥ ३३९ ॥ १० ॥ समाप्तं ज्ञानगर्भोदाहरणम् ।

आह–"अवश्यमेव हि भोक्तव्यं कृतं कर्म शुभाशुभम् । नाभुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपि" ॥ १ ॥ इति
सर्वलोकप्रवादप्रामाण्यात् कथं तत्कर्म फलदानाभिमुखमप्यदत्तफलमेव निवृत्तमित्याशंक्याह;—

**अणिययसहावमेयं सोवक्कमकम्मुणो सरूवं तु । परिसुद्धाणाजोगो एत्थ खलु होइ सफलो त्ति ॥ ३४० ॥**

इहाध्यवसायवैचित्र्यात् प्रथमतोऽपि जीवा द्विप्रकारं कर्म्म बध्नन्ति । तत्रैकं शिथिलपरिणामतया फलं प्रत्यनियतरू-
पम्, अन्यच्चात्यन्तदृढपरिणामनिबद्धतयाऽवश्यं स्वफलसम्पादकत्वेनावंध्यसामर्थ्यमिति । एवं कर्मणो द्वैविध्ये व्यव-
स्थितेऽनियतस्वभावं फलं प्रत्येतदनन्तरदृष्टान्तनिरूपितम्, सोपक्रमकर्मणः सोपक्रमस्य तत्तद्द्रव्यादिसामग्रीमपेक्ष्य प्रती-

कारसहस्य कर्मणोऽसद्वेद्याद्यशःकीर्त्तिलाभान्तरायादिलक्षणस्य स्वरूपं तु स्वलक्षणं पुनः । यदि नामैवं ततः किमित्याह—परिशुद्धाज्ञायोगो यः प्राक् "परिसुद्धाणाजोगा पाएणं आयचित्तजुत्ताणं । अइघोरंपि हु कम्मं न फलइ तहभावओ चेव ॥ १ ॥" अनेन ग्रन्थेन सर्वकर्मोपक्रमकारणतया सामान्येन निरूपितः सोऽत्रानियतस्वभावे कर्मस्वरूपे, खलुरवधारणे, भवति सफल उपक्रमरूपः स्वफलप्रसाधक इति ॥ ३४० ॥

अथ प्रस्तावादेव कर्मसंज्ञकस्य दैवस्यात्मवीर्यरूपस्य च पुरुषकारस्य समस्कंधतां दर्शयन्नाह;—

**एत्तो उ दोवितुल्ला विण्णेया दिव्वपुरिसकारत्ति । इहरा उ णिप्फलत्तं पावइ णियमेण एक्कस्स ॥ ३४१ ॥**

इतस्त्वित एव कर्म्मोपक्रमाद् द्वावपि तुल्यौ सर्वकार्याणां तदधीनत्वाच्च सदृशसामर्थ्यौ वर्त्तेते दैवपुरुषकारौ । इतिः पूरणार्थः । विपर्यये बाधकमाह—इतरथा त्वतुल्यतायां पुनर्निष्फलत्वमकिंचित्करत्वं प्राप्नोति नियमेनावश्यंभावेनैकस्यानयोर्मध्ये । यदि ह्येकस्यैव कार्यमायत्तं स्यात् तदा द्वितीयस्याकिञ्चित्करत्वेन वन्ध्यासुतादिवद् निष्फलभावेनावस्तुत्वमेव प्रसज्यत इति ॥ ३४१ ॥

अथानयोरेव स्वरूपं व्याचष्टे;—

**दारुयमाईणमिणं पडिमाइसु जोग्गयासमाणत्तं । पच्चक्खादिपसिद्धं विहावियवं बुहजणेण ॥ ३४२ ॥**

दारुकादीनां काष्ठोपलाम्रादीनामिदं दैवं प्रतिमादिषु प्रतिमादेवकुलपाकादिषु चित्ररूपेषु साध्यवस्तुषु योग्यतासमानं

योग्यभावतुल्यमिति । कीदृशं सदित्याह–प्रत्यक्षादिप्रसिद्धं प्रत्यक्षानुमानोपमानादिप्रमाणप्रतिष्ठितं विभावयितव्यं बुधजनेन विपश्चिता लोकेन । तथा हि–यथा दार्वादीनां सूत्रधारादयः प्रत्यक्षत एव विवक्षितं प्रतिमादिफलं प्रति योग्यतां निश्चिन्वन्ति, कृषीवलादयस्तु मुद्गादिषु सामान्येन विवक्षितकार्यं प्रति योग्यतया रूढेषु कुतोऽपि निमित्तात्सम्पन्नसंदेहा अंकुरोद्गमादिभिस्तैस्तैरुपायैः कार्ययोग्यतां समवधारयन्ति एवं दिव्यदृशः साक्षादेव कर्म भाविफलयोग्यं निश्चिन्वन्ति । शेषास्तु तैस्तैः शकुनाद्युपायैरिति इत्युक्तं दैवलक्षणम् ॥ ३४२ ॥

अथ योग्यतयैव भावानां स्वफलोदयो भविष्यति किमन्तर्गडुकल्पेन पुरुषकारेण कल्पितेनेत्याशंक्य पुरुषकारं समर्थयंस्तल्लक्षणमाह;—

**न हि जोगे नियमेणं जायइ पडिमादि णय अजोगत्तं। तल्लक्खणविरहाओ पडिमातुल्लो पुरिसगारो॥३४३॥**

न नैव हि यस्माद् योग्ये दलभावापन्ने दार्वादौ नियमेनावश्यंतया जायते प्रतिमादि, किंतु कस्मिंश्चिदेव पुरुषकारोपगृहीते । न च वक्तव्यं "शक्तयः सर्वभावानां कार्यार्थापत्तिगोचराः" इति वचनात् कार्यानुदये कथं योग्यता समस्तीति ज्ञातुं शक्यत इत्याशंक्याह–नच नैवायोग्यत्वं योग्यतया संभावितानां समस्ति । कुत इत्याह–तल्लक्षणविरहादयोग्यतालक्षणविपर्ययात् । न हि फलानुदयेऽपि व्यवहारिणः कारणमकारणतया व्यपदिशन्ति, भिन्नलक्षणतया योग्यायोग्ययोः रूढत्वात् । यद्येवं शुभाशुभकार्यानुकूलतया स्थिते दैवे किंरूपस्तत्र पुरुषकारः प्रवर्त्तते इत्याशंक्याह–प्रतिमातुल्यः प्रति-

मानिष्पादनक्रियासदृशः पुरुषकारः । यथा हि योग्यमपि दारु न स्वयमेव प्रतिमात्वेन परिणमति, किंतु पुरुषकारादेव
एवं पुरुषकारापेक्षं दैवमपि स्वफलकारणमिति ॥ ३४३ ॥

अत्रैव प्रतिपक्षे वाधामाह;—

**जइ दारुं चिय पडिमं अक्खिवइ तओ य हंत णियमेण।पावइ सव्वत्थ इमा अहवा जोग्गं पजोग्गंति॥३४४॥**

यदि दार्वेव प्रतिमामाक्षिपति साध्यकोटीमानयति, ततश्च तस्मादेव प्रतिमाक्षेपात् 'हंतेति' पूर्ववत्, नियमेन प्राप्नो-
त्यापद्यते सर्वत्र दारुणि इयं प्रतिमा । प्रतिज्ञान्तरमाह–अथवा प्रतिमाऽनाक्षेपे योग्यमपि दारु अयोग्यं स्यादिति ॥३४४॥

नन्वेवमप्यस्तु को दोष इत्याशंक्याह;—

**नय एव लोगणीई जम्हा जोगम्मि जोगववहारो । पडिमाणुप्पत्तीयवि अविगाणेणं ठिओ एत्थ ॥ ३४५ ॥**

नच नैवैवं योग्यस्याप्ययोग्यतया लोकनीतिः शिष्टव्यवहारो दृश्यते, यस्माद्योग्ये योग्यव्यवहारो योग्यमिदमिति
शब्दज्ञानप्रवृत्तिरूपः प्रतिमानुत्पत्तावपि कुतोऽपि हेतोः पुरुषकारवैगुण्येन प्रतिमायामनुत्पन्नायामप्यविगानेन बालाबला-
दिजनाविप्रतिपत्त्या स्थितोऽत्र दारुणि ॥ ३४५ ॥

एवं योग्यं दार्वेव प्रतिमामाक्षिपतीति निरस्तं प्रस्तुते योजयन्नाह;—

**एवं जइ कम्मं चिय चित्तं अक्खिवइ पुरिसगारं तु । णो दाणाइसु पुण्णाइभेय मोऽज्झप्पभेएण ॥ ३४६ ॥**

एवं परोपन्यस्ताऽप्रतिमामिव यदि चेत् कर्मैव दैवसंज्ञितं चित्रं नानारूपमाक्षिपति स्वोपग्रहकारितया सन्निहितं करोति गलगृहीततथाविधकिंकरवत् पुरुषकारमुकरूपं पुनः । तदा नो दानादिषु परलोकफलेषु क्रियाविषेशेषु शुभाशुभरूपेषु पुण्या-दिभेदः पुण्यपापनानात्वं स्यात् । मो पूर्ववत् । अध्यात्मभेदतोऽध्यवसायभेदात् । यदि हि दैवायत्त एव पुरुषकारः क्रि-यासु शुभाशुभरूपासु व्याप्रियते प्रकृतिरेव करोतीति सांख्यमतमास्थितानां, तदा योऽयं दानादिक्रियासु शुभाशुभरूप-कर्ममात्रहेतुकास्वध्यात्मभेदात् पुण्यपापयोरुत्कर्षापकर्षकृतो भेदः सर्वास्तिकसम्मतः स कथं संगच्छते इति । तथाच पठ्यते—"अभिसन्धिः फलं भिन्नमनुष्ठाने समेऽपि हि । परमोऽतः स एवेह वारीव कृषिकर्मणि ॥ १ ॥" इति ॥ ३४६ ॥

पुनरपि परमतमाशंक्य परिहरति;—

**तारिसयं चिय अह तं सुहाणुबंधि अज्झप्पकारिति। पुरिसस्स एरिसत्ते तदुवक्कमणम्मि को दोसो ?॥३४७॥**

तादृशकं विवक्षितभविष्यदध्यवसायसदृशमेव सत् । अथेति परिप्रश्नार्थः। तत्कर्म शुभानुबन्ध्यध्यात्मकारीति । उपलक्ष-णमिदं, ततः शुभानुवंधिनोऽशुभानुवंधिनश्चाध्यात्मस्य मनः—परिणामस्य कारणं वर्त्तत इति । आचार्यः—पुरुषस्येदृशत्वे तथाविधचित्रस्वभावत्वे सति तदुपक्रमणे तस्य कर्मण उपक्रमणं परिकर्म मूलनाशो वा तत्र साध्ये को दोषः सम्पद्यत इति । यथा हि कर्मवादिनः कर्मैव कार्यकारि, पुरुषकारस्तु तदाक्षिप्तत्वाद् न किञ्चिदेव, तथा यदि पुरुषकारवादी ब्रूयाद् एष एव तादृश स्वभावत्वात्कर्मोपक्रमशुभमशुभं वा फलमुपनेष्यतीति न कर्मणा किञ्चित्साध्यमस्तीति तदा को निषेधायकस्तस्य स्यादिति ॥ ३४७ ॥

पुनरप्याशंक्य परिहरति;—

**एत्थ परंपरयाए कम्मंपि हु तारिसंति वत्तवं । एवं पुरिसं चिय एरिसन्तमणिवारियप्पसरं ॥ ३४८ ॥**

अत्र केवलकर्मवादिमते परंपरयाऽनादिसन्तानरूपया 'कम्मं पि हु'त्ति कर्मैव तादृश्यमुत्पत्स्यमानकर्मसदृशमिति वक्तव्यं कर्मवादिना । नहि परंपराकारणानामपि कालव्यवधानेन भविष्यत्कार्येष्वनुकूलतामन्तरेण कदाचित् कार्योत्पत्तिं संभावयंति संत इति । एवं कर्मणीव पुरुषेऽपि पुरुषकारेऽपि परंपरया ईदृशत्वमुत्पत्स्यमानफलसदृशत्वं पुरुषकारवादिना स्थाप्यमानमनिवारितप्रसरं, न्यायस्योभयत्राऽपि समानत्वात् । ततः पुरुषकारादेव समीहितसिद्धिर्भविष्यति, किं कर्मणा कार्यमिति ॥ ३४८ ॥

इत्थं दैवपुरुषकारयोः प्रत्येकपक्षदोषमभिधाय सिद्धान्तमाह;—

**उभयतहाभावो पुण एत्थं णायण्णसम्मओ णवरं । ववहारोवि हु दोण्ह विइय पाहण्णाइनिप्फण्णो ३४९**

उभयतथाभाव उभयोर्दैवपुरुषकारयोस्तथा परस्परानुवर्त्तनेन कार्यकारको भावः स्वभावः पुनरत्र कार्यसिद्धौ न्यायज्ञसम्मतो नीतिज्ञलोकबहुमतः नवरं केवलं वर्त्तत इति प्रथमत एवासौ बुद्धिमतामभ्युपगन्तुं युक्त इति । तथा, व्यवहारो दैवकृतमिदं पुरुषकारकृतमिदमिति विभागेन यः प्रवर्त्तमान उपलभ्यते सोऽपि द्वयोरपि दैवपुरुकारयोरित्येवमुभयतथाभावे सति प्राधान्यादिनिष्पन्नः प्रधानगुणभावनिष्पन्नो वा वर्त्तते ॥ ३४९ ॥

प्रधानगुणमेव भावयन्नाह;—

**जमुदग्गं थेवेणं कम्मं परिणमइ इह पयासेण । तं दइवं विवरीयं तु पुरिसगारो मुणेयव्वो ॥ ३५० ॥**

यदुदग्रमुत्कटरसतया प्राक्समुपार्जितं स्तोकेनापि कालेन परिमितेन कर्म सद्वेद्यादि परिणमति फलप्रदानं प्रति प्रह्वी-भवति, इह जने प्रयासेन राजसेवादिना पुरुषकारेण, तद्दैवं लोके समुद्धुष्यते । विपरीतं तु यदनुदग्रं बहुना प्रयासेन परिणमति पुनस्तत्पुरुषकारो मुणितव्य इति ॥ ३५० ॥

**अहवप्पकम्महेऊ ववसाओ होइ पुरिसगारोत्ति।बहुकम्मणिमित्तो पुण अज्झवसाओ उ दइवोत्ति ॥३५१॥**

अथवेति पक्षान्तरद्योतनार्थः। अल्पं तुच्छं कर्म दैवं पुरुषकारापेक्षया हेतुर्निमित्तं फलसिद्धौ यत्र स तथाविधो व्यवसायः पुरुषप्रयत्नो भवति पुरुषकार इति। बहु प्रभूतं पुरुषकारमाश्रित्य कर्म निमित्तं यत्र स पुनरध्यवसाय इहनञोऽल्पार्थत्वाद-ल्पो व्यवसायः पुनर्दैवमिति । यत्र हि कार्यसिद्धावल्पः कर्मणो भावो बहुश्च पुरुषप्रयासस्तत्कार्यं पुरुषकारसाध्यमुच्यते । यत्र पुनरेतद्विपर्ययस्तत्कर्मकृतमिति । पूर्वगाथायामल्पप्रयाससाहाय्येन फलमुपनयमानं कर्म दैवमुपदिष्टं विपर्ययेण पुरुषकारः, इह तु पुरुषकार एवाल्पकर्मसाहाय्योपेतः पुरुषकारः प्रज्ञप्तो बहुकर्म्मसाहाय्योपगृहीतस्तु स एव पुरुषकारोऽदृष्टमित्यनयोः प्रज्ञापनयोर्भेद इति ॥ ३५१ ॥

अमुमेवार्थमुदाहरणेन साधयन्नाह;—

णायमिहपुण्णसारो विक्कमसारो य दोण्णि वणियसुया।णिहिपरतीरधणागम तह सुहिणो पढमपक्खम्मि
दाणुवभोगा णिहिलाभओ दढं अविगलाउ एक्कस्स। परतीरकिलेसागमलाभाओ एवं बीयस्स ॥३५३॥
रायसवणम्मि पुच्छा णिवेयणं अवितहं दुविण्हंपि । दइवेयरसंजुत्ता पवायविण्णासणा रण्णो ॥३५४॥३॥
एगणिमंतणमविगलसाहणजोगोऽकिलेसओ चेव । भोगोवि य एयस्स उ एवं चिय दइवजोगेण ॥३५५॥
अण्णस्स वच्चओ खलु भोगम्मिवि पुरिसगारभावाओ। रायसुयहारतुट्टणरुयणे तप्पोयणाभोओ ॥३५६॥

इय आसि खिइपइट्ठियनगरं नगतुंगचंगसुरभुवणं । अइगरुयविपक्खमरट्टकुट्टणुप्पन्नपुन्नजसो ॥ १ ॥ पुन्नजसो नाम निवो तत्थासि पिया य तस्स सुहगंगी । सो रायन्नजणोच्चियववसायपरो गमइ कालं ॥ २ ॥ अह तत्थ धणड्ढसुओ पुरम्मि नामेण पुन्नसारोत्ति । बीओ विक्कमसारो विक्कमवणिणो सुओ आसि ॥ ३ ॥ अहिगयकलाकलावा तारुण्णमणण्णसरिसमणुपत्ता । ते दोवि धणाकंखी एवं चिन्ताउरा जाया ॥ ४ ॥ जइ नाम न तारुण्णे पुण्णे पत्तेवि होज्ज लच्छीए। अज्जणमणज्जचरीयस्स तस्स को पोरिसुग्गारो ? ॥ ५ ॥ ताव कुलं ताव जसो ता जणसोहग्गमग्गलं तस्स । जस्स न लच्छी वोच्छेयमेइ दाणाइकिरियासु ॥ ६ ॥ ता एत्तो तह जत्तो कायव्वो जह सिरी समुग्घडइ । पणयजणवंछियत्थाण करणओ कयचमक्कारा ॥ ७ ॥ अणुसरिमो देसंतरमारोहेमो परक्कमगिरिम्मि । नो दुल्लहा भविस्सइ अम्हं जणवल्लहा लच्छी ॥ ८ ॥ कयपत्थाणा जा सत्थसन्निवेसं गया पढमगस्स । समुवट्ठिओ महंतो विहिणो वसओ खणेण निही ॥ ९ ॥ तं गिण्हिऊण

गेहं समागओ तदुचिएसु कज्जेसु । लग्गो बीओ पुण जलहिपारगमणेण लद्धधणो ॥ १० ॥ केत्तियकालाओ तुलाए जीव-
मारोविऊण नियगेहं । पत्तो सोवि य सधणोच्चियासु किरियासु परिलग्गो ॥ ११ ॥ जाओ पुरे पवाओ जह एगो पोढपु-
न्नपब्भारो । संपत्तसयलवंछियलच्छीविच्छड्डुओ सुहिओ ॥ १२ ॥ बीओ पुण दारुणजलहितरणसंजायगरुयधणरिद्धी ।
अइनिद्धबंधुसंबंधबंधुरो भुंजइ भोगे ॥ १३ ॥ ता एएसिं मज्झा पढमो देवेण संजुओ वाढं । अखलियपसरो बीओ वि
संजुओ पुरिसगारेण ॥ १४ ॥ निसुओ रन्ना अइकोउगाओ सद्दाविया सहाए ते । पुट्ठा एस पवाओ किमन्नहा वा तहा-
वत्ति ॥ १५ ॥ भणियं देव ! न वितहो जणप्पवाओ जओ पायं । अइपच्छन्नं पि कयं कज्जं सज्जो वियाणाइ ॥ १६ ॥
सयमेव तओ तेसिं रन्नाविन्नासणा समारद्धा । पढमो एगागि च्चिय निमंतिओ भोयणस्स कए ॥ १७ ॥ भणिया महाण-
सणरा जह अज्ज उ वक्खडो न कायव्वो । एयस्स पुन्नवसजायपत्तमम्हेहिं भोत्तव्वं ॥ १८ ॥ पत्ते भोयणसमए देवीसंपे-
सिओ अह महल्लो । विन्नवइ जहा देवीगिहम्मि तुम्हेहिं भोत्तव्वं ॥ १९ ॥ किं पुण निमित्तमिण्हिं पत्तो जामाउओ निय-
पुराओ । सुओयणाइभेयं पसाहियं भोयणं तस्स ॥ २० ॥ ता देव ! तए सद्धिं सो सोहग्गं लहेइ भुंजंतो । तो भुत्ता
वीसत्था संता तं भोयणं सव्वे ॥ २१ ॥ बीओ य अन्नदियहे निमंतिओ भोयणत्थमह भणिया । सव्वेवि रसवईए पसाहगा
जह लहुं चेव ॥ २२ ॥ सव्वायरेण भोयणमुवट्ठियं कुणह भोयणावसरे । पत्तम्मि आसणेसुं दिन्नेसु उवट्ठिए भत्ते ॥ २३ ॥
तुट्टो रायसुयाए अट्ठारससरसमन्निओ हारो । आमलगथूलमुत्ताहलुब्भडो निन्निमित्तंपि ॥ २४ ॥ सा रुयमाणा दीणाणणा
य पत्ता पिउस्स पासम्मि । भासइ जहा इमो मे हारो पोइज्जउ इण्हिं ॥ २५ ॥ नाहं काहं भोयणमहमन्नह इय पयंपिए

तीए । विक्कमसारमुहं जा पलोयए नरवई ताव ॥ २६ ॥ उज्झियभोयणकज्जेण तेण दत्तक्खणं वहंतेण । नवसुत्ततंतुसज्जो खणेण हारो कओ पउणो ॥ २७ ॥ पच्छा दोवि जहत्थियविहिए तं भोयणं सुहं भुत्ता । परिभावियं निवइणा णूणं सच्चो जणपवाओ ॥ २८ ॥ ( ग्रन्थाग्रं–७००० ) ॥

अथ संग्रहगाथाक्षरार्थः–ज्ञातमुदाहरणमिह दैवपुरुषकारयोर्गुणप्रधानभावे पुण्यसारो विक्रमसारश्च द्वौ वणिक्सुतौ । कथमित्याह—'निहिपरतीरधणागम'त्ति निधिपरतीरधनागमाभ्यां कृत्वा तथा सुखिनावक्लेशक्लेशलभ्यशर्म्मसमन्वितौ संतौ । तत्र प्रथमपक्षे दैवप्राधान्यरूपे–॥ ३५२ ॥ १ ॥

दानोपभोगौ दानं कृपणादीनां भोगो वस्त्रताम्बूलादीनां प्रवृत्तौ निधिलाभतो निधानलाभाद् दृढमतिशयेनाविकलौ तु परिपूर्णावेव एकस्य पुण्यसारस्य । तथा, परतीरक्लेशागमेन लाभात् परतीरात् क्लेशागमेन यो लाभो धनस्य तस्मादेवं पुण्यसारवद् द्वितीयस्य विक्रमसारस्य दानोपभोगौ जातावविकलाविति ॥ ३५३ ॥ २ ॥

अथैतद्वृत्तान्तस्य राजश्रवणे सति पृच्छा तेन कृता । निवेदनमवितथं यथावद् द्वाभ्यामपि कृतम् । ततो दैवेतरसंयुक्ताविति प्रवादविन्यासना तत्परीक्षारूपा राज्ञः समपद्यत ॥ ३५४ ॥ ३ ॥

कथमित्याह–एकं निमंत्रणं पुण्यसारस्य भोजनार्थं स्वगृहे निरूपणमकारि । तत्राविकलसाधनयोगः परिपूर्णभोजनाङ्गयोगोऽक्लेशत एव लीलयैव, भोगोऽपि च भोजनस्यैकस्य पुण्यसारस्यैवाक्लेशादेव व्यापारान्तरस्य तदानीमनुपस्थानात् । दैवयोगेन परिपक्वप्रौढपुण्यसम्बन्धेन ॥ ३५५ ॥ ४ ॥

अन्यस्य विकमसारस्य व्यत्ययः खलु विपर्यास एव विकलभोजनसाधनयोगरूपो जातो भोगेऽपि भोजनस्य । कस्मादित्याह–पुरुषकारभावात्, पुरुषकारमेव भावयति 'रायसुयहारतुट्टणरुयणे' इति राजसुताहारत्रोटने रोदने च तस्यास्तत्प्रोतनातः त्रुटितहारप्रोतनादेव ॥ ३५६ ॥ ५ ॥

इत्थं लौकिकयोर्दैवपुरुषकारयोर्ज्ञातमभिधाय सम्प्रति लोकोत्तरयोस्तदभिधातुमाह;—

**पक्खंतर णायं पुण लोउत्तरियं इमं मुणेयव्वं । पढमंतचक्कवट्टी संगणियलच्छेदणे पयडं ॥ ३५७ ॥**

पक्षान्तरे प्राक्पक्षापेक्षया पक्षविशेषे ज्ञातमुदाहरणं लोकोत्तरिकं लोकोत्तरसमयसिद्धमिदमुपरि भणिष्यमाणं मुणितव्यम् । किमित्याह–प्रथमान्त्यचक्रवर्त्तिनौ भरतब्रह्मदत्तनामानौ । क्व ज्ञातं तावित्याह–सङ्गनिगडच्छेदने विषयाभिष्वङ्गान्दुकत्रोटने प्रकटं जनप्रतीतमेव ॥ ३५७ ॥

अत एवाचार्येण संसूच्य न तद्व्याख्यानादरः कृतः, तथापि स्थानाशून्यार्थं किञ्चिदुच्यते;—

भरहो भारहभूमीसामी सिरिरिसहनंदणो आसि। विकंतविपक्खजओ वज्जियनिरवज्जसामज्जो ॥ १ ॥ नवनिहिवई समग्गलसोहग्गाणं अभग्गमाणाणं । चउसट्ठिसहस्साणं रमणो रंमाण रामाणं ॥ २ ॥ संभंतनमंतमहंतभत्तसामंतसहससीसेहिं । विगलंतकुसुममालेहिं निच्चमच्चिज्जमाणकमो ॥ ३ ॥ छप्पुव्वलक्खपरिभुत्तरज्जलच्छी पवन्नसिंगारो । अहअन्नया समुज्जलफलिहोवलघडियमइरुइरं ॥ ४ ॥ नियतणुसोहासंदंसणत्थमादरिसमंदिरं विसइ । कप्पदुमं व पुप्फियमप्पाणं सो निभालेइ ॥ ५ ॥ जा ताव एगमंगुलिमवगयनियभूसणं नियइ हत्थे । दिट्ठा विणट्ठसोहा मणागमह चिंतए एवं ॥ ६ ॥

णूणं ण निया सोहा देहस्स इमस्स जं गया छाया। जाया झत्ति करंगुलिरेसा नियभूसणविहीणा ॥ ७ ॥ ता पज्जत्तमिमेहिं जणियाए मज्झ देहसोहाए। मोत्तुं कमेण लग्गो ताइं स उदग्गवेरग्गो ॥ ८ ॥ एसा य रायलच्छी पबलानिलदोलियंबुरुहसरिसा। तुच्छा वोच्छेयफला अलाहि इण्हिं ममेईए ॥ ९ ॥ इह सुद्धज्झाणपरो जा वट्टइ ताव संजमट्ठाणं। पढमं पत्तो तत्तो खणेण सो केवली जाओ ॥ १० ॥ संजमठाणेसु असंखलोगमाणेसु जो जिओ पढमं। ( ठाणं ) चिय पावइ सो खणेण परिवुड्ढपरिणामो ॥ ११ ॥ गंतुं संजमसेढीसीसं संपत्तकेवलालोओ। होइ जह भरहचक्की भणियमिणं कप्पभासम्मि ॥ १२ ॥ अह उज्झियगिहिलिंगो विसिट्ठमुणिवेसधारगो होउं। सुरसामिणा सयं चिय संपाडियपयडपरममहो ॥ १३ ॥ सुरनिम्मियपउमोयरनिसन्नओ सो जिणोव्व परिसाए। आढत्तो परिकहिउं धम्मं नवमेहगहिरसरो ॥ १४ ॥ पुव्वाण लक्खमक्खंडमेगमेवं महिं विहरिऊण। अट्ठावयम्मि सिद्धो निद्धूयरओ स भगवंति ॥ १५ ॥

जो एस बंभदत्तो चक्की जम्मंतराइं तस्सेह। निसुणिज्जंति इमाइं नियाणबंधो फलं चेव ॥ १ ॥ सागेयम्मि पुरवरे सावगलोगावतंसओ आसि। चंदावतंसनामा नराहिवो निम्मलनयट्ठो ॥ २ ॥ तस्स सुपवित्तचित्तो पुत्तो मुणिचंदनामगो सो य। निविन्नकामभोगो सागरचंदंतिए दिक्खं ॥ ३ ॥ अइतिक्खं पडिवन्नो विहरंतो तेसु तेसु देसेसु। गुरुचरणमूललीणो अहन्नया भिक्खणट्ठाए ॥ ४ ॥ गामम्मि पविट्ठो विहरिओ य सत्थेण वियडअडवीए। पब्भट्ठो तं तन्हाछुहाकिलंतं नियच्छंति ॥ ५ ॥ चत्तारि गोवपुत्ता तं पइ संजायभत्तिबहुमाणा। पडिजागरंति तद्देसणाए बुद्धाय पवइया ॥ ६ ॥ तत्थ दुवे मोहुदया धम्मदुगंछं करित्तु किंचि मया। सुरलोगम्मि गयाओ दसपुरनयरे जसमईए ॥ ७ ॥ दासीए उप्पन्ना संडि-

लगनामगेण विप्पेण । पुत्ता जमलगरूवा कमेण ते जोव्वणं पत्ता ॥ ८ ॥ अरछेत्तरक्खणट्ठा वणं गया पायवस्स निसि हेट्ठा । वडनामगस्स सुत्ता तत्थेगो कुत्थराहिंतो ॥ ९ ॥ अहिणा निग्गंतूणं डक्को वीओवि तस्स उवलंभं । काउमडंतो तेणेव भक्खिओ तक्खणं फणिणा ॥ १० ॥ तो अकयपडियारा कालिंजरनामगे नगम्मि वरे । जमलत्तेण मिगीए मया समाणा सुया जाया ॥ ११ ॥ पुव्वभवसिणेहाओ पच्चासन्नं चरंतया संता । वाहेणेगसरेणेव घाइया मरणमणुपत्ता ॥ १२ ॥ मयगंगाए तीरे दोवि मरालत्तणेण एगाए । हंसीए उप्पन्ना जमलगभावेण ते तत्तो ॥ १३ ॥ पत्ता जोयणमेगेण मच्छवंधेण पासियावडिया । गिह्वित्तु कंधरं वालिऊण पंचत्तमुवणीया ॥ १४ ॥ वाणारसीपुरीए पाणस्स भूयदिन्ननामस्स । तप्पाडगाहिवइणो पुत्तत्ताए समुप्पन्ना ॥ १५ ॥ अच्चंतणेहणिब्भरचित्ता नामेण चित्तसंभूया । तीए नयरीए संखो नामेण नराहिवो तइया ॥ १६ ॥ नमुई य तस्स सचिवो सो अवराहे तहाविहे जाए । पच्छन्नो वहणट्ठा समप्पिओ भूयदिन्नस्स ॥ १७ ॥ तेणावेस पहाणो त्ति य नो तओ मारणिज्जओ होइ । किंतु रहस्से काउं धरणिज्जो इय विचिंतेउं ॥ १८ ॥ भणिओ जइ मम पुत्ते भूमीहरसंठिए तुमं भद्द ! । पाढेसि जीवियव्वं तुह अत्थि न अन्नहा कहवि ॥ १९ ॥ अवगन्निऊण जाइं कुलं च विज्जाण पारगत्तं च । नियजीवियत्थिणा तक्खणेण सव्वंपि पडिवन्नं ॥ २० ॥ तो भूयदिन्नपुत्ते कलाकलावकुसले करेंतस्स । गच्छंति जाव दिवसा अहन्नया भूयदिन्नेण ॥ २१ ॥ विन्नायं मम पत्ती जह एएणं समं विणट्ठत्ति । चंडालभावसहजेण परिगओ चंडकोवेण ॥ २२ ॥ तं मारिउमाढत्तो अम्हं ओज्झावगोत्ति चित्तम्मि । संभाविऊण पच्छन्नमेव पुत्तेहिं नासविओ ॥ २३ ॥ सो हत्थिणाउरे नरवइस्स सिरिमंसणंकुमारस्स । जाओ मंती नियवुद्धि-

जोगओ सव्वमंतिवरो ॥ २४ ॥ ते य पुण पाणपुत्ता जोव्वणलायन्नरूवमाईहिं । तह नट्टगेयवाइयपमुहेण कलाकलावेण ॥ २५ ॥ जाया जणाण णयरीए माणसाणंदकारिणो बाढं । अह अन्नया महूसवसमए तरुणाण मणहरणे ॥ २६ ॥ चित्ताओ चच्चरीओ पुरमज्झे गिज्झमाणिगा जाया । णच्चंतो तरुणाणं णराण णारीण य समूहो ॥ २७ ॥ ते पाणसुए पमुहे काऊणं चच्चरीविणिक्खंतो । पाणतरुणाण सोऊण वियंभमाणा पुरस्संतो ॥ २८ ॥ पत्ता तग्गीयसरेण मोहिओ सेसचच्चरीलोओ । भत्तचरीओ सव्वो समागओ माहणेहिं ओ ॥ २९ ॥ ईसालुयत्तणाओ रायाणं विन्नवेत्तु जह देव ! एसो चंडालजणो विट्टालइनगरमिणमेवं ॥ ३० ॥ पडिहणिया ते नगरिं पविसंता अन्नया गते काले । केवइए कोमुइसमयसंपयट्टे महे परमे ॥ ३१ ॥ ते भूयदिन्नपुत्ता समंतओ परिगया नियजणेण । कोऊहलतरलमणा विस्सुमरियसासणा संता ॥ ३२ ॥ नयरंतरे पविट्ठा जणपेच्छणगे नियच्छिउं लग्गा । सोउं च चच्चरीओ हरिणा इव गोरिगीयाइं ॥ ३३ ॥ अह वत्थेणं ठइऊण वयणमुग्गाइउं च पारद्धा । मिलिओ य सयललोओ तग्गीयाखित्तओ ज्झत्ति ॥ ३४ ॥ अमयरसनिव्विसेसं केणेदं गिज्जए भणंतेण । जाव निहालियमवलोइया तओ भूयदिन्नसुया ॥ ३५ ॥ हण २ भणिरेहिं तओ माहणलोएहिं घाइयसरीरा । निद्धाडिया पुराओ ठिया तओ वाहिरुज्जाणे ॥ ३६ ॥ धी धी कलाकलावो कुलदोसाओ जहन्नओ जाओ । तो अम्हाण ण मरणं मोत्तूण परा गई अत्थि ॥ ३७ ॥ लग्गा गंतुं दाहिणदिसाए देसंतरं गया दूरं । दिट्ठो गिरी महंतो एगो तत्थारुहंतेहिं ॥ ३८ ॥ एगाए सिलाए तले ओलंबियभुयजुगो विगिट्ठतवो । दिट्ठो महामुणी काउस्सग्गपरिसंठिओ तेहिं ॥ ३९ ॥ सप्पणयं च पणमिओ तेणावि य ज्झाणपरिसमत्तीए । अइमहुरगहीरसरेण सायरं धम्मलाभेण ॥ ४० ॥

आणंदिया य पुत्ता य किंनिमित्तं इहागया तुब्भे । कहिओऽभिप्पाओ जह इमम्मि सेलम्मि मरणकए ॥ ४१ ॥ सबाह-
माओ चंडालजाईओ जं दढं समुव्विग्गा । लद्धावि गुणा दोसीभूया जम्हा इहम्हाणं ॥ ४२ ॥ भणिया मुणिया न भव-
न्तरेवि कल्लाणमप्पघाईण । अत्थि न जुत्तो तम्हा मणोरहो एस तुम्हाण ॥ ४३ ॥ सयलभवदुक्खवाहिविरेयणोसहसमं
जिणिंदमयं । धम्मं कुणह समीहियसिद्धीए कप्परुक्खंव ॥ ४४ ॥ तो मुणिवराओ ताओ मुणिदिक्खा लग्गिओवलद्धा
य । जम्हा ते तेण तया तदुचियभावेण परिकलिया ॥ ४५ ॥ कालक्कमेण जाया गीयत्था छट्ठमाइतवनिरया । अनिय-
यविहारचरियापरायणा गयउरम्मि गया ॥ ४६ ॥ वहिरुज्जाणम्मि ठिया मासक्खवणस्स पारणगदिवसे । संभूओ तत्थ
गओ भिक्खट्ठा नयरमज्झम्मि ॥ ४७ ॥ गेहाणुगेहमिरियासमिओ हिंडंतओ पहापडिओ । सचिवेणेसो दिट्ठो णमुइयणा-
मेण तेण तओ ॥ ४८ ॥ नाओ चंडालसुओ जह सो एसो भएण अजसस्स । नियपुरिसपेसणेणं पच्छन्नं हंतुमारद्धो
॥ ४९ ॥ तवसोसियतणुणो निरवराहचरियस्स हंममाणस्स । कोवाणलो पजलिओ तस्सुज्झियधम्मकज्जस्स ॥ ५० ॥ पढ-
मम्मि पाउसे जहा नहम्मि घणमंडलाइं रेहंति । तह तस्स वयणकुहरा विणिग्गया धूममालाओ ॥ ५१ ॥ उद्दंडा तडि-
दंडा घणेसु जह सव्वओ विसप्पंति । तह तेउलेसदेसा वियंभिया धूममालासु ॥ ५२ ॥ तो पलयकालजलवाहकलिय-
मिव नहयलं विलोयंतो । जाओ संखुद्धमणो सबालवुड्ढो नयरलोओ ॥ ५३ ॥ तो चक्कहरो सिरिमं सणंकुमारो सपरि-
यरो तस्स । उवलद्धवइयरो तप्पसायहेउं समायाओ ॥ ५४ ॥ भालयलमिलियधरणीयलेण पणमेत्तु जोडियकरेण ।
विन्नत्तमणेण जहा खमापहाणा मुणी होंति ॥ ५५ ॥ जइ अप्पदोहएणं केणावि अणज्जचेट्ठिएण तुमं । अवरद्धं तत्तुल्लं

चरियं न जुज्जए काउं ॥ ५६ ॥ जइ नाम विसहरो कहवि कस्स लग्गेज्ज किं पुणो तस्स । भक्खणममूढमणसो घडेज्ज मणुयस्स, इय भणिरे ॥ ५७ ॥ जा न निवम्मि पसीयइ ता चित्तो लद्धवइयरो ज्झत्ति । तस्स समीवमुवगओ भणइ जह उवसमं कुणसु ॥ ५८ ॥ एसो कोवहुयासो निरंकुसो पजलिओ गुणवणाइं । निद्दहइ चंडतावो खणेण सुत्ते जओ भणियं ॥ ५९ ॥ जह वणदवो वणं दवदमस्स जलिओ खणेण निद्दहइ । एवं कसायपरिणओ जीवो तवसंजमं डहइ ॥ ६० ॥ तहा–कोहो कद्दमकोहोव कस्स मो होइ कदवित्थारो । उव्वेपकारणं दारुणाण दुक्खाण मूलखणी ॥ ६१ ॥ एमाइदेसणावारिवाहधाराहिं वरिसिओ संतो । विज्झावियकोहग्गी वेरग्गमुदग्गमह स गओ ॥ ६२ ॥ नमुई अमच्चो वि नराहिवेण बंधाविऊण तम्मूले । आणविओ तेणवि साणुकोसचित्तेण मोयविओ ॥ ६३ ॥ तो दोवि विरागाओ पवन्नपज्जंतकालकरणिज्जा । जा चिट्ठंति नरवई अहन्नया वंदणनिमित्तं ॥ ६४ ॥ पत्तो तयंतिए तेसिं चेव पयपज्जुवासणपरम्मि । तम्मी तक्खणपच्छागएण तस्सित्थिरयणेण ॥ ६५ ॥ संभंतपणामकरेण कहवि पाएसु अग्गकेसेहिं । छुत्तो पमत्तचित्तो संजाओ ज्झत्ति संभूओ ॥ ६६ ॥ जइ अग्गकेसफासो इमीए एयारिसो सुहो मन्ने । सव्वंगसंगसमए कोवि अपुव्वो धुवं होही ॥ ६७ ॥ इय भावंता चित्ते नियाणमेयारिसं कुणइ सहसा । जइ मे तवाणुभावो समत्थि जम्मंतरे होज्जा ॥ ६८ ॥ एयारिसित्थिलाभो वारिज्जंतो वि भाउणा बाढं । कागिणीकज्जे कोडी न फेडिउं तुज्झ जुत्तत्ति ॥ ६९ ॥ तत्तो मुया समाणा जाया सोहम्मदेवलोगम्मि । नलिणीगुम्मविमाणे सोहग्गमहोयही देवा ॥ ७० ॥ कालेण विमाणाओ तओ चुया भारहम्मि इह खित्ते । संभूओ जाओ बंभदत्तनामा जहा चक्की ॥ ७१ ॥ तह पुव्वंचिय कहियं जो पुण चित्तो पुरे पुरा-

णम्मि । सो पुरिमतालनामम्मि इब्भपुत्तो समुप्पन्नो ॥ ७२ ॥ निसुणिय धम्मो भवचारगाओ दूरं विरत्तओ संतो । निक्खंतो संपन्नो खंतो दंतो मुणी पवरो ॥ ७३ ॥ पत्तो कंपिल्लपुरम्मि चक्किणो वंभदत्तनामस्स । जायं जाईसरणं तं पुण इय वइयरवसाओ ॥ ७४ ॥ किल एगया नडेणं विन्नत्तो अज्ज महुयरीगीयं । नामेण नाडगविही देव ! मए नच्चणिज्जोत्ति ॥ ७५ ॥ अइउब्भडेण कुसलेण विहियणाणापयारवेसेण । नियपरियणेण सहिओ पच्छिमदिवसम्मि पारद्धो ॥ ७६ ॥ नच्चेउं हयचित्तो जाओ सो नरवई इमम्मि खणे । सव्वोउयसुरहिपहाणकुसुमनिम्मियमइसुगंधं ॥ ७७ ॥ दासीए उवणीयं एगं सुमहं तयं कुसुमदामं । गंडागारपरिट्ठियमलिमालारावरमणीयं ॥ ७८ ॥ तो तं नट्टस्स विहिं पेच्छंतो कुसुमदामगंधं च । अग्घायंतो जाओ जाइस्सरणो जहा आसि ॥ ७९ ॥ नलिणीगुम्मविमाणे सोहम्मे सुरवरो अहं तत्थ । अणुभूयमिणं सव्वं तक्खणमेवागओ मुच्छं ॥ ८० ॥ सीयलजलेण चंदणरसेण सित्तो समीवलोएण । पुणरागयचेयन्नो नियपुव्वसहोयरस्स तओ ॥ ८१ ॥ अन्नेसणानिमित्तं भणिओ नियहिययनिविसेसत्तं । पत्तो वरधणुमंती गोवायंतेण जणमज्झे ॥ ८२ ॥ नियचरियरहस्सं राउलस्स वंधाहिदारदेसम्मि । एयं सिलोगखंडं पत्तगमुल्लंवियं ताहे ॥ ८३ ॥ यथा—"आश्वदासौ[1] मृगौ[2] हंसौ[3] मातंगावमरौ[4] तथा" । एयस्स उत्तरद्धं जो पूरइ तस्स हं पयच्छामि । अद्धं रज्जस्स लिहावियं चिमं पत्तयं तम्मि ॥ ८४ ॥ रज्जाभिलासुगो अह लोओ तं पूरिउं समाढत्तो । तियचच्चराइसु तहा पढिज्जए पत्तलिहियं तं ॥ ८५ ॥ अह चित्तजीवसाहू विहरंतो जायजाइसरणो सो । कंपिल्लपुरुज्जाणे समागओ संठिओ य तहिं ॥ ८६ ॥ अरहट्टवाहगेणं पढिज्जमाणं सुणेइ पत्तगयं । तो तक्खणेण मुणिणा इमो सिलोगो कओ पुन्नो ॥ ८७ ॥ यथा—"एपा नौ

षष्ठिका जातिरन्योन्याभ्यां वियुक्तयोः" । तं सोच्चा सो लहुमेव रायपासे पढेइ गंतूण । मुच्छाविगरालच्छो झत्ति महीए
निवो पडइ ॥ ८८ ॥ सवणाणंतरमुवलब्भ तस्स वसणं हणेउमारद्धो । तं जाव परियणो भणइ समणओ एयमुवलद्धं
॥ ८९ ॥ उत्तरमद्धं सण्णालाभे राया भणेइ सो कत्थ । उज्जाणे देव ! ममं तो हरिसपरवसो राया ॥ ९० ॥ सवनियरि-
द्धिसहिओ तद्दंसणहेउमागओ जाओ । कमलवणं पिव सूरालोए सवियासमुहकमलो ॥ ९१ ॥ वंदित्ता उवविट्ठो पुट्ठो
वुत्तंतमाइमं सवं । भणिओ तहा जह इमं रज्जं सममेव भुंजामो ॥ ९२ ॥ धम्मस्सविफलमेयं जमेरिसा गरुयरज्जसंपत्ती ।
ता एयभोगकाले न सुंदरा दुक्करा किरिया ॥ ९३ ॥ मुणिणावि मुणियदुविसहभोगपरिणामदुक्खलक्खेण । विहिया विस-
याण विसोवमाण निंदा जहा एए ॥ ९४ ॥ सल्लं कामा विसंकामा कामा आसीविसोवमा । कामे पत्थेमाणा अकामा जंति
दुग्गइं ॥ ९५ ॥ सवं गीयं विलवियं सवं नट्टं विडंबणा । सवे आभरणा भारा सवे कामा दुहावहा ॥ ९६ ॥ इय उवमा-
गब्भेहिं चित्तेहिं तेहिं तेहिं वयणेहिं । चक्की लद्धविरागो मणागमिय जंपिउं लग्गो ॥ ९७ ॥ अहंपि जाणामि जहेह
साहू जं मे तुमं अक्खसि वक्कमेयं । भोगा इमे संगकरा भवंति जे दुज्जया अज्जो अम्हारिसेहिं ॥ ९८ ॥ मुनिः—जइ ता
सि भोए चइउं असत्तो अज्जाइं कम्माइं करेहि रायं ! । धम्मे ठिओ सवपयाणुकंपी जं होहिसी देव इओ विउवी ॥ ९९ ॥
नो तुज्झ भोगे चइऊण बुद्धी गिद्धोसि आरंभपरिग्गहेसु । मुहा कओ एत्तियविप्पलावो गच्छामु रायं आमंतिओ सि
॥ १०० ॥ पंचालरायावि य वंभदत्तो साहुस्स तस्सा वयणं अकाउं । अणुत्तरे भुंजिय कामभोगे अणुत्तरे सो नरए
पविट्ठो ॥ १०१ ॥ चित्तोवि कामेहिं विरत्तकामो उदग्गचारित्ततवो महेसी । अणुत्तरं संजम पालइत्ता अणुत्तरं सिद्धि-

गइं गउत्ति ॥ १०२ ॥ परक्कमं पोढमिहारुहित्ता खणेण कम्माइं निहोडइत्ता । सव्वुत्तमं णाणसिरिं लहित्ता तिन्नो भवं सो भरहो नरिंदो ॥ १०३ ॥ जो एत्थ बीओ पुण वंभदत्तो नियाणओ चिक्कणमज्जणित्ता । मिच्छत्तचारित्तविघाइकम्मं सो तवसो दुक्खपहे पविट्ठो ॥ १०४ ॥ इति ॥ ३५७ ॥

उपसंहरन्नाह;—

**कयमेत्थ पसंगेणं सुद्धाणाजोगतो सदा मतिमं । वट्टेज्ज धम्मठाणे तस्सियरपसाहगत्तेण ॥ ३५८ ॥**

कृतं पर्याप्तमत्राज्ञामाहात्म्यवर्णने प्रस्तुते प्रसङ्गेन दैवपुरुषकारस्वरूपनिरूपणादिना, शुद्धाज्ञायोगादुक्तस्वभावात् सदा सर्वकालं मतिमान् अतिशयबुद्धिधनो वर्त्तेत प्रवृत्तिमान् भवेद् धर्म्मस्थाने सम्यक्त्वादिप्रतिपत्तिलक्षणे । अथ हेतुमाह—तस्य शुद्धाज्ञानुसारिणो धर्म्मानुष्ठानस्य स्वल्पस्यापीतरप्रसाधकत्वेनोत्तरोत्तरदेशविरत्यादिधर्म्मानुष्ठाननिष्पादकत्वेन ॥ ३५८ ॥

एतदेव भावयति;—

**तस्सेसो उ सहावो जमियरमणुवंधई उ नियमेण । दीवोव्व कज्जलं सुणिहिउत्ति कज्जंतरसमत्थं ॥३५९॥**

तस्योक्तलक्षणस्य धर्म्मानुष्ठानस्यैष त्वेष एव वक्ष्यमाणस्वभावलक्षणं यदितरधर्म्मानुष्ठानमनुवध्नाति न केवलं स्वयं भवतीति चकारार्थः, नियमेनाव्यभिचारेण कार्यान्तरसमर्थमित्यत्रापि संवध्यते, ततः कार्यान्तरसमर्थमुत्तरोत्तरसुगतिलाभ-

लक्षणम् । दृष्टान्तमाह–दीप इव प्रदीपवत् कज्जलं प्रतीतरूपमेव, सुनिहितोऽनिवातस्थाननिवेशित इति कृत्वा कार्यान्तरसमर्थं प्रस्तुतप्रकाशमपेक्ष्य यत् कार्यान्तरं तरुणीनयननिर्मलताप्रधानादि तत्सम्पादकमिति । यथा–प्रदीपः सुनिहितोऽवश्यं कार्यान्तरसमर्थं कज्जलमनुबध्नाति तथा प्रस्तुतमनुष्ठानमप्यनुष्ठानान्तरमिति ॥ ३५९ ॥

आज्ञावर्णनोपसंहरणम्

इति समासो मुद्रणसौकर्यायास्मन्मतिकल्पितः प्रथमो विभागः ।

इति श्रीमन्मुक्तिकमलजैनमोहनमालायां पुष्पम् १९.

प्राप्तिस्थानम्–श्रीमन्मुक्तिकमलजैनमोहनज्ञानमन्दिरम्–कोठीपोल–वडोदरा.

॥ २१७ ॥

श्रीमन्मुक्तिकमलजैनमोहनमाला—पुष्पम् २० तमम्.

श्वेतपटपटलप्रधानप्रावचनिकपुरुषप्रवरचतुर्दशशतप्रकरणप्रणायिसुगृहीतनामधेय—श्रीहरिभद्रसूरिप्रणीतः

श्रीमन्मुनिचन्द्रसूरिगुम्फितसुखसम्बोधनी टीकया समलङ्कृतः

# श्रीउपदेशपद-महाग्रन्थः ।

## ( द्वितीयो विभागः ) सचायम्—

श्रीमत्तपागच्छाम्बरनभोमणिश्रीमन्मुक्तिविजय(मूलचंदजी)गणिपुङ्गवपट्टधरसरलतामूर्त्तिसंवेगभावितात्मशान्त-योगिश्रीमद्विजयकमलसूरिपुरन्दरपट्टपूर्वाचलमार्तण्डजैनशासनपरमोपकारकविद्वज्जनमान्याचार्यश्रीमद्विजय-मोहनसूरिवरशिष्य पं० श्रीप्रतापविजयगणिना संशोधितः ।

प्रकाशयित्री—कार्याधिकारि—“शाह लालचन्द नन्दलाल वकील” द्वारा श्रीमन्मुक्तिकमलजैनमोहनमाला ।

वडोदरा—कोठीपोल. ] वीर सं० २४५१ सन १९२५ विक्रम सं० १९८१ प्रतयः १००० [ श्रीनेमिजन्म.

## "प्रकाशकनिवेदन"।

अत्यारसुधी आ माळानां गुंथायेल २२ पुष्पो पैकी श्रीप्रतिमाशतकस्वोपज्ञबृहद्वृत्ति, कर्मग्रन्थचतुष्कसटीक, श्रीविपाकसूत्र टीका—छायायुक्त, रत्नप्रभा नामनी नवीन पद्धतिनी नूतन टीकावाळो अभिधानचिन्तामणि (हैमी) कोश अने—७०० पानानुं दळदार अनेक उपयोगी घटनासह श्रीमहावीरदेव (गुजराती) चरित्र—ए खास उपयुक्तग्रन्थो प्रसिद्ध थवा बद्दल, अमो मगरुर छीए। तथापि, विषयथी श्लोकोथी सर्वरीते आ उपदेशपद ग्रन्थतो विशेष उपयुक्त होइ; वाचक वर्गने अर्पतां घणो प्रमोद थाय छे! हजारो जैन औपदेशिक पुस्तकोना लगभग शिखर जेवा १४५०० प्रमाणना सटीक आ ग्रन्थनी स्वीकाराती जरुरी उपयोगिता, तेमां पण शुद्ध उपदेशकोने तो अवश्य पाठ्य—संग्राह्य—सुवाच्य थवा, एकंदर दरेकने सुलभ प्राप्ति माटे—अमाराउद्धारक, अने ध्रांगध्रानरेश—तेमना प्रधानमंडल तथा भीलोडीया—रामपरादि ठाकोर—राजकुमार विगेरे अनेक जैनजैनेतर भव्यजीवप्रतिबोधक शुद्धोपदेशक, परम कृपालु, पूज्य सद्गुरु जैनाचार्य श्रीमद्विजयमोहनसूरीश्वरजी महाराजनी इच्छा जणायाथी; अने एवण प्रातःस्मरणीय पूज्यश्रीजीनाज सदुपदेशथी (पूर्व भागमां रोशन थयेला नामी उदार गृहस्थोद्वारा) मळेल आर्थिक सहायथी छपाववा प्रबंध थयो।

सं० १९७६ ना मोंघवारीना समयमां मुंबईथी कागल खरीदाइ कलकत्ता प्रेसमां रवाना थया। त्यां कार्य धार्ये वखते मलवा असंभव लागवाथी, वडोदरा प्रबंध करी कागलो त्यां मंगाव्या, अहिंपण तेज असंभव। आखरे दोढेक वर्ष कागलोने अहिं तहिं रेल्वे मुसाफरीनो अंत आव्यो, ने निर्णीत निर्णयसागरमां कार्यारंभ थयो. "म्होटां (श्रेयः) कार्योमां विघ्न होय" हवे अमे निश्चिन्त थइ गे, त्यां एक म्होटी मुश्केलीए चेतवणी आपी! ते आ;—मुंबईथी कलकत्ता—वडोदरा ने फरीथी मुंबइनी मुसाफरी दरम्यान वे रीमनु

(रेल्वेमां) गुम थवुं, थोडा खराबीमां, ए नुकशानी साथे प्रेसमां ५०० नकल छापवानी हती (तेथी तेटलो अडसट्टो व्यवस्थित करेल) परंतु अमारा मित्र. झ. जीवणचंद सा० नी प्रेरणाथी (अमारी जाणबहार) प्रेसे १०००—छापी।

ए रीते करी राखेल अडसट्टानो उथलो थवाथी, संपूर्ण ग्रन्थ खर्चने लगभग पहोंची वळती रकम अर्ध (पहेला भाग)मां समाइ। अर्धथी अधिक शेष (बीजो) भाग न छपाय तो ग्रंथ अधूरो रहे! बीजी बाजु विशेष आवी म्होटी मदद मेळववा प्रयत्न न होवाथी-(छपावीए तोय) खर्चने पहोंची वळवा मुश्केली रहेवानी! पहेलानी किमतथी बीजाना खर्चने पहोंचवा उमेद राखी, कार्य आगल चालु रखाव्युं। परन्तु, (भेटनी मागणी विशेष वेचाणनी ओछी जेथी) अत्यारसुधी वेचाणमां ३००—पण पूरी न गई। उपर मुजब बीजा भागना खर्चने पहोंचवा मुराद पार न पडवाथी, निरुपाये खर्च पूरतुं वेचाण तरफ दोरावुं पडशे। सबब—बीजा भाग माटे आर्थिक मदद किंचित् पण नथी। अस्तु।

छतां आ माळाथी अत्यार सुधीना टुंका समयमां पण आवा उपयुक्त ग्रन्थो प्रसिद्धिमां लाव्याबद्दल, अमोने थतो पूर्ण आल्हाद एज अमारी सिद्धिनुं पगथीयुं!।

श्रीमुक्तिकमल जैनमोहन ज्ञानमंदिर
वीर० २४५१ वि० १९८१ श्रावणमास
बडोदरा

निवेदक—
श्रीमोहनप्रतापी नन्दचरणोपासक
लालचन्द.

नमोनमः श्रीसिद्धार्थपार्थिवकुलनन्दनज्ञातनन्दनवर्द्धमानस्वामिने ।

परमकारुणिकपूज्यपादाचार्यश्रीमद्विजयकमलसूरिवराय नमः ॥

# "वक्तव्यं किञ्चित्" ।

यथास्थितार्हन्मतवस्तुवेदिने । निराकृताऽशेषविपक्षवादिने ॥
विदग्धमध्यस्थनृमूढतारये । नमोस्तु तस्मै हरिभद्रसूरये ॥ १ ॥

सुविदितमेतद्यदुत, संशोधकेन सम्पादकेन प्रकाशकेन वा किमपि संक्षेपेण विस्तरेण वा–ग्रन्थ–ग्रन्थकारादिविषयकस्वानुभवः स्वविचारश्च प्रदर्श्यः ! इत्यनुसृत्यात्रानेकविषयप्रदर्शकस्यास्योपदेशपदमहाग्रन्थस्यानुभवतदुद्भूतविचाराद्याविर्भावनाय (ॐ) ग्रन्थप्राधान्यम्, (ह्रीँ) मुद्रणविषयीकृतेस्मिन् ग्रन्थे प्रसङ्गानुपातिनिवेदनम्–इति द्विधा विभज्य वक्तव्यं प्रस्तूयते—

## (ॐ) ग्रन्थप्राधान्यम् ।

अपि च ग्रन्थस्य निर्मातुः ग्रन्थस्य बाह्याभ्यन्तरस्वरूपस्य च कथनेनालंभविष्णु । आद्यवक्तव्याधिकारे ग्रन्थकारः ग्रन्थकर्तुर्नाम, सत्तासमयः, स्थानम्, जातिः, धर्मः, योग्यता, कृतय इत्यादिपर्यालोच्यम् । तत्र–**ग्रन्थनिर्मातारः ( मूलकाराः );—**

अस्य ग्रन्थस्य प्रणेतारश्च श्रीहरिभद्रसूरय एव प्रभावकपुरुषाः। यद्यपि एतदेवाभिधानभूषिता भूरयः सूरयो बभुवुः, परमेते तु ये याकिनीमहत्तराधर्मसूनुत्वेन विरहाङ्कपदेन च प्रसिद्धीभूताः, येषां च पूज्यपादानाम्—तार्किकशिरोमणिनिस्पृहैकाग्रणीश्रीमुनिचन्द्रसूरिः, जिने-
वादिदेवसूरिः, सार्धत्रिकोटीश्लोकग्रन्थनिर्मातृपरमार्हतकुमारपालभूपालप्रतिबोधककलिकालसर्वज्ञप्रभुश्रीहेमचन्द्रसूरिः, मुनिरत्नसूरिः, प्रभान-
श्वरसूरिः, मलयगिर्याचार्यः, मानदेवसूरिः, अभयदेवसूरिः, दाक्षिण्यचिह्नसूरिः, विजयसिंहसूरिः, लक्ष्मणगणी, मुनिसुन्दरसूरिः, श्रीधर्मसा-
न्दसूरिः, प्रद्युम्नसूरिः, मुनिदेवसूरिः, प्रभाचन्द्रसूरिः, गुणरत्नसूरिः, कुलमण्डनसूरिः, राजशेखरसूरिः, जिनदत्तसूरिः, समयसुन्दरगणी,
मणिभद्रमुनिप्रवरः, रत्नशेखरसूरिः, न्या० वि०—न्यायाचार्यमहोपाध्यायश्रीमद्यशोविजयगणी, उपा० श्रीविनयविजयः, उपा०
गरः, क्षमाकल्याणमुनिः, विजयलक्ष्मीसूरिः, इत्याद्यनेकैः प्रभावकपूर्वसूरिभिः,—

श्रीसिद्धसेन—हरिभद्रमुखाः प्रसिद्धास्ते सूरयो मयि भवन्तु कृतप्रसादाः।
येषां विमृश्य सततं विविधान् निबन्धान् शास्त्रं चिकीर्षति तनुप्रतिभोपि मादृक्॥ १॥
नित्यं श्रीहरिभद्रसूरिगुरवो जीयासुरत्यद्भुतज्ञानश्रीसमलङ्कृताः सुविशदाचारप्रभाभासुराः।
येषां वाक्प्रपया प्रसन्नतरया शीलाम्बुसम्पूर्णया भव्यस्तेऽह न कस्य कस्य विदधे चेतोमलक्षालनम्॥ १॥

---

१ सूरिशक्रान् तद्ग्रन्थान् प्रति चामेयं सम्मानत्वं—पूज्यनिर्मितानेकग्रन्थोपरिकृतटीका–पञ्जिका–टीप्पनकादिभिरेवोररीक्रियते। तथा च;–
'हरिभद्द–सुरि-कयगंथजिणिवक्खाणियनियबुद्धिं। सो मुणिचंदु—"(श्रीवादिदेवसूरिःस्तुतौ)" २ नामसङ्ग्रहे च न चिन्त्य. पौर्वापर्यक्रमप्रमाद.।

मतिर्बौद्धाः शुद्धा प्रभवति कथं साध्य भवतां विचारश्चार्वाकाः प्रचरति कथं चारु चतुरः ।
कुतर्कैः तर्कज्ञाः किमपि स कथं तर्कयति वः सति स्याद्वादाङ्के प्रकटहरिभद्रोक्तवचने ॥ १ ॥
ग्रावग्रन्थिप्रमाथिप्रकटपटुरणत्कारवाग्भारतुष्टप्रेङ्खद्दर्पिष्ठदुष्टप्रमदवशभुजास्फालनोत्तालवालाः ।
यद् दृष्ट्वा मुक्तवन्तः स्वयमतनुमदं वादिनो हारिभद्रं तद्गम्भीरप्रसन्नं न हरति हृदयं भाषितं कस्य जन्तोः ॥ १ ॥

एवंरूपैरनल्पैर्वर्णनस्तुतियुतगद्यपद्यैश्चरित्रप्रभावकत्वाद्यनेकगुणा आविष्चक्रिरे । त एवेति निश्शङ्कम्, तदुल्लेखो यथा—

"जाइणिमयहरियाए रइता एते उ धम्मपुत्तेण हरिभद्दायरिएणं भवविरहं इच्छमाणेणं" ( एतद्ग्रन्थान्ते )

अतोन्यत् किं प्रामाण्याक्षरमार्गणप्रयोजनम् ?

श्रीवीतरागशासनधुराधुरीणतामादधानानां करुणानिरतमानसानां विज्ञातसर्वज्ञागमरहस्यानां निखिलशास्त्रधुराधौरेयताधारिणां ग्रन्थ-शास्त्रप्रणेतॄणां सूरिशेखराणां पूज्यश्रीमद्हरिभद्रसूरीणां सत्तासमयस्तु श्रीवीरादेकादशशताब्दीरूपो विक्रमाद्वा षष्ठशताब्द्यात्मकोऽविसंवादकः, तत्तत्प्रामाणिकप्राचीनपुरुषवचनगोचरत्वादर्वाचीनैरप्यलब्धन्वेषणतःकृतनिश्चिततत्कालत्वाच्च ।

एतत्सूरिप्रमाणेभ्यो लेशतो यथा—१ "पणपन्नदससएहिं हरिसूरी आसि तत्थपुव्वकई"

२ "पूर्वश्रुतव्यवच्छेदकालानन्तरं पञ्चपञ्चाशता वर्षैर्दिवंगतैः श्रीहरिभद्रसूरिभिः"

( कुलमण्डनसूरिः )

---

१ "वीराद्वर्षसहस्रे गते सत्यमित्रे पूर्वव्यवच्छेद" तपागच्छपट्टावल्याम्, इति पूर्वश्रुतव्यवच्छेदकालो वीरभगवतो निर्वाणाद्वर्षसहस्रमाम्नायते ।

३ "पंचसए पणतीए (सीए) विक्कमभूवाउ झत्ति अत्थमिओ। हरिभद्दसूरिसूरो धम्मरओ देउ मुक्खसुहं ॥"

(प्रद्युम्नसूरिः)

एवमन्यैरपि प्रभूतैः प्रामाणिकैः श्रीमत्सत्तासमयः पूर्वोक्तो निराबाधः ।

**स्थान-जाति-धर्माः**—अद्यापि प्रसिद्धिभाजि चित्रकूटपर्वते (चितोडगढ) जितशत्रुराज्ञः पुरोहितत्वमाबिभ्रच्चतुर्दशविद्यानीरनिधि-पारदृश्वन आत्मानं सर्वज्ञमिव निखिलातिशायिविज्ञानसम्पदमभिमन्यमानस्य—"येनाभिहितं नावबुध्येय, अन्तेवासीभूयमवाप्य तस्य सन्तिष्ठेय" इति कृतदुरुद्वहभीषणप्रतिज्ञस्य, **याकिनी**नाममहत्तरावर्त्मान—"चक्किदुगं हरिपणगं"–इति गाथा–अस्खलितकृतश्रवण-प्राघूर्णिकसावधानहृदयनिपुणविमर्शनानवाप्ततदर्थावबोधकस्य, स्वं शिष्यभावेनोररीकर्तुं विनिर्मातुश्च पठितगाथार्थसमर्थनं महत्तरां प्रति कृतविज्ञप्तिकस्य, श्रमणीनामागमार्थविवरणकरणभागवत्यनुज्ञाऽनार्हतां प्रख्यापिकाभ्यो महत्तराभ्यस्तदर्थावगमाय शिष्यभवनरूपस्वप्रति-ज्ञापूरणाय च, निजधर्माचार्य**जिनभट्ट**प्रभूपादानां सन्निधानसेवनार्थं लब्धोपदेशस्यासहमानकालविलम्बस्वीकृतभागवतीदीक्षाकस्य विश्रुत-नामधेयस्य श्री**हरिभद्र**स्य विप्रकुलोत्पन्नत्वेन जातिस्सुविज्ञाता ।

जात्या ब्राह्मणत्वेन **धर्मो**ऽपि कुलपरम्परागतस्तु वैदिक एव । अनन्तरमार्यायाकिनीमहत्तरातो '**गाथाश्रवणं तदर्थानवगमत्वं** इत्या-दिहेतुना–मातुरिव बहुबहूपकारं मन्यमानैर्याकिन्या महत्तराया जैनदर्शनप्रभावकाचार्यजिनभट्टचरणान्तेवासित्वेन पारमेश्वरीं जैनीं तपस्यामङ्गीचक्रे श्री**हरिभद्रा**ऽऽर्यैः ।

**प्रतिभाप्रकर्षः**—पूर्वत एवान्यान्यशास्त्रनिष्णातमतित्वं चतुर्दशविद्यावेद्यत्वं कुशाग्रीयबुद्धित्वमासीत्, "सुवर्णं सुवासश्च" समुपायत्त-

गतिप्रतमात्रस्य पूज्याचार्यस्य—श्रीइन्द्रभूतेरिव स्याद्वादिसिद्धान्तोदधिविगाहने श्रीवीरप्रभुरिव जिनभट्टसूरिनिमित्तमात्रतामशिश्रियत् । यया यथा जिनदर्शनाम्भोधेरप्राप्तपूर्वाणि दृष्टेष्टाविरुद्धसिद्धान्तरत्नानि उपलब्धः स, तथा तथा पूर्वावस्थाव्यतीतदिवसगणमनर्थकममुष्यत । यया तस्य सर्वज्ञतादर्पसरीसृपः किञ्चिज्ज्ञतामार्दवविकस्वरशिरीषपुष्परूपेण परिणमय्येदृशमचिन्त्यमहिमानमवस्थामवापितः, तदुपकारं प्रतिक्षणमविस्मरमाणः याकिनीमहत्तराया—धर्मपुत्रत्वेन स्वं तत्र तत्र प्रत्यपद्यत ।

क्रमेण परिवर्धमानचारित्रसकलगुणत्वेन सकलशास्त्रधुराधौरेयताधारित्वेन अनुविहितसुविहितपूर्वतनमहर्षिचरितत्वेन, प्राप्तसूरिपदार्हतया न गुरुपट्टमलङ्कार । तद्ग्रन्थस्य प्रान्तगाथाटीकायां पूज्यमुनिचन्द्रसूरिवरैस्संदृब्धस्यास्याचार्यस्य संक्षिप्तस्वरूपस्यात्रोल्लेखनैतत्समर्थनायालं । तथाहि,—"याकिनीमहत्तराया याकिनीनामिकायाः श्रुतशीलजलधिवेलायाः प्रवर्त्तिन्याः, रचितानि दृब्धान्येतानि त्वेतानि पुनरुपदेशपदानि, धर्मपुत्रेण धर्मं प्रतीत्य नन्दनेन तदन्तरङ्गधर्मशरीरनिष्पादकत्वात् तस्याः । केन ? इत्याह—हरिभद्राचार्येण—यः किल श्रीचित्रकूटाचलचूलानिवासी प्रथमपर्याय एव स्फुटपठिताष्टव्याकरणः सर्वदर्शनानुयायितर्ककर्कशमतिरत एव मतिमतामग्रगण्यः प्रतिज्ञातपरपठितग्रन्थानवबोधे तच्छिष्यभावः, आवश्यकनिर्युक्तिपरावर्तनाप्रवृत्तयाकिनीमहत्तराश्रयसमीपगमनोपलब्ध 'चक्किदुगं हरिपणगं' इत्यादि गाथासूत्रः निजनिपुणोहापोहयोगेपि कथमपि स्वयमनुपलब्धतदर्थः, तदवगमाय महत्तरोपदेशात् श्री जिनभद्राचार्यपादमूलमुपसर्पन्नन्तरा जिनबिम्बावलोकनसमुत्पन्नानुत्पन्नपूर्वबहलप्रमोदवशात् समुच्चरित—

---

१ "महत्तराया याकिन्या धर्मपुत्रेण चिन्तिता । आचार्यहरिभद्रेण" (दशकालिक—वृत्तौ)

"जाइणिमयहरियाए रइता एते उ धम्मपुत्तेण हरिभद्दायरिएण" (अस्मिन्नेवग्रन्थान्ते)—इत्युल्लेखो बहुत्र दृश्यते ।

वपुरेव तवाचष्टे—इत्यादि श्लोकः, सूरिसमीपोपगतावदातप्रव्रज्यो ज्यायसीं स्वसमयपरसमयकुशलतामवाप्य महत्प्रवचनवात्सल्यमवलम्बमानश्चतुर्दशप्रकरणशतानि चकार, तेन हरिभद्रनाम्नाऽऽचार्येण, कीदृशेन ? इत्याह—"भवविरहं संसारोपरममिच्छतामिलषता।"

(उपदेशपद–१०३९)

एवमादित एवैतेषां—समकालीनवैदिक–बौद्धादिसमस्तभारतीयदर्शनपारदर्शिविद्वद्गणनायां न केवलं लब्धावकाशत्वं किन्तु, निखिललब्धवर्णस्वीकृतसम्मान्याग्रणीत्वम्; समवाप्तस्याद्वादमुद्रादर्शनतत्त्वविच्छिन्नत्वेनाद्ययावन्निखिलेष्वपि विश्रुतेषु कोविदजनेषु मूर्धन्यतां गतत्वं महापुण्योपलब्धयशस्वित्वं च निर्विवादमेव, परमपवित्रामितगुणास्पदामेयमहिमरत्नरत्नाकरदेवगुरुधर्मत्रिपुटीशुद्धकषछेदता-

१ याकिनीमहत्तरायाः प्राप्तसम्बन्धपूर्वमेकदा समयचातुरीमुपयुज्य, चाञ्चल्यमधिश्रयमाणः प्लवङ्गम इव विटपिशिखरान्निजयानादुत्प्लुत्य पुरःस्थितमेकं जिनेश्वरमन्दिरमध्यरुक्षत्, ऊर्ध्वमधिक्षिप्तचक्षुश्च तदलङ्कुर्वतीमार्हतीं मुद्रां कथमपि लोचनगोचरीकृत्य, मदग्रहिलतया परमार्थमनवबुध्य भुवनगुरावपि पद्यमिदमुपहासगर्भसन्दर्भमाविरबीभवत्:—

" वपुरेव तवाचष्टे स्पष्टं मिष्टान्नभोजनम्। नहि कोटरसंस्थेऽग्नौ तरुर्भवति शाड्वलः "

स एवाद्य तया महत्तरया सूरिसमीपगमनसमये प्रागेव पन्थानमन्तरा पतन्तं तीर्थपतिविहारं नीयमानश्च भगवद्बिम्बं मूर्तिमन्तमिव शान्तरसं विभाव्य, विभावितयथास्थितार्थतत्वः पूर्वकृतोपहासपापमिव स्तवनपुण्येन विशोधयितुकामः पूर्ववृत्तं—

"वपुरेव तवाचष्टे भगवन् वीतरागताम्। नहि कोटरसंस्थेऽग्नौ तरुर्भवति शाड्वलः ॥ १ ॥ इतिचमत्कृतिकृता विपर्ययेण पर्यवीवृतत्। अभ्यष्टवीच्च विशेषतः—जंदिट्ठी करुणातरंगियपुडा एयस्स सोमं मुहं आयारो पसमापरो परियरो संतापसन्नासणु। जंतूणां जर–जम्म–मच्चुहरणो देवाहिदेवो इमो देवाणं अवराण दीसइ जओ नेयं सरूवं जए ॥ १ ॥ इत्यादिना पद्यकदम्बकेन निजमान्तरमुद्गारवारमप्रतिबध्नन्। इति ॥

पादिपरीक्षोत्तीर्णपूर्वापराविरोधिगुणविभूषितशाश्वतप्रभावशालित्रिकालाबाधितसूक्ष्मतत्त्वयथार्थस्वरूपलक्षणविभागगुणधर्मपर्यायादिप्रतिपादनाग्रगण्यसनातनश्रीजैनदर्शनरहस्यवेदितत्वात्। स्थास्यति चैवं यावच्चन्द्रदिवाकरौ, अर्वाचीनानां सम्यग्दर्शनादिमुक्तिपथनिश्चलावस्थानाश्रयैकत्वात्तदीयचमत्कृतिपूर्त्तिकृतिप्रत्यक्षत्वाच्च।

तत्रभवतां संस्कृत—प्राकृतभाषाविशारदत्वं, बहुमुखीप्रतिभा, अस्खलत्प्रवाहा कल्पना, वस्तुस्पर्शाभिमुखी तार्किकता, स्पृहणीया दर्शनोपनिषद्वेदिता; प्रकृष्टपरिपाका च गद्यपद्यरचनाचातुरी साक्षात्कर्तुं शक्या प्रतिवाक्यं स्वीयासु कृतिषु।

कृतयः—स्वपरसमयपारावारीणसूरिसङ्कलितग्रन्थपर्यालोचने—कैश्चित्–'चतुर्दशशतानि ग्रन्थानाम्'[1], कैश्चित् चत्वारिंशदधिकानि तानि, अपरैश्च चतुश्चत्वारिंशदुत्तराणि चतुर्दशशतानीति प्रदर्शयाञ्चक्रिरे। भवत्वत्र मतत्रयं, तथापि चतुर्दशग्रन्थशतप्रणीतिविषये कश्चिन्नादः? एतावत्यनन्यसदृक्षमहासङ्ख्याकत्वे प्रभुप्रणीतग्रन्थानां ऐदंयुगीनानां दुर्भाग्यविलसितानामस्मदादीनाम् शोकास्पदत्वं परमप्रमोदास्पदत्वं चावहति, राजापसदाविशदधर्मद्वेषजन्यप्रयोगतः स्वभावोपनतविनाशरूपहेतुत्वादतीवन्यूनसङ्ख्यात्वेनोपलभ्यमानत्वात्तेषां। नामावशेषीभूता क्षुन्नाप्युपलब्धिः तत्वपरिच्छित्तये पर्याप्तवती तत्वामृतपिपासूनाम् इत्यस्माच्च।

भवोदधिपतदेतज्जन्तूद्धारकरणाविश्रान्तोपयोगिनां पूज्यप्रवराणां मत्सद्गुरूणामाचार्यश्री**मद्विजयमोहनसूरि**वर्याणां सदादेशात्, भक्तिवशाश्च, यत्किञ्चित्कृतश्चित्कथञ्चित्प्रभुहरिभद्रसूरिपादानां चरित्रांशमुल्लेख्य अत, ऊर्द्ध्वमुपलभ्यमानमपि यदवशिष्टं तत्सर्वमद्यावधि मुद्रितामुद्रितप्राप्यमाणग्रन्थप्रस्तावनादितः पंडितहरगोविन्ददासेन लिखितचरिततश्च क्रियते प्रेरणावलोकनाय, परमावधिगतां विशदविशारदतादिश्रियं परिचायनार्थं क मतिविकलोहम्। इति।

---

[1] लभ्यालभ्यग्रन्थनामावलीगवेषणान्यत्रकार्या जेनग्रन्थावलीप्रभृतिपुस्तके।

## टीकाकाराः ।

**समय-स्थान-जाति-धर्माः**—अस्य महाग्रन्थस्य प्रस्तुतटीकागुम्फने कृतपरिश्रमास्तु तार्किकशिरोमणिपूज्यप्रवराचार्यश्रीमन्मुनिचन्द्रसूरय एव ( यद्यपि श्रीवर्धमानाचार्येणापि टीकास्यकृताद्यापि लभ्यास्ति सा तु संक्षिप्ता गहना च इदंटीकाकारेण—टीकारम्भे—"पूर्वैर्यद्यपि कलिपता ........................ " इत्युक्तं सैवेयम् वान्या तन्निश्चेयम् ) येषां बृहद्गच्छीयश्रीसर्वदेवसूरिपट्टालङ्कारयोर्यशोभद्र–नेमिचन्द्रसूरिवरयोः पट्टधरत्वेन, पूज्यश्रीयशोभद्रसूरीश्वरस्य शिष्यत्वेन च ख्यापनमस्यैव ग्रन्थस्य टीकाप्रशस्त्यां प्रत्यक्षीभूतम् तदेवम्,—"बृहद्गच्छोऽतुच्छोच्छलितशुभसत्वः समभवत् । ........................................ ॥ १ ॥ ततश्च श्रीयशोभद्रनेमिचन्द्रादयो ........................ ॥ ३ ॥ प्रायस्तत्सर्वसन्तानभक्तिमान् मुनिनायकः । अभूत् श्रीमुनिचन्द्राख्यः ॥ ५ ॥" यैः प्रव्रज्यारतः केवलं सौवीरजलं मुत्कलीकृत्य षड्विकृतेश्च त्यागः कृतोभूत् । वैक्रमीयद्वादशशताब्दीभाज एवेमे मुनिनायकाः, प्रमाणञ्चात्रेदमेव ग्रन्थटीकादि, यथा—"प्रकृता श्रीनागपुरे समर्थिताऽणहिल्लपाटके नगरे । अब्धिमुनिरुद्रसंख्ये ( ११७४ ) वर्द्दमाने विक्रमे वर्षे ॥ ६ ॥ वि० ११५९–वर्षे–आवश्यक ( पाक्षिक ) सप्ततिः स्वबृहद्गुरुभ्रातृचन्द्रप्रभसूरिप्रतिबोधाय[1] निर्मितायप्रत्यक्षास्ति । मूलका-

[1] अत्रायं सम्प्रदायः—एकदा श्रीधराभिधश्रावकेण निजद्रव्यभूरिव्ययेन जिनबिम्बप्रतिष्ठार्थं श्रीचन्द्रप्रभसूरिनामा स्वबृहद्गुरुभ्राता निमन्त्रितो, यथा–भगवन् ! अस्मिन्महामहे पूज्यमुनिचन्द्राचार्यप्रेषणेन ( तत्कालीनेषु क्रियाप्रवीणत्वात्तस्य ) कृतार्थीकृतास्मो वयम् । श्रुत्वैतदसूयया जातविपरिणामत्वेन स्वकमानहानिं मन्यमानेन तेनाचार्येण "साधूनां प्रतिष्ठादिकरणमनानुपङ्क्तिकम्" इति प्ररूप्य पाक्षिकप्रतिक्रमणं पूर्णिमायां कर्तव्यमिति स्वभद्रारादेवतादेशव्याजेन स्वशिष्याणाम् नूतनप्ररूपणा " श्रावकैःप्रतिष्ठाकाराप्या पूर्णिमायां पाक्षिकप्रतिक्रमणञ्चेति " कृता । ततः श्रीवीरनिर्वाणादेकोनत्रिंशदधिकषोडशशतात्मके–वि० एकोनषष्ट्यधिकैकादशशतात्मके वर्षे पौर्णमीयकगच्छोत्पत्तिर्जाता । तत्प्रतिबोधनार्थमिदङ्ग्रन्थरचना ।

रचरितमिव तत्रभवतां चरित्रं किञ्चित्कचित्कुतश्चिदपि नोपलब्धं । समाश्वसनरूपे केवले "श्रीमुनिचन्द्राचार्यस्तुतिः—गुरुविरह-विलापः" इत्यभिधाने द्वे स्तुती समुपलभ्येते यद्यपि लघू; तथापि श्रीवादिदेवसूरिकर्तृकत्वेन सम्पूर्णाधारभूते प्रामाणिके च । ततो, जन्मस्थान—गुरुनाम—स्वर्गमनसमयादि यदुपलब्धं तदेवम्—

"तं जयउ चितयकुलं जयम्मि........... । ...........जम्मि तुमं तमहरो जाओ ॥ २६ ॥ ..............सा महग्घिया........ । मोत्तियमणिव्व जीए तं फुरिउ उयरसिप्पिउडे ॥ २७ ॥ सा दब्भनयरीनयरसेहरत्तं सया समुव्वहउ । जीए तुह—पुरिससेहर ! जम्मदिणमहामहो जाओ ॥ २८ ॥ जसभद्दो सो सूरी.............. । चिंतामणिव्व जेणं उवलद्धो नाह तं सीसो ॥ २९ ॥ तथा—"सम सा कसिणच्चिय कत्तियमासस्स पंचमी कसिणा । खेत्तंतरं व सूरो जीए तं सग्गमल्लीणो ॥ ३९ ॥ एगारस अट्ठुत्तर संवच्छर काल ! पडउ तुह कालो.......... ॥ ४० ॥"

इत्यादिना—स्पष्टतरं जन्मस्थानादि ज्ञायत, विशेपार्थिना स्तुत्यवलोक्या । यदितोधिकं तदनन्तरं वक्ष्यते—

कृतयः—कुलकप्रभृतिस्वतन्त्रग्रन्थरचनात्वेन अन्यकृतग्रन्थोपरि—टीका—विवरणचूर्णिटीप्पनकादित्वेन चानल्पाः कृतयो दृश्यन्ते श्रूयन्ते च । ताश्चेमाः—(१) वनस्पतिसप्ततिः, (२) अङ्गुलसप्ततिः, (३) आवश्यक (पाक्षिक) सप्ततिः (४) कालशतकम्, (५) गाथाकोशः, (६) अनुशासनाङ्कुशकुलकम्, (७) उपदेशामृतकुलकम्, (८) उपदेशामृतकुलकं द्वितीयम्, (९) उपदेशपञ्चाशिका, (१०) धर्मोपदेशकुलकं (११) धर्मोपदेशकुलकं द्वितीयम्, (१२) प्राभातिकस्तुतिः, (१३) मोक्षोपदेशपञ्चाशत् (क), (१४) रत्नत्रयकुलकम् (१५) शोकहरउपदेशकुलकम्, (१६) सम्यक्त्वोत्पादविधिः, (१७) सामान्यगुणोपदेशकुलकम्, (१८) हितोपदेशकुलकम्, (१९) रसा-

प्रबन्ध—आज्ञाग्राह्यानां ज्ञानादिलाभप्राप्त्यभावत्वम् । धर्मबीज—वैयावृत्य—अष्टप्रवचनमातृ—पञ्चमहाव्रत—अणुव्रत—रात्रिभोजनविरमण-
व्रत—देवद्रव्यभक्षकरक्षकफलादि—असद्ग्रहत्व—गुरुकुलवास—मुमुक्षूणां निरभिग्रहत्वेन क्षणमपि न स्थेयं, यतनाप्रभृत्यनेकप्रबन्धस्वरूपम् ।

तथा साम्प्रतीनानां चारित्रादिधर्माभाववादीनां सयौक्तिकत्वेन सिद्धान्तमर्यादया खण्डीकरणं, पञ्चमारकपर्यन्तधर्मावस्थितिरचलेति
प्रदर्शनम् ।

पाखण्डबहुले करालकलिकालेपि गीतार्थाद्याज्ञायोगिनां स्थैर्यावस्थानबोधस्तद्विधिश्च । पञ्चमकालभावप्रदर्शकस्वप्नाष्टकविवरणम्—सूत्रादि-
दानदायक—ग्राहकस्वरूपयुता **व्याख्यान**विधिरिति ।

विशेषतो तज्ज्ञस्यर्थं समीपस्था मत्कृता विषयसूचीरवलोकनीया । अन्यच्च बहुभिः पूर्वपुरुषैर्मेधाविभिर्जैनाचार्यैस्स्वस्वनिर्मितग्रन्था-
दिषु तत्तद्विषयपोषणाय साक्षीतयोद्धृतानि एतद्ग्रन्थवाक्यानि यावदपूर्वग्रन्थशतग्रथनप्रभाववितीर्णन्यायाचार्यपदधारककाशीविबुध-
विजयावाप्तन्यायविशारदोपाधिभिर्महामहोपाध्यायैः श्रीमद्यशोविजयगणिभिस्स्वसन्दृब्धपरःशतग्रन्थेष्वनेकत्रास्य ग्रन्थस्य प्रामाण्यार्थमुल्ले-
खेन न पर्याप्तं किन्तु—अयमेव ग्रन्थो नवनीतरूपपिण्डीकृत्य स्वोपज्ञवृत्यलङ्कृत **उपदेशरहस्या**भिधानेन सङ्कलितो (मुद्रितो) दृश्यते ।

अस्मादितरत्किं प्रामाण्यमार्गणमस्य वैशिष्ट्ये ? ।



उलो-[ प्राकृतात्मकः ], (२०) तीर्थमालास्तवः । टीकादि—(२१) ललितविस्तरापञ्जिका, (२२) अनेकान्तजयपताकाटीप्पनकम्, (२३) देवेन्द्रनरकेन्द्रप्रकरणवृत्तिः, (२४) धर्मबिन्दुविवृत्तिः, (२५) योगबिन्दुवृत्तिः, (२६) कर्मप्रकृतिविशेषवृत्तिः [ टीप्पनं ], (२७) सार्धशतकचूर्णिः, (२८) उपदेशपद–सुखसम्बोधनीवृत्तिः । श्रीउदयप्रभसूरिकृतप्रवचनसारोद्धारविषमपदपर्यायस्य संशोधकत्वमप्येतेषां तत्तद्ग्रन्थान्ते । अन्या अपि भवेयुश्चेत्केन निवारयितुं शक्यं तत्सम्भावनाविषयम् ।

**प्रतिभा**—साम्प्रतं समुपलभ्यमानाभिरनन्तरोक्ताभिरनेकाभिः कृतिभिरेव तत्रभवताम् सूरिपुरन्दराणां संस्कृतप्राकृतभाषाधीनत्वं, द्रव्यानुयोग–गणितानुयोगादिषु पारङ्गतत्वं, सकलतन्त्रशास्त्रपारा-व्याकरण–साहित्य–न्याय–चरणकरणानुयोगधर्मकथानुयोगेष्वेवञ्च दार्शनिकवैदुष्ये संशयल-वारपारीणत्वञ्च, जनैर्गीयमानं तार्किकशिरोमणित्वं, निस्पृहावधित्वं, त्यागित्वञ्चानुभूयतेऽत एवासाधारणे वस्यापि क्वावकाशः ।

अणहिल्लपुरे जातजैनतत्वाभिरुचेःसिद्धराजनृपस्य कोविदालङ्कृतपर्षदि परमतवादिनोनेके पराभूता यैर्यैश्च तत्रैव दिगम्बरमतचक्र-वर्तिकुमुदचन्द्रोपि चतुरशीतिवादैः पराभूय, तन्नगरतत्पदप्रवेशाभावः कारितः, यैर्भूरिजिनबिम्बप्रतिष्ठा कृता, बहुविद्वन्मुनिभ्य आचार्यपदं समर्पितं । ते श्रीजैनशासनानवद्योन्नतिकारका वादिबिरुदधारिश्रीअजितदेवसूरिस्वनामप्रख्यापकाः श्रीमत्पट्टं विभूषितवन्तः ।

अपरञ्च—यैः प्रमाणनयतत्वलोकालङ्कारामिधतर्कग्रन्थं निर्माय, स्वोपज्ञ ८४००० चतुरशीतिसहस्रपरिमितया स्याद्वादरत्नाकरनाम्न्या टीकया विभूष्यानेकानेकमतवादिवदनपिधानं कृतमद्ययावत्तथैव भूयते; ते प्रभुवादिदेवसूरयोपि श्रीमच्छिष्यत्वेन प्रतीत एव ।

---

१ संदेहास्पद टीकाकर्तृकत्वेन । २ श्रीवादिदेवसूरिभिः पराभूतइत्यप्यन्यत्र ।

एतादृशाः सर्वगुणसम्पन्नसकलदर्शनपारावारीणतार्किकशिरोमणितपोमूर्तिप्रभृतिगुणवन्तो मूलकर्तृत्वेन—टीकाकर्तृत्वेन चैव ग्रन्थवैशिष्ट्यमविसंवादमेव ।

## २—ग्रन्थस्य बाह्याभ्यन्तरस्वरूपम् ।

१—बहिरङ्गम्—मूलम्—उपदेशपदनामकम्, प्राकृतं आर्यापद्यमयम्, एकोनचत्वारिंशदधिकसहस्रसङ्ख्याकगाथाप्रमितम् । टीका च सुखसम्बोधनी नामधेया, संस्कृतगद्यमयी भूयोभूयः सविस्तरप्राकृतसंस्कृतभाषाबद्धसुमनोहरपद्यगद्यरूपकथानकपूर्णा, प्रायश्चतुर्दशसहस्रपरिमिता ।

२—अन्तरङ्गम्—विषयश्चास्य चतुर्ष्वनुयोगेषु प्रधानतया धर्मकथानुयोगात्मकोऽवबोध्यः, अनेकधौपदेशिकत्वस्य तु ग्रन्थावलोकनं प्रतिभूः ।

"क्रोधादिकलुषकषायकरालपातालभीषणे जन्मजरामरणनीरपूरपूरिते महामोहावर्तगर्त्तपतितानन्तजन्तुसन्तानसंङ्कटे नानाविधाधिव्याधिव्याबाधासहस्रक्रूरजलचराकुलेऽनर्वाक्परपारसंसारपारावारे" [ इति श्रीनवतत्वभाष्यवृत्त्युक्तस्वरूप ]संसारे—सुदुर्लभमज्ञानप्रमाददोषप्रभवप्रतिपातेन, सुदीर्घैकेन्द्रियादिकायस्थित्यवगुण्ठितसंसारचक्रवालपरिभ्रमणान्तरिततया समयप्रसिद्धैश्चोल्लकपाशकादिदृष्टान्तैरतिदुरापादपुनरुत्पत्तिकं धर्मश्रवणादिसामग्र्युपहितं विपुलपुण्यप्राग्भारलभ्यं प्रकृतितनुकषायत्वादिगुणसमाजेनावाप्य नरभवं, सर्वज्ञभाषिते तपश्चरणाद्यनुष्ठाने धर्मे, संसेव्यगुरुकुलवासं परिज्ञायप्रवचनानुयोगं सूत्राज्ञानतिक्रमेण विधेयो यथाशक्त्युद्यमो धर्मपरीक्षादक्षैरिति विभाव्य, मनुष्यभवदुर्लभतात आरभ्य मोक्षपर्यवसानफलस्य सम्पूर्णोपदेशः प्रपञ्चितो यद्यप्यनतिसङ्क्षेपेण परहिताधाननिबिड-

निबद्धबुद्धिभगवन्मूलकारैस्तथापि, जिनवचनपीयूषपानकरणप्रयतमानमानसानां सङ्क्षिप्तरुचीनां भविकानां तथाविधवस्तुतत्वावबोधोत्पादकत्वेन परमोपकारित्वम् । ग्रन्थनिर्माणप्रयोजनं महत्वं तु टीकाकारैरेवेत्येवं निरूपितम्—
"……………………………… ………….उपदेशपदानि विना न सम्यग्दर्शनादिपरिपूर्णमोक्षमार्गावतारसारा भवितुमर्हन्ति, कथञ्चित्तत्रावतीर्णा अप्यनादिकालविलग्नविलीनवासनासन्तानविषवेगावेशवशेनक्षोभ्यमानमनसो न स्थैर्यमवलम्बितुमलं इत्यादि विभाव्यैव"।
"तत्वामृतोदधिनामानन्दितसकलविबुधहृदयानाम् । उपदेशपदानाम्…………………… ॥" इत्यादि ।

टीकाकारमहात्ममिरपि मूलकारमहाशयाशयानुलङ्घ्य तदाविष्करणे स्वप्रतिभया विषयविवेचना सङ्कोचाभावेनाकारि । कृता च तत्र तत्र कथापूर्तिः आमूलमुपदेशात्मकतत्वाववोधगर्भितसरसप्राकृतसंस्कृतगद्यपद्यमयमृदुभाषाशब्दादिरचनायुक्ता । अत एव मन्दमतिकारतस्तीव्रबुद्धिकान्तानां सुग्राह्यत्वं स्फुटम् । किमत्र विततया ? सम्पूर्णसंविज्ञानाय ग्रन्थावग्राहं प्रति कृत्वा प्रेर्यत्वमपि सविशेषसादरकरणार्थं प्रविलोक्य तत्तन्मुख्यविषयनामोद्धृतिरेवार्हा,—

उपदेशश्रवणयोग्यतायां मनुष्यत्वादिसामग्रीप्रधानाङ्गमिति मनुष्यजन्मादिदौर्लभ्याख्यानम् । धर्मप्रवृत्युपदेश उपदेशदानपात्रं सूत्रदानविधिश्च । ( ४४ पत्रपर्यन्तम् )

उपदेशोपि बुद्धिसत्ताधारभूतोऽत औत्पत्तिक्यादिबुद्धिविवरणं भूरिदृष्टान्तमयम् ( १०० पत्रात्मकम् )

आज्ञापूर्विकाप्रवृत्तिः फलवतीति सविस्तरमाग्रन्थसमाप्तेः सयुक्तिकं वर्णनमतीवोपयोगि दृष्टफलञ्च । अन्तरान्तरा पञ्चकारणवादसमाधानपूर्वकं स्वसमयस्य स्याद्वादवादित्वस्थापनम् । तत्रापि दैवपुरुषकारयोः सोदाहरणपुरस्सरमुपवर्णितमनतिसङ्क्षिप्ततया ।

दुःषम–आज्ञायाम्यानां ज्ञानादिलाभप्राप्त्यभावत्वम् । धर्मबीज–वैयावृत्य–अष्टप्रवचनमातृ–पञ्चमहाव्रत–अणुव्रत–रात्रिभोजनविरमण-व्रत–देवद्रव्यभक्षकरक्षकफलादि–असद्ग्रहत्व–गुरुकुलवास–मुमुक्षूणां निरभिग्रहत्वेन क्षणमपि न स्थेयं, यतनाप्रभृत्यनेकप्रबन्धस्वरूपम् ।

तथा साम्प्रतीनाना चारित्रादिधर्माभाववादीना सयौक्तिकत्वेन सिद्धान्तमर्यादया खण्डीकरणं, पञ्चमारकपर्यन्तधर्मावस्थितिरचलेति प्रदर्शनम् ।

पाखण्डबहुले करालकलिकालेपि गीतार्थाद्याज्ञायोगिनां स्थैर्यावस्थानबोधस्तद्विधिश्च । पञ्चमकालभावप्रदर्शकस्वप्नाष्टकविवरणम्–सूत्रादि-दानदायक–ग्राहकस्वरूपयुता **व्याख्यान**विधिरिति ।

विशेषतो तज्ज्ञस्यर्थं समीपस्था मत्कृता विषयसूचीरवलोकनीया । अन्यच्च वहुभिः पूर्वपुरुषैर्मेधाविभिर्जैनाचार्यैस्स्वस्वनिर्मितग्रन्था-दिपु तत्तद्विपयपोपणाय साक्षीतयोद्धृतानि एतद्ग्रन्थवाक्यानि यावदपूर्वग्रन्थशतप्रथनप्रभावावितीर्णन्यायाचार्यपदधारककाशीविबुध-विजयावाप्तन्यायविशारदोपाधिभिर्महामहोपाध्यायैः श्रीमद्यशोविजयगणिभिस्स्वसन्दृब्धपरःशतग्रन्थेष्वनेकत्रास्य ग्रन्थस्य प्रामाण्यार्थमुल्ले-खेन न पर्याप्तं किन्तु–अयमेव ग्रन्थो नवनीतरूपपिण्डीकृत्य स्वोपज्ञवृत्त्यलङ्कृत **उपदेशरहस्या**भिधानेन सङ्कलितो (मुद्रितो) दृश्यते ।

अस्मादितरत्किं प्रामाण्यमार्गणमस्य वैशिष्ट्ये ? ।



माहशाय क्षुद्रजन्तवे सम्यग्दर्शनादिरत्नत्रयी

लोकनेन समीकुर्वन्तु! इत्याशास्य, प्रतिस्थानं प्रतिक्षणं मत्प्रमादादिदोषमार्जनदत्तोपयोगिनां माद्दशाय क्षुद्रजन्तवे सम्यग्दर्शनादिरत्नत्रयी-दायकानां—गजारोहकारकानां ममाधारैकत्वभाजां पूज्याचार्यवर्यसद्गुरूणां मात्र संसर्योपकारितामभिवादयेऽहम् ।

तथा नैसर्गिककुलजविनयवैय्यावृत्यादिसद्गुणभाक्प्रकर्षप्रज्ञस्वीकृतलघुवयःप्रव्रज्याव्याकरण—साहित्य—सिद्धान्तावगाहकमुनिश्रीधर्मविजयस्य, प्रतिज्ञापालनधीरमुनिश्रीभरतविजयस्य च साहाय्यकत्वमपि लब्धावसरमनुमोदनार्हम् ।

सिद्धान्तश्रवणोत्सुकपरमात्मप्रणीतमार्गानुगामि गुरुवचनायत्तीभूत 'वकील' नन्दलाल तनुजनुषो विनयविवेकमार्दवादिगुणयुतस्य मालाकार्याधिकारिणः श्रीलालचन्दस्य स्वीयं—'वी—ए'—इति कक्षाभ्यासव्यापृतत्वमप्येतत्कर्मणि सदा निस्पृहतया ज्ञानभक्त्यर्थं क्रियमाणप्रयासकत्वाद्धन्यवादार्हत्वमेवं मुद्रणकृतार्थिकसाहाय्यकानाञ्च न विसरेयम् ।

पर्याप्तमतिप्रसङ्गेन । एतद्ग्रन्थोद्गतभावार्थजगतीतलमनन्तसमयमभिव्याप्नोतु । बोधिलाभशुद्धिभाजो भूत्वा समनुभवन्तु भव्या भाविभाव्या अचलं मोक्षसुखम् ।

इत्यावेदयति

श्रीस्तम्भतीर्थम्. वीर० २४५१
वि० १९८१ श्रावण कृष्णाष्टमी

आराध्यपाद—विद्वदवतंस—व्याख्यानकोविदाचार्य—

श्रीमद्विजयमोहनसूरीश्वर—प्रतापः

ॐ

# श्रीउपदेशपदमहाग्रन्थस्यानतिविस्तृतविषयानुक्रमः ।



## ( ह्रीँ ) मुद्रणविषयीकृतेस्मिन्ग्रन्थे-प्रसङ्गानुपातिनिवेदनम् ।

समाददतु ! समर्प्यमाणः करकमले एष-१९-२० तमपुष्परूपो ग्रन्थः सान्वर्थाभिधानः सदुपदेशकोपदेशपदमहाग्रन्थः श्रीमदार्हत्-तत्वसमुपदिदर्शयिषवो वाचंयमाः ! प्राग्निवेदिताय पूर्वभागप्रदानेनानर्घगुणरत्नाकराय श्रीश्रमणसङ्घभट्टारकाय श्रीमन्मुक्तिकमलजैनमोहनमालाकार्यवाहकैः ।

अद्यावधि मुद्राप्याविष्कृतेषु २२-पुष्पेष्वयं चाक्षुल्लकविद्वदुपकृतयेऽलम्भविष्णुरुपयुक्ततमत्वादेतच्च प्रादुर्भविष्यत्यवाप्तविविधबोधानां बुधानां चेतसि विलोकनादेतस्याः प्रतिपादितायाः प्रयोजनव्रातप्रतिपादनपराया ग्रन्थकृच्छिरोमणीनां वदनकजनिसृतायाः गाथायाः पङ्क्तेश्च । तत्त्वनन्तरमेवोक्तम् ।

जैनोपदेशिकसकलग्रन्थेषु प्रधानत्वमादधानस्य प्रायः प्रस्तुतसटीकग्रन्थस्य शुद्धोपदेशकत्वादिप्रवरमुनिवर्यादीनां सर्वदा सर्वोपयोगित्वादपि, हस्तलिखितादर्शस्य दौर्लभ्यत्वाल्लेखकादिसाधनाभावाच्च, वर्तमानमुद्रणयन्त्रद्वारा प्रकटीकरणमेव सौकर्याय भावी । अस्तु । कथमपि निखिलाऽऽबुधजनोपयोगी करणीय एवायं ! इत्यत्रायासायोपदिष्टवन्तो ज्ञानान्धकारपर्यटदसज्ज्ञानांशुप्रदानसदोदितदिनकराः श्रीसिद्धक्षेत्र-पादलिप्तपुरपवित्रितजन्मानो भरयौवननिर्जितकामकन्दर्पसस्त्रीकगृहीतपारमेश्वरीप्रव्रज्या ध्रांगध्रानरेशसचिवादिप्रकृतिमण्डल-भीलोडीयारामपुराद्यन्यान्यानेकग्रामठकुरराजकुमारादिक्षत्रियप्रभृतिजैनजैनेतरभव्यजीवप्रतिबोधकत्वादिनार्हतधर्माभ्युदयाय शासनद्रोहिपाखण्डिकृतनिष्ठुरोपसर्गपरीसहादिसहमानशासनोन्नतिकारकाः" पूर्ववर्णितपूज्यप्रभुश्री**हरिभद्रसूरि**-कलिकालसर्वज्ञश्री**हेमचन्द्रा**-

चार्य—न्यायचार्य—न्या० वि० उपाध्याय श्रीमद्यशोविजयपुङ्गवादिमहर्षिप्रणीतग्रन्थावगाहका, एवञ्च दयानिधिवीतरागदेवाक्षयज्ञानकोशस्यविश्वे विनियोक्तुकामा असद्गुरवः पूज्याचार्यश्रीमद्विजयमोहनसूरीश्वराः । प्रलब्धतदनुज्ञया जातेप्यन्वेषणे केवलानि प्राक्तनानि त्रीणि चत्वारि प्रत्यन्तराणि—

[ १—जगद्विभूषणशासनसम्राट्—स्वपरसमयपारावारपारीणतपागच्छनभोदिनमणिप्रतप्तप्रबलपुण्यप्रभावपरमपूज्यपरमोपकारिप्रातस्स्मरणीयभट्टारकाचार्यमहाराजाधिराजश्रीमद्विजयनेमिसूरीश्वरपादानामेका नातिशुद्धा ।

२—अन्योपकारिकरणार्पितजीवननवज्ञाननिधिसागरगभीरानेकधाज्ञानवितरणप्रवर्तकाचार्यश्रीमत्सागरानन्दसूरिवराणामेकाऽशुद्धप्राया ।

३—शान्त्यादिगुणविभूषितश्रीविजयमेघसूरिसत्का शुद्धप्राया ।

४—विनयनिस्पृहत्वादिगुणयुतश्रीभक्तिविजयविनेयमुनियशोविजयतश्शुद्धप्राया । परमुपकृतमत्र कृतपुस्तकसाहाय्येनैतदर्थमभिनन्द्यते सर्वान् । ]

समुपलभ्य मुद्रणसाधीयसीसाधनतायै संशोधनपूर्वकादर्शकरणादिना संस्कार्यं सञ्जातं संशोधने यद्यप्यायासबाहुल्यं लब्धेष्वादर्शपुस्तकान्तरेष्वशुद्धप्रायत्वात्कुत्रचिद्यत्र तत्र मूलगाथायास्त्रुटिप्रभृति विकलत्वात्तथापि, टीकामुखेभ्यस्तत्तद्विषयोपजीव्य, ग्रन्थाकाराशयानुसृत्य ( ) इति चिन्हाङ्कितं प्रक्षिप्य; सम्बधमेलनं कृतं । चेद्भाति व्यस्तत्वं, संशोध्य संसूचयन्तु धीधनाः ! मुद्रणान्वीक्षणशोधनादिभिः कृते हि यत्ने, क्वचिच्च प्रमादभ्रान्त्यादिपुरुषदोषवशात्पतितं स्खलितं वा स्यात्तत्तु गुणदोषविवेकविचक्षणा विद्वांसः सादराव-

लोकनेन समीकुर्वन्तु ! इत्याशास्य, प्रतिस्थानं प्रतिक्षणं मत्प्रमादादिदोषमार्जनदत्तोपयोगिनां मादृशाय क्षुद्रजन्तवे सम्यग्दर्शनादिरत्नत्रयीदायकानां—गजारोहकारकानां ममाधारैकत्वभाजां पूज्याचार्यवर्यसद्गुरूणां मात्रं संस्मर्योपकारितामभिवादयेऽहम् ।

तथा नैसर्गिककुलजविनयवैय्यावृत्यादिसद्गुणभाक्प्रकर्षप्रज्ञस्वीकृतलघुवयःप्रव्रज्याव्याकरण—साहित्य—सिद्धान्तावगाहकमुनिश्रीधर्मविजयस्य, प्रतिज्ञापालनधीरमुनिश्रीभरतविजयस्य च साहाय्यकत्वमपि लब्धावसरमनुमोदनार्हम् ।

सिद्धान्तश्रवणोत्सुकपरमात्मप्रणीतमार्गानुगामि गुरुवचनायत्तीभूत 'वकील' नन्दलाल तनुजनुपो विनयविवेकमार्दवादिगुणयुतस्य मालाकार्याधिकारिणः श्रीलालचन्द्रस्य स्वीयं—'वी—ए'—इति कक्षाभ्यासव्यापृतत्वमप्येतत्कर्मणि सदा निस्पृहतया ज्ञानभक्त्यर्थं क्रियमाणप्रयासकत्वाद्धन्यवादार्हत्वमेवं मुद्रणकृतार्थिकसाहाय्यकानाञ्च न विस्मरेयम् ।

पर्याप्तमतिप्रसङ्गेन । एतद्ग्रन्थोद्गतभावार्थजगतीतलमनन्तसमयमभिव्याप्नोतु । बोधिलाभशुद्धिभाजो भूत्वा समनुभवन्तु भव्या भाविभाव्या अचलं मोक्षसुखम् ।

श्रीस्तम्भतीर्थम्. वीर० २४५१<br>वि० १९८१ श्रावण कृष्णाष्टमी

इत्यावेदयति

आराध्यपाद—विद्वदवतंस—व्याख्यानकोविदाचार्य—

श्रीमद्विजयमोहनसूरीश्वर—प्रतापः

ॐ

# श्रीउपदेशपदमहाग्रन्थस्यानतिविस्तृतविषयानुक्रमः ।



नं. ४

ग्रन्थसमाप्तिः

# एतत् संस्थाया अद्ययावत् प्राकाश्यं नीतानि पुस्तकानि ।

| | मूल्यम् |
|---|---|
| †१ अनित्यादि भावनास्वरूप .... .... | |
| २ श्रीजिनेन्द्रस्तवादिगुण मोहनमाला (द्वि० आ०) | ०—६—० |
| *३ गुजरातनुं गौरव याने विमलमंत्रीनोविजय | |
| *४ श्री देवगुरुवंदनादि विधिसंग्रह | |
| *५ श्री सुबोधपाठसंग्रह | |
| ६ श्री पोसहविधि ( द्वि० आ० ) .... | ०—३—० |
| †७ श्री प्रतिमा शतकम् ( सटीकम् ) .... | २—०—० |
| *८ श्री कर्मग्रन्थवृत्तिः ( प्रथमोविभागः ) | |
| †९ श्री मार्गपरिशुद्धिः ( संस्कृत ) .... | ०—६—० |
| *१० श्री विपाकसूत्रम् (सटीकम् छायासहितश्च) | ०—१२—० |
| *११ श्री मुक्तिमार्गदर्शन याने धर्मप्राप्तिनाहेतुओ | |
| *१२ श्री सुरप्रियचरित्र ( भाषांतर .... | |

† आ निशानी वाळा शिल्लकमांजुअछे। *आ निशानी वाळा शिल्लकमां नथी.

| | मूल्यम् |
|---|---|
| १३—१४—१५प्रतिमास्थापनन्यायः, परमज्योतिः पंचविंशतिका, परमात्मपंचविंशतिका, | ०—३—० |
| *१६ श्री चउमासी तथा दीवालीदेववंदन .... | |
| †१७ श्री ज्ञानसारसूत्र तथा धनपालकविकृत श्रावकविधि.... .... .... | |
| *१८ श्री देववंदन माला .... .... | ०—१२—० |
| १९ उपदेशपदसटीकः प्रथमोविभागः .... | ३—८—० |
| २० उपदेशपदसटीको द्वितीयो विभागः (पूर्ण) | |
| २१ श्री अभिधान चिन्तामणि कोशः (सटीकः) | १—८—० |
| *२२ श्री महावीरस्वामिचरित्र .... .... | १—०—० |

## प्राप्तिस्थानम्

१ शाह लालचन्द नंदलाल वकील. ठे. कोठीपोळ—वडोदरा.

२ मास्तर कुंवरजी दामजी ठे. बुद्धिसिंहजी जैनशाला—पालीताणा.

## श्रीमद् देवेन्द्रसूरिसन्दृब्धं श्री वैराग्यकुलकम् ।

जम्मजरामरणजले नाणाविहिवाहिजलयराइन्ने । भवसायरे असारे दुलहो खलु माणुसो जम्मो ॥ १ ॥

तम्मिवि आयरियखित्तं जाइ कुलरूवसंपयाउय । चिंतामणिसारित्थो दुलहो धम्मो य जिणभणिओ ॥ २ ॥

भवकोडिसएहिं परिहिंडिऊण सुविसुद्धपुन्नजोएण । इत्तियमित्ता संपइ सामग्गी पाविया जीव! ॥ ३ ॥

रूवमसासयमेयं विज्जुलयाचंचलं जए जीयं । संझाणुरागसरिसं खणरमणीयं च तारुन्नम् ॥ ४ ॥

गयकन्नचंचलाओ लच्छीओ तियसचाउसारिच्छं–विसयसुहं जीवाणं वुझसु रे जीव! मा मुज्झ ॥ ५ ॥

किंपाकफलसमाणा विसयहालाहलोवमा पावा । मुहमुहरत्तणसारा परिणामे दारुणसहावा ॥ ६ ॥

भुत्ता दिव्वभोगा सुरेसु असुरेसु तहय मणुएसु । न य जीव! तुझ तित्ती जलणस्सव कट्ठनियरेहिं ॥ ७ ॥

जह संझाएसउणाण संगमो जह पहे य पहियाणं । सयणाणं संजोगो तहेव खणभंगुरो जीव! ॥ ८ ॥

पियमाइभाइभइणीभज्जापुत्तत्तणेवि सव्वेवि । सत्ता अणंतवारं जाया सव्वेसिं जीवाणं ॥ ९ ॥

ता तेसिं पडिबंधं उवरिं मा तं करेसु रे जीव! । पडिबंधं कुणमाणो इहयं चिय दुक्खिओ भमिसि ॥ १० ॥

जाया तरुणी आभरणवज्जिया पाढिओ न मे तणओ । धूया नो परिणीया भइणी नो भत्तुणो गमिया ॥ ११ ॥

थोवो विहवो संपइ वट्टई य रिणं वहुयओ गेहे । एवं चिंतासंतावदुमिओ दुःखमणुहवसि ॥ १२ ॥

काऊणवि पावाइं जो अत्थो संचिओ तए जीव । सो तेसिं सयणाणं सवेसिं होइ उवओगी ॥ १३ ॥
जं पुण असुहं कम्मं इक्कुचिय जीव तं समणुहवसि । न य ते सयणा सरणं कुगइए गच्छमाणस्स ॥ १४ ॥
कोहेणं माणेणं मायालोभेहिं रागदोसेहिं । भवरंगओ सुइरं नडुव नच्चाविओ तंसि ॥ १५ ॥
पंचेहिं इंदिएहिं मणवयकाएहिं दुट्ठजोगेहिं । बहुसो दारुणरूवं दुक्खं पत्तं तए जीव! ॥ १६ ॥
ता एअन्नाऊणं संसारसायरं तुमं जीव! । सयलसुहकारणम्मि जिणधम्मे आयरं कुणसु ॥ १७ ॥
जाव न इंदियहाणी जाव न जररक्खसी परिप्फुरइ । जाव न रोगवियारो जाव न मच्चु समुल्लियइ ॥ १८ ॥
जह गेहम्मि पलित्ते कूवं खणियं न सक्कई कोवि । तह संपत्ते मरणे धम्मो कह कीरए जीव ॥ १९ ॥
पत्तम्मि मरणसमए डज्झसि सोअग्गिणा तुमं जीव! । वग्गुरपडिओव मओ संवट्टमिउ जहवि पक्खी ॥ २० ॥
ता जीव! संपयं चिय जिणधम्मे उज्जमं तुमं कुणसु । मा चिन्तामणि सम्मं मणुयत्तं निप्फलं णेसु ॥ २१ ॥
ता मा कुणसु कसाए इंदियवसगोय मा तुमं होसु । देविंदसाहुमहियं सिवसुक्खं जेण पावहिसि ॥ २२ ॥

॥ इति वैराग्यकुलकं समासम् ॥



अथ शुद्धाज्ञायोगस्यैव माहात्म्यमुपचिन्वन्नाह;—

**एत्तो उ दिट्ठिसुद्धी गंभीरा जोगसंगहेसुंति । भणिया लोइयदिट्ठंतओ तहा पुव्वसूरीहिं ॥ ३६० ॥**

इतस्त्वित एव शुद्धाज्ञायोगपूर्वकानुष्ठानस्य सानुबन्धत्वाद्धेतोर्दृष्टिशुद्धिः सम्यग्दर्शननिर्मलता गंभीरानुद्घाटमहानिधानमिव मध्याविर्भूताद्भुतविशेषा योगसंग्रहेषु योगस्य साधुजनानुष्ठानस्य संग्रहाः संग्राहकाः सिद्धान्तालापकास्तेषु द्वात्रिंशत्संख्येषु "आलोयणा निरवलावे आवईसु दढधम्मया" इत्यादिश्लोकपञ्चकोक्तेषु, इतिः पदपरिसमाप्तौ, भणिता लौकिकदृष्टान्ततः, तथेति तत्प्रकारात् पूर्वसूरिभिः सुधर्मस्वामिप्रभृतिभिः ॥ ३६० ॥

तमेव दृष्टान्तं संगृह्णन्नाह;—

**साएयम्मि महबलो विमल पहा चेव चित्तपरिकम्मे । णिप्फत्ति छट्ठमासे भूमीकम्मस्स करणं च॥३६१॥**

साकेते नगरे 'महबल'त्ति महाबलो नाम राजाऽजनि । 'विमल'त्ति विमलनामा 'पहा चेव'त्ति प्रभाकरश्चैवचित्रकरावभूताम् । ताभ्यां च चित्रपरिकर्म्मणि प्रारब्धे निष्पत्तिरेकेन षष्ठमासे दर्शिता । द्वितीयेन तु भूमीकर्मणः करणं चेति ॥ ३६१ ॥

इमामेव गाथां व्याचक्षाणो दूयेत्यादिगाथापंचकं किञ्चिदधिकमाह;—

**दूयापुच्छण रण्णो किं मज्झं णत्थि देव ! चित्तसभा । आदेसो निम्मवणा पहाणचित्तगरबहुमाणो३६२॥१**

अण्णोण्णभित्तिजवणिगकिरिया छम्मासओ उ एगेण। णिम्मवणं अन्नेणं भूमीकम्मं सुपरिसुद्धं ॥३६३॥२
रायापुच्छण मेगो णिम्मवियं बीय भूमिकरणम्मि। आहूसुगणिवदंसण चित्ते तोसो उचियपूजा ॥३६४॥३
जवणीविक्खेवेणं तस्संकम रम्म रायपासणया। किं वेयारसि ण हु देव! संकमो जवणिगा णो उ ॥३६५॥४
रण्णो विम्हय तोसो पुच्छा एवं तु चित्तविहि सम्मं। भावण वण्णगसुद्धी थिर वूड्ढि विवज्जओ इहरा॥३६६॥५

साएयं नाम पुरं विसायमायामयाइमुक्कजणं। राया तत्थ महाबलनामा चउरंगबलकलिओ ॥१॥ मंथिज्जमाणजलनिहिसलिलसमुप्पन्नफेणफाराए। कित्तीए धवलियजओ कयपणयजणामलफलाए ॥ २ ॥ संसिद्धरज्जकज्जो सहागओ अन्नया भणइ दूयं। जं अन्नेसिं निवईणमत्थि तं मज्झ किं नत्थि ॥ ३ ॥ (दूतः—)सव्वाणि रज्जचिंधाणि देव! तव संति किंचिदधिकाणि। परमत्थि न चित्तसभा जहन्नराईण तह तुब्भं ॥ ४ ॥ विमलपहाकरनामा चित्तकरा सेणिणायगा दोन्नि। सद्दाविया निवइणा गरुयममरिसं वहंतेण ॥ ५ ॥ भणिया एयसभाए जह चित्तं लहु पसिज्झए कुणह। तह तुब्भे सव्वायरसारा जणचित्तचोरंति ॥ ६ ॥ एवंति मन्निए गरुयरायसम्माणभायणीभूया। तक्कालोवट्ठियसयलचित्तपाउग्गसुइदव्वा ॥ ७ ॥ विहिया दुहा सभा सा मज्झम्मि य जवणिया घणा ठविया। मा कोइ अइसयं पेच्छिऊण कस्सावि चोरेज्जा ॥ ८ ॥ आढत्ता चित्तेउं सपरियणा तं सहं कयपइन्ना। विमलेण छट्ठमासे विचित्तचित्ता इमा विहिया ॥ ९ ॥ तो रन्ना कोउगपरिगएण जुगवं दुवेवि परिपुट्ठा। हंहो! तुब्भं चित्तं केत्तियमेत्तं विणिप्फन्नं? ॥ १० ॥ विन्नत्तो विमलेणं जह

चित्तं मज्झ अविकलं जायं । णियदिट्ठिपयाणेणाणुग्गहमेत्तो खणं कुणह ॥ ११ ॥ वीएण पुण पयंपियमेगावि मए न निम्मिया रेहा । चित्तपरिकम्मजोगा भूमिच्चिय केवला रइया ॥ १२ ॥ दिट्ठो सहाविभागो रन्ना विमलेण चित्तिओ तोसो । तो तस्स समुप्पन्नो कयाय पूया समुचियत्ति ॥ १३ ॥ विक्खिविऊणं जवणियमियरसहाभागमिह पलोइंति । जा नरनाहो चित्तियभित्तिविभागस्स संकमओ ॥ १४ ॥ तत्तो रम्मसरूवा सा भित्ती ज्झत्ति निवइणा दिट्ठा । चित्तयरवयणविहडणमभिसंकंतो लहु विलक्खो ॥ १५ ॥ जाओ निवो पयंपइ अम्हे वियारिया किमेवं ते ? । ण हु देव ! संकमातो चित्तस्स इमेरिसं जायं ॥ १६ ॥ संकासंकुलियमणोवि तं जवणियमवणियं जहा कुणइ । ता पेच्छइ भित्तिं चिय निवई ससिनिम्मलालोयं ॥ १७ ॥ विप्फुरियविम्हयमुहो पुच्छइ राया तए न किं विहियं । चित्तं एत्तियकालो जं लग्गो भूमिमेत्तम्मि ? ॥ १८ ॥ देव ! न भूमिविसुद्धिं विणेह चित्तं कयंपि रमणिज्जं । ओभावइ वन्नगा जं थिरत्तसुद्धीओ न लहंति ॥ १९ ॥ अहो चित्तगरसिरोमणी इमो अत्थि एरिसो अन्नो । भणिओ अच्छउ एसा इमंपि चित्तं इमं होही ॥ २० ॥ संकमवसाउ अहियं निभालणिज्जं जओ कुरूवंपि । मुहमादरिसस्स तले अहियं सोहं समुव्वहइ ॥ २१ ॥ सक्कारो अइगरुओ तह विहिओ जह स जावजीवंपि । नियवंधुलोयसहिओ परमं सुहिभावमणुपत्तो ॥ २२ ॥

अथोल्लिंगितगाथाक्षरार्थ;—

'दूयापुच्छण'त्ति दूतस्य पृच्छा समभूद् राज्ञो महावलस्य, यथा किं वस्तु मम नास्ति ? स आह–देव ! चित्रसभा नास्ति । तदनन्तरमेव द्वयोश्चित्रकरयोरादेशो दत्तः 'णिम्मवण'त्ति निर्मापना विषयः। तदन्वेव प्रधानचित्रकरवहुमानः प्रवृत्तः२६२।१

‘अन्नोन्नभित्तिजवणिगकिरिया’ इति अन्योऽन्यं परस्परभित्त्योश्चित्रयितुमारब्धयोर्जवनिकाक्रिया विहिता मध्ये काण्डपटस्थापनेनादर्शनं कृतमित्यर्थः। ततः षण्मासतस्तु षण्णां मासानां पर्यन्ते एवैकेन विमलनाम्ना चित्रकारेण निर्म्मापणं चित्रस्य कृतम्। अन्येन प्रभाकरनाम्ना भूमीकर्मचित्रभूमिकानिष्पत्तिरूपं सुपरिशुद्धमिति ॥ ३६३ ॥ २ ॥

राजप्रच्छनमभूत्। एको विमलनामा निर्म्मापितं चित्रमिति, द्वितीयस्तु भूमिकर्मेति आह ब्रूते। तत उत्सुकस्य नृपस्य दर्शनं समजनि। चित्रे भित्तिगते तोषो राज्ञः। उचितपूजा कृता विमलस्येति ॥ ३६४ ॥ ३ ॥

ततो जवनिकाविक्षेपेण काण्डपटापसारेण तत्संक्रमेण द्वितीयभित्तिगतचित्रसंक्रमेण रम्यस्यातिशायिनश्चित्रस्य राज्ञो दर्शनमकारि। जातवैलक्ष्यश्च नृपतिराह–किमस्मान् विप्रतारयसि वंचयसि? प्रभाकरः नहु नैव देव! विप्रतारयामि। यतः संक्रमो द्वितीयभित्तिगत एषः। ततो जवनिका दत्ता। नो तु नैव संक्रमो वृत्तः ॥ ३६५ ॥ ४ ॥

राज्ञो विस्मयतोषौ सम्पन्नौ। तथा, पृच्छा कृता, किमेवं भवता भूमिकाशुद्धिरारब्धेति। भणितं च तेनैवं त्वनेनैव विधिना भूमिकाशुद्धिलक्षणेन चित्रविधिः सम्यक् सम्पद्यते। कुतः। यतः, भावना सजीवत्वलक्षणा, वर्णकशुद्धिः कृष्णनीलादिवर्णकानां स्वरूपोत्कर्षरूपा तथा ‘थिरवुड्ढि’त्ति स्थिरत्वं वृद्धिश्च स्फारीभवनरूपा सम्पद्यत इति। विपर्ययो व्यत्यासो भावनादीनां इतरथा भूमिकामालिन्ये सति सम्पद्यत इति। ततः साधुरिति कृत्वा महापूजा कृता भणितं चास्तां भित्तिरियमित्थमेव भवति ॥ ३६६ ॥ ५ ॥

इत्थं दृष्टान्तमभिधाय दार्ष्टान्तिकयोजनामाह;—

भूमिशुद्धिचित्रकरोदाहरण०

(तुल्लाए किरियाए अभव्व-दूरभव्वमाइजीवाणं । धम्मट्ठाणविसुद्धी एमेव हवेइ इट्ठफला ॥ ३६७ ॥)

तुल्यायामेव क्रियायां चैत्यवन्दनास्वाध्यायसाधूपासनादिरूपायामभव्यदूरभव्यासन्नभव्यादिभेदभाजां जीवानां धर्मस्थानविशुद्धिर्विधीयमानधर्मविशेषनिर्मलता एवमेव चित्रकर्मवत्, भूमिकाशुद्धौ शुद्धबोधिलाभलक्षणायां सत्यामित्यर्थः, भवतीष्टफला निष्कलंककल्याणलाभप्रयोजना, अन्यथा तद्विपर्यय एवेति ॥ ३६७ ॥

एतदेव परमतसंवादेनाह;—

अज्झप्पमूलबद्धं इत्तोणुट्ठाणमो सयं विंति । तुच्छमलतुल्लमएणं अण्णेवज्झप्प सत्थण्णू ॥ ३६८ ॥

इहाध्यात्मलक्षणमित्थमवसेयं—"औचित्याद् वृत्तयुक्तश्च वचनात् तत्त्वचिन्तनम् । मैत्र्यादिभावसंयुक्तमध्यात्मं तद्विदो विदुः ॥ १ ॥" इति । ततोऽध्यात्ममेव मूलं तेन बद्धमायत्तीकृतमध्यात्ममूलबद्धम्, अतो भूमिकाशुद्धावेवानुष्ठानस्येष्टफलत्वाद्धेतोर्यदनुष्ठानं परमार्थतस्तदनुष्ठानं ब्रुवते तुच्छमलतुल्यमसारशरीरलग्नमलसदृशमन्यदध्यात्ममूलबंधविकलमन्येऽपि तीर्थान्तरीया अध्यात्मशास्त्रज्ञा ब्रुवन्तीति यदेवाध्यात्मबन्धप्रधानमनुष्ठानं तदेव भवव्याधिक्षयकरणतया तत्त्वतोऽनुष्ठानम् । तद्विलक्षणं च शरीररूढरजोराशिवद् मालिन्यकारितयाऽत्यन्ततुच्छमन्येऽपि योगशास्त्रविदो विदुरिति ॥ ३६८ ॥

---

१ इयं मूलगाथाऽस्मत्समीपस्थेषु चतुर्ष्वप्यादर्शपुस्तकेषु नास्ति, टीकाग्रन्थानुसारेण तु पदानि विविच्यात्रगाथारूपेणानुमायसंदृब्धेयं गाथा. अतएव कोष्ठके कृता ।

इदं चाध्यात्मं यतो भवति, यच्चातः प्रवर्त्तते, तद्दर्शयति;—

**सुद्धाणाजोगाओ अज्झप्पं सति इओ समालोचो। हंदि अणुट्ठाणगओ ततो य तं नियमतो होति ॥३६९॥**

शुद्धाज्ञायोगादध्यात्ममुक्तरूपं सदा सर्वकालं संजायते न पुनरन्यथापि, तस्य तदेककारणत्वात्। तदनु इतोऽध्यात्मात् समालोचो विमर्शश्चिकीर्षासारो 'हंदि' इत्युपप्रदर्शने, अनुष्ठानगतस्तच्चित्रक्रियाकाण्डविषयः प्रवर्त्तते। ततश्च तस्मादेवालोचात् तदनुष्ठानं नियमतो भवति, तस्य तदवंधहेतुत्वादिति ॥ ३६९ ॥

अयं च शुद्धाज्ञायोगो यथा भवति, तद्दर्शयति,—

**एसो उ तहाभवत्तयाए संजोगतो निओगेण। जायति भिन्ने गंठिम्मि अन्नहा णो जतो भणियं ॥ ३७० ॥**

एष शुद्धाज्ञायोगः पुनस्तथाभव्यतया उक्तरूपतया संयोगात् सम्पृक्तभावाद् नियोगेन नियमेन जायते जीवानाम्। कीदृशे कस्मिन्नित्याह–भिन्नेऽपूर्वकरणवज्रसूच्या सम्पन्नच्छिद्रे कृते ग्रन्थौ घनरागद्वेषपरिणामरूपे। अन्यथा ग्रन्थिभेदाभावे सति नो नैव, महामोहसन्निपातोपहतत्वात्। यतो भणितमागमे ॥ ३७० ॥

**वेहपरिणामरहिते ण गुणाहाणमिह होति रयणम्मि। जह तह सुत्ताहाणं न भावतोऽभिन्नगंठिम्मि॥३७१॥**

वेधपरिणामरहितेऽपातितमध्यच्छिद्रे तथाविधप्रयोगाद् न नैव गुणाधानसूत्रतन्तुप्रवेश इह भवति रत्ने पद्मरागादौ

सूत्राधानस्य सद्बोधसम्पादकसामर्थ्याभावात्, तत्सम्पादनेन च तस्याविकलस्वरूपलाभसम्भवादिति ॥ ३७१ ॥

अमुमेवार्थं भावयति;—

**जह तम्मि तेण जोगा वज्झा संतोवि तत्तओ णेए । तह दव्वसुत्तजोगा पायं जीवाण विण्णेया ॥३७२॥**

यथा तस्मिन्नेव वेधपरिणामरहिते तेन गुणेन योगाः सम्बन्धा बाह्या मध्यप्रवेशविरहाद् बहीरूपास्तत्प्रयोजनार्थिभिः पुंभिः सम्पद्यमानाः सन्तोऽपि तत्त्वतः परमार्थरूपतया न नैव एते सूत्रयोगा वर्त्तन्ते, जतुप्रभृतिना श्लेषद्रव्येण गुणसंयोजने रत्नस्य च्छायाविनाशात्, तदन्तरेण च तस्य तत्रावस्थानस्थैर्याभावादिति । तथा द्रव्यसूत्रयोगाः प्रायो बाहुल्येन जीवानां विज्ञेयाः। इह द्रव्यशब्दः कारणपर्यायोऽप्रधानपर्यायश्च शास्त्रेषु प्रयुज्यते। तत्र योऽसन्निहितग्रन्थिभेदानां दूरभव्यादीनामप्रधानः सूत्रयोगः स एकान्तत एव सद्बोधानाधायकतया तत्त्वपर्यालोचने न किञ्चिदेव। यस्त्वपुनर्बन्धकमार्गाभिमुखमार्गपतितानाम्, स शुद्धबोधलाभावन्ध्यहेतुत्वाद् व्यवहारेण तात्त्विकः, यथोक्तं योगबिन्दौ—"अपुनर्बन्धकस्यायं व्यवहारेण तात्त्विक," इत्यादि। इति हृदि समाधाय सूत्रकारेणोक्तं प्राय इति। ततो ये प्रधाना सूत्रयोगा अविरतादीनां ते निश्चयतो व्यवहारतश्च तत्त्वरूपा एव। ये तु सद्बोधहेतुभूतास्ते व्यवहारेण तात्त्विका इति ॥ ३७२ ॥

कुत एतदेवमिति चेदुच्यते;—

**विसयपडिहासमित्तं बालस्सेवक्खरयणविसयंति । वयणा इमेसु णाणं सव्वत्थण्णाणमो णेयं ॥ ३७३ ॥**

विषयप्रतिभासमात्रम्—इह स्पर्शनरसनघ्राणचक्षुः श्रोत्राणीन्द्रियाणि, स्पर्शरसगन्धरूपशब्दास्तेषामर्थाः, ततो विषयस्येन्द्रियगोचरस्य प्रतिभासोऽवबोधः स एव केवलस्तद्गतगुणदोषविमर्शविकलो विषयप्रतिभासमात्रं बालस्येव शिशोरिव । अक्षरत्नविषयं अक्षश्चन्दनको रत्नं पद्मरागादिः, अक्षरत्ने, ते विषयो यस्य तत्तथाविधज्ञानमित्युत्तरेण योगः । इतिः पूरणार्थः । वचनाद् द्रव्यश्रुतयोगरूपात् । एवंभिन्नग्रन्थिषु जनेषु ज्ञानमवबोधः शब्दार्थमात्रगोचरमेव तद्गतोहापोहशून्यं सर्वत्र जीवादौ विषये; किमित्याह—अज्ञानमेव ज्ञानफलस्य हेयोपादेयविभागस्य तात्त्विकस्याभावाज्ज्ञेयमिति ॥३७३॥

अत्रैव व्यतिरेकमाह;—

**भिन्ने तु इतो णाणं जहक्खरयणेसु तग्गयं चेव । पडिबंधम्मिवि सद्धादिभावतो सम्मरूवं तु ॥ ३७४ ॥**

भिन्ने तु विघटिते तु पुनर्ग्रन्थौ । इतो ग्रन्थिभेदादनन्तरमेव ज्ञानं विशदविमर्शवशोपलब्धविशुद्धतत्त्वतया शुद्धबोधरूपं विजृम्भते । दृष्टान्तमाह—यथाक्षरत्नयोर्विषये तस्यैव शिशोरशिशुभावप्राप्तौ तद्गतं चेवाक्षरत्नविभागगोचरमेव । ननु, भिन्नग्रन्थीनां केषांचिद् माषतुषादिसदृशानां न किञ्चिद् ज्ञानविजृम्भणमुपलभ्यत इत्याशंक्याह—प्रतिबन्धेऽपि तथाविधज्ञानावरणोदयाद् विघातेऽपि श्रद्धादिभावतः "तमेव सच्चं नीसंकं जं जिणेहिं पवेइयं" इत्यादेः श्रद्धानस्य, आदिशब्दाद् गीतार्थप्रज्ञापनीयत्वस्य च भावात् तुच्छमपि ज्ञानं सम्यग्रूपमेव, परिपूर्णलाभहेतुत्वात् । यथा हि शुक्लपक्षक्षपापतेरतितुच्छोऽपि प्रतिपत्तिथावुज्ज्वलतालाभः सम्यगेव, परिपूर्णतदुज्ज्वलभावलाभस्याचिरादेव सम्पत्तिनिमित्तत्वात्; तथा प्रकृतज्ञानमपि क्रमेण केवलज्ञानाविकलकारणभावापन्नमेव वर्त्तत इति ॥ ३७४ ॥

विषयप्रतिभासत्व-
स्थानादि

अथास्य सम्यग्रूपतामेव भावयति;—

**जमिणं असप्पवित्तीए दव्वओ संगयंपि नियमेण। होति फलंगं असुहाणुवंधवोच्छेयभावाओ ॥ ३७५ ॥**

यस्मादिदं सम्यग्ज्ञानमसत्प्रवृत्त्या प्रबलावश्यवेद्यचारित्रमोहोदयादिन्द्रियानुकूलाचरणरूपया द्रव्यतो मनोरुचिविकलत्वेनाप्रधानभावात् संगतमपि संयोगभागपि नियमेनैकान्तत एव भवति फलांगं मोक्षलक्षणफलनिमितम् । कुत इत्याह—अशुभानां ज्ञानावरणादिपापप्रकृतीनामनुबन्ध उत्तरोत्तरवृद्धिरूपस्तस्य व्यवच्छेदस्त्रुटिस्तस्य भावात् ॥ ३७५ ॥

अशुभानुबन्धमेवाश्रित्याह;—

**एसो य एत्थ पावो मूलं भवपायवस्स विन्नेओ। एयम्मि य वोच्छिन्ने वोच्छिन्नो चेव एसो त्ति ॥३७६॥**

एष चाशुभानुबन्धः पुनरत्र सम्यग्रूपज्ञानादशुभानुबंधव्यवच्छेदे प्रस्तुते पापोऽत्यन्ताधमो मूलमादिकारणं भवपादपस्य संसारविषवृक्षस्य नरकादिदुःखफलाकुलस्य विज्ञेयः । एतस्मिंश्चाशुभानुबन्धे व्यवच्छिन्ने सम्यग्ज्ञानतो व्यवच्छिन्नश्चैवोपरत एवैष भवपादप इति । विपर्यासजलसिच्यमानमूला एव हि क्लेशपादपा दुःखलक्षणाय फलाय कल्पन्ते । सम्यग् ज्ञानदहनदह्यमानमूलास्तु त्रुटितसकलफलदानशक्तयो वन्ध्यभावापन्ना असत्कल्पा एव जायन्त इति ॥ ३७६ ॥

एवं सति यत्सिद्धं तद्दर्शयति;—

**एत्तो च्चिय एयम्मी जत्तोऽतिसएण सेसगाणं पि। एत्थ दुवे सज्झिलगा वाणप्पत्था उदाहरणं ॥३७७॥**

इत एवाशुभानुबन्धस्य भवपादपमूलत्वाद् एतद्व्यवच्छेदे च भवस्य व्यवच्छिन्नत्वाद् हेतोः, एतस्मिन्नशुभानुबन्ध-व्यवच्छेदे यत्नो निन्दागर्हादिना प्रयत्नोऽतिशयेन शेषानुष्ठानमपेक्ष्य शेषकाणामपि तीर्थान्तरीयाणां वर्त्तते, किंपुनर-स्माकं जैनानामित्यपि शब्दार्थः । अत्रानुबन्धव्यवच्छेदे द्वौ सज्झिलकौ भ्रातरौ वानप्रस्थौ "ब्रह्मचारी गृहस्थश्च वान-प्रस्थस्ततो यतिः ।" इत्याश्रमक्रमापेक्षया तृतीयाश्रमवर्त्तिनौ वानप्रस्थापनवन्तावुदाहरणम् ॥ ३७७ ॥

अंगिरसगालवा वाणपत्थ लहुगस्स जेट्ठवणगमणं । निग्गम कुसादिहेउं तस्सियरपडिच्छणं चेव ३७८॥१
कालातिक्कम भुक्खा दाडिमगह आगमो उ इतरस्स । वंदण पासण पुच्छा एत्तो पच्छित्ति णो वंदे ३७९॥२
देह इमं गच्छ निवं मग्गाहि स दूर पादलेवो त्ति । गमणं निवमग्गण धम्मसत्थि च्छेओ उ हत्थाणं ३८०॥३
तत्तो आगम चिण्णव्वतोसि वंदण णतीए ण्हाणं तु । हत्थुब्भुभण साहण पाणायामे तहा भावो ॥ ३८१॥४
पुच्छा किं णो पढमं असुद्धितो तं वतित्ति गुरुदोसो । किरियापत्थाहरणा ण अन्नहाऽवेति अणुबंधो॥३८२॥५

इह क्वचिद् मागधादौ मण्डले आङ्गिरसगालवौ ब्राह्मणसुतौ परिपालिताद्याश्रमद्वयौ सन्तौ वानप्रस्थावभूताम् । अन्यदा लघुकस्य भ्रातुर्गालवनाम्नः कुतोऽपि प्रयोजनात् स्ववनषण्डाज्ज्येष्ठवनगमनमाङ्गिरसवनावतरणं समजायत । तस्मिंश्च समये निर्गमः स्वकीयवनात् कुशादिहेतु कुशादयो दर्भकन्दमूलफलजलेन्धनादयस्तापसजनयोग्यसमाहरणीयत्वेन हेतवो यत्र तत्तथा क्रियाविशेषणमेतत् । तस्य ज्येष्ठभ्रातुः इतरप्रतीक्षणमेवेतरेण तत्रस्थेनैव विलम्बनमकारीति ॥ ३७८ ॥

ज्येष्ठवनाद् दाडिमग्रहः
'कालाइक्कम'त्ति आगमनकालातिवाहने सम्पन्ने सति बुभुक्षा गालवस्य समजायत । ततस्तेन ज्येष्ठवनाद् दाडिमग्रहः कृतः भुक्तानि च तानि । मुहूर्त्तान्तरादागमस्तु प्रत्यावृत्त्य स्ववने ज्येष्ठस्य इतरस्य लघोस्तं प्रति वन्दना बभूव । 'पासण'त्ति दृष्टं च लुप्तदाडिमफलं स्ववनम् । पृच्छा च कृता तेन केनेदमित्थं विहितमिति । कथितं चानेन यथा मयेति । ततः आङ्गिरसेनोचे । इतः स्वयमेव दाडिमग्रहणादत्तादानाद्, यद्यपि "पावं छिंदइ जम्हा पायच्छित्तं तु भण्णई तम्हा । पाएण वावि चित्तं विसोहए तेण पच्छित्तं" ॥ १ ॥ इति वचनाद् अपराधशुद्ध्युपायभूतमनुष्ठानं प्रायश्चितमुच्यते, तथाप्युपचारात् प्रायश्चित्तशोध्योऽपराधोऽपि प्रायश्चित्तशब्दवाच्यः, ततः प्रायश्चित्तमस्यास्तीति प्रायश्चित्ती भवानिति कृत्वा नो नैव वन्दे प्रतिवन्दे प्रतिवन्दनं करोमि ते । निशीथेऽप्युक्तम्–"मूलगुणउत्तरगुणे संथरमाणावि जे विसीयंति । ते नहु हुंत वंदणिज्जा ।" इति ॥ ३७९ ॥ २ ॥

गालव उवाच–दत्त यूयमेवेदं मे प्रायश्चित्तम् । आंगिरसः–गच्छ एतन्मण्डलाधिपतिनगरे नृपं राजानं 'मग्गाहि'त्ति याचस्व शुद्धिम्, दुष्टनिग्रहशिष्टपरिपालनयोस्तस्यैव सर्वाश्रमगुरुत्वेनाधिकारित्वात् । गालवः–स राजा दूरे महता व्यवधानेन वर्त्तत इति न शक्यते तस्य समीपे गन्तुम् । तत आङ्गिरसेन पादलेपः समर्प्पितो यत्सामर्थ्याद् राजान्तिके गन्तुं शक्यत इत्यस्मात् पादलेपाद् गमनमभूत् । नृपमार्गणाद् राज्ञः समीपात् प्रायश्चित्तस्य याच्ञा कृता । ततो राजा दिट्टैः 'धम्मसत्थि'त्ति धर्मशास्त्रिभिर्मनुप्रभृतिमुनिप्रणीतधर्मशास्त्रपाठकैः छेदस्तु छेद एव हस्तयोः प्रायश्चित्तमादिष्टम्, न

१ क. 'यद्यपीत्याह पावं छिंदत्ति पावं छिंदइ; ख. ग घ. 'यदीत्याह पावं छिंदत्ति पावं छिंदइ'.

पुनरुपवासादि। लौकिकशास्त्रेषु हि येनाङ्गेन योऽपराधो विहितस्तच्छुद्धौ तदेवाङ्गं निगृह्यत इति ॥ ३८० ॥ ३ ॥

ततो हस्तच्छेदानन्तरमागमः प्रत्यावृत्तिराङ्गिरससमीपे। तेनोक्तम्—चीर्णव्रतोऽसि समाचरितप्रायश्चित्तस्त्वमिति विहिता वन्दना, भणितश्च नद्यां स्नानमाचरेति । तुः पादपूरणार्थः। तत्र च स्नातस्य 'हत्थुलुज्झण'त्ति हस्तयोरुद्रोहणं पुनरुद्गमः सम्पन्नः। तेन च 'साहण'त्ति ज्येष्ठाय साधितं निवेदितं, यथा हस्तौ ममपुनरुद्भूतौ । तेनाप्युक्तं प्राणावुच्छ्वासनिःश्वासौ तयोरायामः सामस्त्येन निरोधः प्राणयामश्चित्तवृत्तिनिरोध इत्यर्थः, तस्मिन् मया कृते सति तथा भावो हस्तयोस्ते सम्पन्नः ॥ ३८१ ॥ ४ ॥

'पुच्छ'त्ति पृच्छा कृता तेन किं न प्रथमं नदीस्नानात् तथा भावो विहितः? स प्राह—अशुद्धितोऽद्यापि तवाशुद्धित्वात्। यतस्त्वं व्रती इत्यस्मात् स्तोकस्खलनायामपि गुरुदोषो वर्त्तते, क्रियापथ्याहरणात् चिकित्साप्रवृत्तावपथ्यासेवनदृष्टान्तात्, न नैवान्यथा हस्तकर्त्तनमपि नदीस्नानमन्तरेणापैति त्रुट्यत्यनुबन्धोऽपराधलव इति त्वं मया तदनुष्ठापित इति ॥ ३८२ ॥ ५ ॥

अनुबन्धमेवाश्रित्याह;—

**रुद्दो य इमो एत्थं चइयव्वो धम्ममग्गजुत्तेहिं। एयम्मि अपरिचत्ते धम्मोवि हु सबलओ होति ॥ ३८३॥**

रौद्रश्च दारुण एवायमशुभानुबन्धोऽत्र जगति त्यक्तव्यः परिहरणीयो निन्दागर्हादिनोपायेन। कैरित्याह—धर्म्ममार्ग-

युक्तैः धर्म्ममार्गा धर्म्माराधनोपायाः साधुश्रावकसमाचारास्तत्समन्वितैः । एतस्मिन्ननुबन्धेऽपरिहृते धर्म्मः, प्रागुक्तोऽधर्मस्तावत्ततो भवत्येवेत्यपिशब्दार्थः, हुर्यस्मात् सबलकोऽतीचारपङ्कमालिन्यकल्मषरूपतामापन्नो भवति । अयमभिप्रायो-महति दोषानुबन्धे मूलगुणादिभंगरूपे विधीयमानोऽपि धर्म्मो न स्वरूपं लभते, अल्पातिचारानुबन्धे च भवन्नपि धर्म्मः शबलस्वरूप एव । अत एव पठ्यते—'पायडियसबसलो' इत्यादि ॥ ३८३ ॥

इत्थं लौकिकमुदाहरणमभिधाय लोकोत्तरमभिधित्सुराह;—

**लोउत्तरंपि एत्थं निदरिसणं पत्तदंसणाईवि । असुहाणुबंधतो खलु अणंतसंसारिया बहवे ॥ ३८४ ॥**

लोकोत्तरमपि न केवलं लौकिकमित्यपिशब्दार्थः, अत्राशुभानुबन्धे निदर्शनमुदाहरणम् । क इत्याह–प्राप्तदर्शनाद-योऽपि लब्धविशुद्धसम्यक्त्वज्ञानचारित्रसम्पदोऽपि, किं पुनस्तद्विकलजीवा इत्यपिशब्दार्थः, अशुभानुबन्धत उक्त-रूपात्, खलुरवधारणे, अनन्तसंसारिका अनन्तोत्सर्पिण्यवसर्प्पिणीप्रमाणः संसारो येषामस्तीति ते तथा बहवो भू-यांस इति ॥ ३८४ ॥

एतदेव भावयति;—

**चउदसपुव्वधराणं अपमत्ताणं वि अंतरं समए । भणियमणंतो कालो सो पुण उववज्जए एवं ॥३८५ ॥**

चतुर्दशपूर्वधराणां समस्तश्रुतजलधिपरपारप्राप्तानाम् ऋषिविशेषाणाम्, अप्रमत्तानामपि च पुलाकबकुशप्रतिसेव-

भण्यते उत्तरमत्र यथौषधं त्रिफलादिः, खलुरवधारणे, यत्नेनादरेण सदा सर्वावस्थासु विधानतः तदुचितान्नपानादिसेवनरूपाद् युक्तं हीनाधिकमात्रापरिहारेण समुचितं, तथेति विशेषणसमुच्चये, ततो यत्नेन सदा विधानतो युक्तं च समुपजीव्यमानं सद् रोगिणां व्यवच्छिनत्ति व्याधिं कण्डूप्रभृतिकम्, न नैवान्यथोक्तक्रमव्यतिक्रमे । एवमौषधवद् एषोऽपि शुद्धाज्ञायोगोऽशुभानुबन्धव्याधिमिति ॥ ३८९ ॥

*औषधदृष्टान्तेन समाधानादि.*

**एत्तो उ अप्पमाओ भणिओ सव्वत्थ भयवया एवं। इहरा ण सम्मजोगो तस्साहय सोवि ल्द्धहोत्ति॥ ३९० ॥**

इतः शुद्धाज्ञायोगस्यौषधज्ञातेनाशुभानुबन्धव्यवच्छेदकत्वादेव हेतोरप्रमाद उपयुक्तभावरूपो भणितः सर्वत्र साधुश्रावकप्रयोगे चैत्यवन्दनादावनुष्ठाने भगवता तीर्थकृता एवमशुभानुबन्धव्यवच्छेदकत्वेन । इतरथाऽशुभानुबन्धव्यवच्छेदाभावे न नैव सम्यग् योगः शुद्धाज्ञालाभलक्षणोऽप्रमाद एव न भवतीति भावः । नहि कारणं स्वकार्यमनुत्पादयत् सत् कारणभावं लभते, इत्यशुभानुबन्धेऽव्यवच्छिद्यमाने तत्साधकत्वेन शुद्धाज्ञानलक्षणोऽप्रमादो निरूप्यमाणः स्वं स्वभावं न लब्धुमलम् । एवं तर्हि बहवः शुद्धाज्ञायोगवन्तोऽशुभानुबन्धाव्यवच्छेदेऽपि व्यावर्ण्यमाना उपलभ्यन्ते, तत्कथं न दोष ? इत्याह—'तस्साहय'त्ति विभक्तिलोपात् तत्साधकः पारंपर्येणाशुभानुबन्धव्यवच्छेदहेतुशुद्धाज्ञायोगसाधकः सन् सोऽप्यानन्तर्येणाशुभानुबन्धाव्यवच्छेदहेतुराज्ञायोगो लब्धोऽभिमत इति । यदा हि अद्याप्यतिनिबिडोऽशुभानुबन्धोऽतीव्रश्चाज्ञायोगः, तदाऽसौ तं सर्वथा व्यवच्छेद्यमपारयन्नपि सर्वथा तदुच्छेदकतीव्राज्ञायोगकारणभावापन्नतया सुन्दर एवेति ॥३९०

अत्र हेतुमाह;—

**अवयारवियारम्मीं अणुभूए जं पुणो तदब्भासो । होइ अहिलसियहेऊ सदोसहं जह तहेसोवि ॥३९१॥**

अपचारे कर्मव्याधिचिकित्सारूपस्य प्रागादेयतया परिपालितस्य सम्यग्दर्शनादेर्गुणस्य साधुप्रद्वेषादिना पश्चाद् विनाशने सति, यो विकारो दुर्गतिपातरूपस्तत्रानुभूते तत्तद् विडम्बनासहनेन यद्यस्मात् कारणात् पुनर्जन्मान्तरे तदभ्यासस्तस्य पूर्वभवाराधितस्य सम्यग्दर्शनादेः, तस्य "खाओवसमिगभावे दढजत्तकयं सुभं अणुट्ठाणं । परिवडियं पि हु जायइ पुणोवि तब्भाववुड्ढिकरं ॥ १ ॥" इति वचनप्रामाण्यात् कथञ्चिद् लब्धस्य पुनरनुशीलनमभ्यासो भवत्यभिलषितहेतुरशुभानुबन्धव्यवच्छेदकारणम् । दृष्टान्तं तदुपनयं चाह—सत् प्रस्तुतव्याधिनिग्राहकत्वेनास्खलितसामर्थ्यमौषधमुक्तरूपं यथा तथा एषोऽपि तदभ्यासः । तथाहि—यथाऽऽतुरस्य कुतोऽपि प्रमादात् क्रियापचारे सञ्जाते, अनुभूते च तत्फले, पुनस्तत्क्रियाभ्यास एव व्याधिव्यवच्छेदाय जायते, तथा प्रस्तुतक्रियापि तथाविधप्रमादासेवनादपचारमानीता सत्यपचारविपाकानुभवानन्तरमभ्यस्यमानाशुभानुबन्धव्यवच्छेदफला जायत इति ॥ ३९१ ॥

अयं चार्थः कथञ्चित् प्रागेव उक्त एवास्ते, इति तं प्रस्तुते योजयन्नाह;—

**पडिबंधविचारम्मि य निदंसिओ चेव एस अत्थोत्ति। ओसहणाएण पुणो एसो च्चिय होइ विण्णेओ ॥३९२**

प्रतिबन्धविचारे च "पडिबन्धोवि य एत्थं सोहणपंथम्मि संपयट्टस्स" इत्यादिग्रन्थेन प्रागभिहिते पुनर्निदर्शितश्चैव प्रकाशित एव एषोऽर्थो यो "अवयारवियारम्मि" इत्यादिना ग्रन्थेनोक्तः । इति वाक्यपरिसमाप्तौ । यद्येवं, पुनर्भणनम-

नाकुशीलसाधुयोग्यप्रमादस्थानपरिहारवतामपि, किंपुनः सम्यग्दर्शनादिशेषगुणभाजामित्यपिशब्दार्थः, अन्तरं प्रतिपतितप्रस्तुतगुणानां पुनर्लाभव्यवधानं समये जिनागमे भणितं निरूपितम्। कीदृशमित्याह—अनन्तकालः, यथोक्तं—"कालमणंतं च सुए अद्धा परियट्टओ य देसूणो। आसायणबहुलाणमुक्कोसं अंतरं होइ ॥ १ ॥" स पुनरनन्तकाल उपपद्यते, एवमशुभानुबन्धस्य रौद्रतायां सत्यामिति। नह्यवश्यवेद्यमशुभानुबन्धमन्तरेण प्रकृतगुणभंगे पुनर्लब्ध्या कियत्कालव्यवधाने कश्चिदन्यो हेतुरस्तीति ॥ ३८५ ॥

एतदेव भावयति;

**गंठीओ आरओवि हु असई बंधो ण अण्णहा होइ। ता एसो वि हु एवं णेओ असुहाणुबंधोत्ति ॥ ३८६ ॥**

ग्रन्थेरुक्तरूपादारतोऽपि तस्मिन्नभिन्नेऽपि सति, किं पुनर्भिन्नग्रन्थौ, अशुभानुबन्धतोऽनन्तसंसार इत्यपिशब्दार्थः, असकृद् अनन्तवारान् बन्धो ज्ञानावरणादीनां कर्मणां स्वीकारः, न नैवान्यथा शुभानुबंधं विना भवति, अनुरूपकारणप्रभवत्वात् सर्वकार्याणाम्। तत् तस्मादेषोऽप्यसकृद्बन्धो, न केवलं यतोऽसौ प्रवृत्त इत्यपिशब्दार्थः, हुः स्फुटम्, एवमशुभानुबन्धमूलत्वेन ज्ञेयोऽशुभानुबन्ध इति, कार्यकारणयोर्मृद्घटयोरिव कथंचिदभेदात्। तस्मात् कारणकृतस्य कार्यभूतस्य चाशुभानुबन्धस्य त्रोटने यत्नो विधेय इति ॥ ३८६ ॥

अथ परमतमाशंकमानमाह;—

नणु सुद्धाणाजोगो आसि च्चिय पत्तदंसणाईणं । तेसिमसुहाणुबंधो णावगओ कहणु एत्तो उ ॥ ३८७ ॥

नन्विति परपक्षाक्षमायां, शुद्धाज्ञायोगो निरवकरपारगतवचनाराधनारूप आसीदेत्र वृत्त एव । केषामित्याह–प्राप्तदर्शनादीनामुपलब्धसम्यग्दर्शनादीनामिदानीं तत्प्रतिपातवतामपि । ततः किमित्याह–तेषां प्राप्तदर्शनानामशुभानुबन्धो नापगतो न त्रुटितः, कथं नुः परिप्रश्ने, इतरस्तु शुद्धाज्ञायोगादपि अशुभानुबन्धव्यवच्छेदकत्वेन भवद्भिः परिकल्पितादिति ? ॥ ३८७ ॥

एवं च सति;—

एयापगमणिमित्तं कहं व एसो उ हंत केसिंचि । एयं मिहोविरुद्धं पडिहासइ जुज्जए कह णु ? ॥३८८॥

एतदपगमननिमित्तमशुभानुबन्धव्यवच्छेदकारणं, कथं वेत्यथवा, एष त्वेष एव शुद्धाज्ञायोगः, हन्तेति कोमलामंत्रणे, केषांचिज्जीवानाम् । तत एतच्छुद्धाज्ञायोगादशुभानुबन्धव्यवच्छेदभणनं मिथः परस्परं विरुद्धं प्रतिभासते । न हि ये यत्कार्यकारिणो भावास्ते तदकारिणोऽपि भवन्ति, वृक्ष इव च्छायायाः । अन्यथा कार्यकारणव्यवस्थाविलोपप्रसङ्गः । ततो युज्यते घटते कथं केन प्रकारेण भवदुक्तं, नुरिति वितर्कयामि ? ॥ ३८८ ॥

अत्र समाधिमाह;—

भण्णइ जहोसहं खलु जत्तेण सया विहाणओ जुत्तं । तह वोच्छिंदइ वाहिं ण अण्णहा एवमेसोवि॥३८९॥

भण्यते उत्तरमत्र यथौषधं त्रिफलादिः, खलुरवधारणे, यत्नेनादरेण सदा सर्वावस्थासु विधानतः तदुचितान्नपानादिसेवनरूपाद् युक्तं हीनाधिकमात्रापरिहारेण समुचितं, तथेति विशेषणसमुच्चये, ततो यत्नेन सदा विधानतो युक्तं च समुपजीव्यमानं सद् रोगिणां व्यवच्छिनत्ति व्याधिं कण्डूप्रभृतिकम्, न नैवान्यथोक्तक्रमव्यतिक्रमे । एवमौषधवद् एषोऽपि शुद्धाज्ञायोगोऽशुभानुबन्धव्याधिमिति ॥ ३८९ ॥

औषधदृष्टान्तेन समाधानादि.

**एत्तो उ अप्पमाओ भणिओ सव्वत्थ भयवया एवं। इहरा ण सम्मजोगो तस्साहय सोवि लूहोत्ति॥ ३९० ॥**

इतः शुद्धाज्ञायोगस्यौषधज्ञातेनाशुभानुबन्धव्यवच्छेदकत्वादेव हेतोरप्रमाद उपयुक्तभावरूपो भणितः सर्वत्र साधुश्रावकप्रयोगे चैत्यवन्दनादावनुष्ठाने भगवता तीर्थकृता एवमशुभानुबन्धव्यवच्छेदकत्वेन । इतरथाऽशुभानुबन्धव्यवच्छेदाभावे न नैव सम्यग् योगः शुद्धाज्ञालाभलक्षणोऽप्रमाद एव न भवतीति भावः । नहि कारणं स्वकार्यमनुत्पादयत् सत् कारणभावं लभते, इत्यशुभानुबन्धेऽव्यवच्छिद्यमाने तत्साधकत्वेन शुद्धाज्ञानलक्षणोऽप्रमादो निरूप्यमाणः स्वं स्वभावं न लब्धुमलम् । एवं तर्हि बहवः शुद्धाज्ञायोगवन्तोऽशुभानुबन्धाव्यवच्छेदेऽपि व्यावर्ण्यमाना उपलभ्यन्ते, तत्कथं न दोष? इत्याह—'तस्साहय'त्ति विभक्तिलोपात् तत्साधकः पारंपर्येणाशुभानुबन्धव्यवच्छेदहेतुशुद्धाज्ञायोगसाधकः सन् सोऽप्यानन्तर्येणाशुभानुबन्धाव्यवच्छेदहेतुराज्ञायोगो लब्धोऽभिमत इति । यदा हि अद्याप्यतिनिबिडोऽशुभानुबन्धोऽतीव्रश्चाज्ञायोगः, तदाऽसौ तं सर्वथा व्यवच्छेद्यमपारयन्नपि सर्वथा तदुच्छेदकतीव्राज्ञायोगकारणभावापन्नतया सुन्दर एवेति ॥ ३९०

अत्र हेतुमाह;—

**अवयारवियारम्मीं अणुभूए जं पुणो तदब्भासो। होइ अहिलसियहेऊ सदोसहं जह तहेसोत्ति ॥३९१॥**

अपचारे कर्म्मव्याधिचिकित्मारूपस्य प्रागादेयतया परिपालितस्य सम्यग्दर्शनादेर्गुणस्य साधुप्रद्वेषादिना पश्चाद् विनाशने सति, यो विकारो दुर्गतिपातरूपस्तत्रानुभूते तत्तद् विडम्बनासहनेन यद्यस्मात् कारणात् पुनर्जन्मान्तरे तदभ्यासस्तस्य पूर्वभवाराधितस्य सम्यग्दर्शनादेः, तस्य "खाओवसमिगभावे दढजत्तकयं सुभं अणुट्ठाणं। परिवडियं पि हु जायइ पुणोवि तब्भाववुड्ढिकरं ॥ १ ॥" इति वचनप्रामाण्यात् कथञ्चिद् लब्धस्य पुनरनुशीलनमभ्यासो भवत्यभिलपितहेतुरशुभानुबन्धव्यवच्छेदकारणम्। दृष्टान्तं तदुपनयं चाह—सत् प्रस्तुतव्याधिनिग्राहकत्वेनास्खलितसामर्थ्यमौषधमुक्तरूपं यथा तथा एषोऽपि तदभ्यासः। तथाहि—यथाऽऽतुरस्य कुतोऽपि प्रमादात् क्रियापचारे सञ्जाते, अनुभूते च तत्फले, पुनस्तत्क्रियाभ्यास एव व्याधिव्यवच्छेदाय जायते, तथा प्रस्तुतक्रियापि तथाविधप्रमादासेवनादपचारमानीता सत्यपचारविपाकानुभवानन्तरमभ्यस्यमानाशुभानुबन्धव्यवच्छेदफला जायत इति ॥ ३९१ ॥

अयं चार्थः कथञ्चित् प्रागेव उक्त एवास्ते, इति तं प्रस्तुते योजयन्नाह;—

**पडिबंधविचारम्मि य निदंसिओ चेव एस अत्थोत्ति। ओसहणाएण पुणो एसो च्चिय होइ विण्णेओ ॥३९२**

प्रतिबन्धविचारे च "पडिबन्धोवि य एत्थं सोहणपंथम्मि संपयट्टस्स" इत्यादिग्रन्थेन प्रागभिहिते पुनर्निदर्शितश्चैव प्रकाशित एव एषोऽर्थो यो "अवयारवियारम्मि" इत्यादिना ग्रन्थेनोक्तः। इति वाक्यपरिसमाप्तौ। यद्येवं, पुनर्भणनम-

पर्यायेण राहुरिव स्वभावादेव मलिनप्रकृतिरेको रुद्रनामा क्षुल्लकः समभूत्। स च तेषु तेषु साधुसमाचारेषु प्रमाद्यन् सारणवारणनोदनप्रतिनोदनादिभिरनवरतमपरसाधुभिः शिक्षापणायां क्रियमाणायां साधुप्रद्वेषी शिक्षापकसाधुविषये तीव्रमत्सरः समजायत। अन्यदा च तेन सर्वमपि तं गच्छमुपहन्तुमिच्छता पापेन पानभाजने विषं निक्षिप्तम्। तस्मिंश्च निक्षिप्ते सति सह देवेन हिताहितचिन्तकेन वर्त्तते यो गच्छः स सहदेवस्तद्भावस्तत्त्वं तत् समभूत्। कथम्। आलुका हस्ते आलुकायां भाजनविशेषे साधुभिर्जलादानार्थं हस्ते प्रसारिते सति साधना निवेदना कृता आकाशान्वितया वाचा, यथा मा गृह्णीतैतज्जलं, विषदोषदूषितत्वादस्य केनेदमसमंजसमाचरितमिति विमर्शव्याकुलेषु साधुषु देवताकथना च संजाता, यथा, रुद्रक्षुल्लकेनैतदनुष्ठितमिति। ततो 'निच्छूढो'त्ति गच्छान्निष्काशितः स्थूलापराधत्वात् तस्य। तदुक्तम्—
"तंबोलपत्तनाएण माहु सेसावि उ विणासेज्जा। निज्जूहंती तं तू मा अन्नोवि तहा कुज्जा" इति ॥ ३९५ ॥ १ ॥

गच्छान्निष्काशितस्य च तस्योन्निष्क्रमणं दीक्षात्यागः। ततो व्याधिर्जलोदरादिरूपः, मरणं प्राणत्यागलक्षणं सम्पन्नम्। मृतस्य च नरकेषु सप्तसु रत्नप्रभापृथिवीप्रभृतीषु उपपातो जन्म च बभूव। कुत्सिततिर्यग्भ्यः "अस्सण्णी पढमं" इत्यादिग्रन्थोक्तेभ्यः सकाशात्, कीदृशेभ्यः, तथा तथा दाहवाहबन्धनोत्कर्त्तनादिभिः प्रकारैर्दुःखप्रचुरेभ्यः ॥ ३९६ ॥ २ ॥

एकेन्द्रियेषु पृथिवीकायिकादिषु प्रायो बहून् वारान् कायस्थितिरसंख्योत्सर्प्पिण्यवसर्प्पिण्यादिरूपा तस्य समभूत् ३९७॥३

बर्ब्बरा बर्ब्बरकुलवासिनो म्लेच्छाः, पुलिन्दा नाहलाः पर्वताश्रयवासिनः तरुपत्रप्रावरणा म्लेच्छा एव, चण्डालचर्मकाररजकदासभृतकास्तु प्रतीतरूपा एव, ततस्तेषु। तदनन्तरं चूर्णपुरे श्रेष्ठिसुतः समुत्पन्नः। तरुपत्रप्रावरणम्लेच्छादि-

जन्मसु तत्कर्मनिष्ठापनं साधुप्रद्वेषप्रत्ययोपार्जितं लाभान्तरायदौर्भाग्यादिकर्म्मानुवन्धव्यवच्छेदः संजात इति॥३९८॥४॥

तत्र च जन्मनि तीर्थंकरस्य भगवतः कस्यचिद् योगे पृच्छा पूर्वजन्मवृत्तान्तविषया तेन कृता । तदनु कथने भगवता, सम्बोधिः पुनर्बोधिलाभरूपः समुद्घटितः । जातवैराग्यश्च पप्रच्छ–किमिह साधुप्रद्वेषापराधे प्रायश्चित्तमुक्तरूपं विधेयम् । भगवानाह–तद्बहुमानस्तेषां साधूनामात्मापेक्षया वहुत्वेन मननं प्रायश्चित्तमिति । ततः पञ्चशतवन्दनाभिग्रहः पञ्चानां साधुशतानां प्रतिदिवसं वन्दनार्थोऽभिग्रहो गृहीतो विनयेन साधुविषये कर्त्तव्य इति ॥ ३९९ ॥ ५ ॥

कथमप्यसम्प्राप्तावभिग्रहस्य 'अभुंज'त्ति तद्दिनेऽन्नपानपरित्यागस्तस्य जायते । एवं चासौ स्थिरप्रतिज्ञः प्रायेणानुपजीवितभोजनः 'छम्मास'त्ति बोधिलाभकालात् षण्मासान् यावज्जीवित्वा 'काल'त्ति कालं कृत्वा ब्रह्मसुरो ब्रह्मलोके देवतया उत्पन्न इति । तत्रापि तीर्थंकरभक्तिर्महाविदेहादिषु नन्दीश्वरादिचैत्येषु च सततमेव भगवतामर्हतां सर्वजगज्जीववत्सलानामपारकरुणारसक्षीरनीरधीनां स्मरणमात्रोपनीतप्रणतजनमनोवाञ्छितानां भक्तिर्वन्दनपूजनधर्मश्रवणादिरूपा समासीत् । कालेन ततश्च्यवनम् । चम्पायां पुरि चन्द्रराजसुतः समुत्पन्न इति ॥ ४०० ॥ ६ ॥

समुत्पन्नस्य च तस्य बालस्य सतः साधुदर्शनमभूत् । दृष्टेषु च तेषु भवान्तरसंस्कारात् प्रीतिः प्रतिबन्धः, स्मरणं पूर्वभवस्य, अधृतिश्चरणरक्षणरूपा तद्विरहे साधुदर्शनाभावे समजनि । ततः पितृभ्यां प्रियसाधुरेष इति नाम कृतम् । वर्द्धने बालभावपरित्यागरूपे प्रव्रज्या दीक्षा साधुप्रव्रज्या तस्यां सम्पन्नायां सत्यामभिग्रहग्रहणं यथा सर्वाङ्गैर्मया साधुविनयः कर्त्तव्य इति ॥ ४०१ ॥ ७ ॥

पार्थकमापद्यत इत्याशंक्याह–औषधज्ञातेन मेघकुमारादिदृष्टान्तेभ्यो दृष्टान्तान्तरभूतेन पुनर्द्वितीयवारमेष एवान्यूनाधिको भवतीति ज्ञेयम्। न चैवं कश्चिद् दोषः, उपदेश्यत्वादस्य। यथोक्तम्—"सज्झायझाणतवओसहेसु उवएसथुइपयाणेसु। संतगुणकित्तणेसु य न हुंति पुणरुत्तदोसा उ ॥ १ ॥" इति ॥ ३९२ ॥

एतदेव समर्थयन्नाह;—

**एत्तो उ इओ वीरा कहिंचि खलिएवि अवगमे तस्स। तह एयजोगउ च्चिय हंदि सकज्जे पयट्टिंसु ॥ ३९३ ॥**

अत एव तदभ्यासस्याभिलषितहेतुत्वाद् हेतोरितोऽशुभानुबन्धाद् वीराः शिवशर्म्मस्पृहावन्तो रुद्रक्षुल्लकादयः, कथञ्चित् तथाविधभव्यत्वपरिपाकाभावात् स्खलितेऽपि निर्वाणपुरप्रापकसमाचारस्य खण्डनेऽपि जाते, अपगमे व्यवच्छेदे तस्य स्खलितस्य सति, तथा प्रागिव एतद्योगादेव शुद्धाज्ञायोगरूपात्, 'हंदीति' पूर्ववत्, स्वकार्ये निर्वाणपुरपथप्रवृत्तिरूपे प्रावर्त्तिषत प्रवृत्तवन्त इति ॥ ३९३ ॥

तानेव दर्शयति;—

**साहुपदोसी खुद्दो चेतियदव्वोवओगि संकासो। सीयलविहारिदेवो एमाई एत्थुदाहरणा ॥ ३९४ ॥**

साधुप्रद्वेषी क्षुल्लको लघुसाधुरूपः चैत्यद्रव्योपयोगी संकाशः शीतलविहारी देवः। एवमादीन्यत्र प्रस्तुते उदाहरणानि ज्ञातव्यानि। आदिशब्दाद् मरीचि–कृष्ण–ब्रह्मदत्तादिजीवा आज्ञाविघटनानन्तरघटितघटिष्यमाणशुद्धाज्ञायोगा गृह्यन्ते ३९४॥

शुद्धाज्ञायोगात्स्वकार्य संसिद्धिख्यापनम्.

उदाहरणान्येवानुक्रमेण भावयन् रुद्रोदाहरणमेवाश्रित्य गाथाष्टकेनाहः—

रुद्दो सिक्खवणाए साहुपओसी विसम्मि सादेवं । आलुगहत्थे साहण देवयकहणाए निच्छूढो ॥३९५॥१॥
उन्निक्खमणं वाही मरणं नरगेसु सत्तसुववातो । कुच्छियतिरिएहिंतो तहा तहा दुक्खपउरेहिं ॥ ३९६ ॥१॥
एगिंदिएसु पायं कायठिती तह ततो उ उवट्टे । सव्वस्स चेव पेसो ठाणेसु इमेसु उववन्नो ॥ ३९७ ॥ ३ ॥
वव्वरपुलिंदचंडाल चम्मगररयगदासभियगेसु । चुन्नउरे सेट्ठिसुओ एत्तो तक्कम्मनिट्ठवणं॥ ३९८ ॥ ४ ॥
तित्थयर जोगपुच्छा कहणे संवोहि किमिह पच्छित्तं । तब्बहुमाणो पंचसयवंदणाभिग्गहो विणए ॥३९९॥
कहवि असंपत्तीए अभुंज छम्मास काल वंभसुरो । तित्थयरभत्ति चवणं चंपाए चंदरायसुओ ॥ ४०० ॥६॥
वालस्स साहुदंसण पीती सरणमधिती य तविरहे । पियसाह नाम वद्धण पवज्जाभिग्गहग्गहणं॥४०१॥७॥
([1]परिवालण आराहण सुक्काई जहक्कमेण उववाओ । सव्वत्थागम पव्वजसेवणा सिद्धिगमणं ति ॥४०२॥८॥)

इह क्वचिद् गच्छे स्वस्थसलिलोज्ज्वलातुच्छसाधुसमाचारे, अत एव समुच्छिन्नस्वपक्षपरपक्षगतसर्वक्लेशे नभस्तल इव स्फुरितविमलमङ्गले महीमण्डलमध्योपलब्धशुद्धप्रसिद्धिवुधे देवमानवमान्यगुरौ प्रपंचितकाव्ये पूर्वविशुद्धानुष्ठानोऽपि

1 इयमपि गाथा सर्वान्यसरसमीपस्थेष्वादर्शपुस्तकेषु नास्ति, टीकाव्याख्यानानुरोधेन तु संदभ्यात्र लिखिता ।

पर्यायेण राहुरिव स्वभावादेव मलिनप्रकृतिरेको रुद्रनामा क्षुल्लकः समभूत्। स च तेषु तेषु साधुसमाचारेषु प्रमाद्यन् स्मारणवारणनोदनप्रतिनोदनादिभिरनवरतमपरसाधुभिः शिक्षापणायां क्रियमाणायां साधुप्रद्वेषी शिक्षापकसाधुविषये तीव्रमत्सरः समजायत। अन्यदा च तेन सर्वमपि तं गच्छमुपहन्तुमिच्छता पापेन पानभाजने विषं निक्षिप्तम्। तस्मिंश्च निक्षिप्ते सति सह देवेन हिताहितचिन्तकेन वर्त्तते यो गच्छः स सहदेवस्तद्भावस्तत्त्वं तत् समभूत्। कथम्। आलुका हस्ते आलुकायां भाजनविशेषे साधुभिर्जलादानार्थं हस्ते प्रसारिते सति साधना निवेदना कृता आकाशान्वितया वाचा, यथा मा गृह्णीतैतज्जलं, विषदोषदूषितत्वादस्य केनेदमसमंजसमाचरितमिति विमर्शव्याकुलेषु साधुषु देवताकथना च संजाता, यथा, रुद्रक्षुल्लकेनैतदनुष्ठितमिति। ततो 'निच्छूढो'त्ति गच्छान्निष्काशितः स्थूलापराधत्वात् तस्य। तदुक्तम्—
"तंबोलपत्तनाएण माहु सेसावि उ विणासेज्जा। निज्जूहंती तं तू मा अन्नोवि तहा कुज्जा" इति ॥ २९५ ॥ १ ॥

गच्छान्निष्काशितस्य च तस्योन्निष्क्रमणं दीक्षात्यागः। ततो व्याधिर्जलोदरादिरूपः, मरणं प्राणत्यागलक्षणं सम्पन्नम्। मृतस्य च नरकेषु सप्तसु रत्नप्रभापृथिवीप्रभृतीषु उपपातो जन्म च बभूव। कुत्सिततिर्यग्भ्यः "अस्सण्णी पढमं" इत्यादिग्रन्थोक्तेभ्यः सकाशात्, कीदृशेभ्यः, तथा तथा दाहवाहबन्धनोत्कर्त्तनादिभिः प्रकारैर्दुःखप्रचुरेभ्यः ॥ २९६ ॥ २ ॥

एकेन्द्रियेषु पृथिवीकायिकादिषु प्रायो बहून् वारान् कायस्थितिरसंख्योत्सर्प्पिण्यवसर्प्पिण्यादिरूपा तस्य समभूत् २९७॥३

वर्व्वरा वर्व्वरकुलवासिनो म्लेच्छाः, पुलिन्दा नाहलाः पर्वताश्रयवासिनः तरुपत्रप्रावरणा म्लेच्छा एव, चण्डालचर्मकाररजकदासभृतकास्तु प्रतीतरूपा एव, ततस्तेषु। तदनन्तरं चूर्णपुरे श्रेष्ठिसुतः समुत्पन्नः। तरुपत्रप्रावरणम्लेच्छादि-

रुद्रक्षुल्लक-
निदर्शनम्.

जन्मसु तत्कर्मनिष्ठापनं साधुप्रद्वेपप्रत्ययोपार्जितं लाभान्तरायदौर्भाग्यादिकर्मानुबन्धव्यवच्छेदः संजात इति ॥३९८॥४॥

तत्र च जन्मनि तीर्थंकरस्य भगवतः कस्यचिद् योगे पृच्छा पूर्वजन्मवृत्तान्तविषया तेन कृता । तदनु कथने भगवता, सम्बोधिः पुनर्बोधिलाभरूपः समुद्घटितः । जातवैराग्यश्च पप्रच्छ–किमिह साधुप्रद्वेपापराधे प्रायश्चित्तमुक्तरूपं विधेयम् । भगवानाह–तद्बहुमानस्तेषां साधूनामात्मापेक्षया बहुत्वेन मननं प्रायश्चित्तमिति । ततः पञ्चशतवन्दनाभिग्रहः पञ्चानां साधुशतानां प्रतिदिवसं वन्दनार्थोऽभिग्रहो गृहीतो विनयेन साधुविषये कर्त्तव्य इति ॥ ३९९ ॥ ५ ॥

कथमप्यसम्प्राप्तावभिग्रहस्य 'अभुंज'त्ति तद्दिनेऽन्नपानपरित्यागस्तस्य जायते । एवं चासौ स्थिरप्रतिज्ञः प्रायेणानुपजीवितभोजनः 'छम्मास'त्ति बोधिलाभकालात् षण्मासान् यावज्जीवित्वा 'काल'त्ति कालं कृत्वा ब्रह्मसुरो ब्रह्मलोके देवतया उत्पन्न इति । तत्रापि तीर्थंकरभक्तिर्महाविदेहादिषु नन्दीश्वरादिचैत्येषु च सततमेव भगवतामर्हतां सर्वजगज्जीववत्सलानामपारकरुणारसक्षीरनीरधीनां स्मरणमात्रोपनीतप्रणतजनमनोवाञ्छितानां भक्तिर्वन्दनपूजनधर्मश्रवणादिरूपा समासीत् । कालेन ततश्च्यवनम् । चम्पायां पुरि चन्द्रराजसुतः समुत्पन्न इति ॥ ४०० ॥ ६ ॥

समुत्पन्नस्य च तस्य बालस्य सतः साधुदर्शनमभूत् । दृष्टेषु च तेषु भवान्तरसंस्कारात् प्रीतिः प्रतिबन्धः, स्मरणं पूर्वभवस्य, अधृतिश्चरणरक्षणरूपा तद्विरहे साधुदर्शनाभावे समजनि । ततः पितृभ्यां प्रियसाधुरेष इति नाम कृतम् । वर्द्धने बालभावपरित्यागरूपे प्रव्रज्या दीक्षा साधुप्रव्रज्या तस्यां सम्पन्नायां सत्यामभिग्रहग्रहणं यथा सर्वाङ्गैर्मया साधुविनयः कर्त्तव्य इति ॥ ४०१ ॥ ७ ॥

कर्मणो लाभान्तरायादेः शेषोऽवशिष्टोंऽशः, तस्य भावस्तत्ता, तस्यां सत्यामेव, परं तत्रापि दारिद्र्यं निर्द्धनत्वम्, असम्प्राप्तिर्वाञ्छितस्य। पुनः पुनरनेकश इत्यर्थः, चित्तनिर्वेदो हृदयोद्वेगरूपः समभूत् ॥ ४०६ ॥ ४ ॥

अन्यदा च केवलियोगे जाते सति पृच्छा तेन कृता। यथा भगवन्! मया भवान्तरे किं कर्म कृतं, येनेत्थमसम्पद्यमानमनोरथोऽहं सम्भूतः? कथने संकाशादिभवग्रहणवृत्तान्तस्य केवलिना कृते, बोधिरुक्तरूपस्तथैव क्षुल्लकजीववत् संवेगस्तस्य समपद्यत। प्रपच्छ च किमित्यत्र चैत्यद्रव्योपयोगापराधे मम कर्त्तुमुचितमिदानीं साम्प्रतम्? भणितं च केवलिना, यथा—चैत्यद्रव्यस्य जिनभवनबिम्बयात्रास्नानादिप्रवृत्तिहेतोर्हिरण्यादिरूपस्य वृद्धिरुपचयरूपोचिता कर्त्तुमिति ॥ ४०७ ॥ ५ ॥

ततोऽस्य ग्रासाच्छादनमात्रं प्रतीतरूपमेव मुक्त्वा यत् किंचिद् मम व्यवहरतः सम्पत्स्यते, तत् सर्वं चैत्यद्रव्यं ज्ञेयमिति। इत्यभिग्रहो यावज्जीवमभूदिति ॥ ४०८ ॥ ६ ॥

ततः शुभभावप्रवृत्तितो लाभान्तरायापायहेतोः शुभस्य पूर्वोक्ताभिग्रहलक्षणस्य भावस्य प्रवृत्तेरुद्भवात् प्रक्षीयमाणक्लिष्टकर्म्मणः सम्प्राप्तिर्धनधान्यादिलाभरूपा जज्ञे। त्यक्तमुर्च्छस्य चाभिग्रहे प्रागुक्ते निश्चलता स्थैर्यलक्षणा सम्पन्ना। कालेन च भूयसो द्रव्यस्योपचये सम्पन्ने सति परद्रव्यसाहाय्यनिरपेक्षत्वेन 'चेईहरकारावण'त्ति तस्यामेव तगरायां चैत्यगृहकारापणं विहितं। तत्र चैत्यगृहे सदा सर्वकालं भोगपरिशुद्धिः चैत्यगृहासेवननिर्मलता कृता अभोगपरिहारेण ॥४०९॥७॥

अभोगमेव दर्शयति—निष्ठीवनादिकरणमिह निष्ठीवनं मुखश्लेष्मपरित्यागः, आदिशब्दाद् मूत्रपुरीषताम्बूलकर्णनासि-

कादिमलप्रोज्झनग्रहः । असत्कथा स्त्रीभक्तचोरजनपदादिवृत्तान्तनिवेदनलक्षणा । अनुचितासनादि चानुचितमासनं
गुरुजनासनापेक्षयोच्चं समं वा, आदिशब्दात् पर्यस्तिकादिबन्धग्रहः । एतत्सर्वं, किमित्याह–आयतने जिनगृहेऽभोगो
वर्त्तते । इह नञ् कुत्सार्थः, यथाऽत्र—"जह दुव्वयणमवयणं कुच्छियसीलं असीलमसईए । भण्णइ तह णाणंपि हु
मिच्छद्दिट्ठिस्स अण्णाणं ॥ १ ॥" इति । ततः कुत्सितो भोगश्चैत्यगृहोपजीवनमभोगः, चैत्याशातनाफलत्वेन तस्य दुर्ग-
तिहेतुत्वात् । अत्र भोगपरिशुद्धौ देवा भवनपत्यादय उदाहरणम् ॥ ४१० ॥ ८ ॥

एतदेव भावयति–देवेत्यादि । देवगृहके नन्दीश्वरादिगतचैत्यभवनरूपे देवा जिनजन्ममहिमादिषु सन्तः विषयविष-
मोहिता अपि दुष्टचारित्रमोहोदयाद् न नैव कदाचित् कस्यामपि वेलायामप्सरोभिरपि स्वप्राणाधिकप्रेमपदप्राप्ताभिः
समं सहासखेलाद्यपि, इह हासः प्रतीत एव, खेला क्रीडा, आदिशब्दाच्चित्रसूचीवचनग्रहः, अपिशब्दाच्च संभोगादिस्थू-
लशेषापराधावरोधो दृश्यः, कुर्वन्ति विदधति । यदत्राप्सरोग्रहणं तत् तासां हासक्रीडादिस्थानत्वेन ताभिः सह तेषां
हासादिपरिहारस्य दुष्करत्वख्यापनार्थमिति ॥ ४११ ॥ ९ ॥

इत्येवमुक्तनीत्या संकाशजीवो महानुभावः समुद्घटितप्रशस्तसामर्थ्यः सर्वत्रापीहलोकफलेषु परलोकफलेषु च कृत्येष्व-
विधिभावपरित्यागेनानुचितप्रवृत्तिनिरोधरूपेण चरित्वा निषेव्य विशुद्धधर्म्मं श्रुतचारित्रलक्षणमस्खलिताराधको निर्वा-
णस्य सञ्जातः । यदत्र साधुप्रद्वेषिणः क्षुल्लकजीवस्य नरकप्रवेशेनैकेन्द्रियेषु कायस्थितिवासवशेन चानन्तभवभ्रमणरूपः
संसार उक्तः, संकाशश्रावकजीवस्य तु "संखेज्जे हिंडिऊण भवगहणे" इतिवचनात् संख्यातभवग्रहणरूप एव । तत्रायम-

परिपालनमभिग्रहस्याराधना पर्यन्ते । 'सुकाइ' इति शुक्रादिषु देवलोकेषु यथाक्रमेण परिपाट्याधिकाधिकसंयमशुद्धिवशादुपपातोऽभूत् । पर्यन्तभवे सर्वार्थागमप्रव्रज्यासेवना चैव विज्ञेया—सर्वार्थाद् विमानात् सर्वविमानमालामौलिमाणिक्यकल्पाद् इहागमनम् । तत्र च प्रव्रज्या । तस्यामपि च समुपलब्धकेवलालोकस्यास्य सिद्धिगमनमभूदिति । व्याख्यातं साधुप्रद्वेषी क्षुल्लक इति ॥ ४०२ ॥ ८ ॥

अथ चैत्यद्रव्योपयोगी संकाश इति व्याख्यायते । तत्र—

संकासु गंधिलावइ सक्कवयारम्मि चेतिए कहवि । चेतियदव्वुवओगी पमायओ मरण संसारो ॥ ४०३ ॥ १ ॥
तण्हाछुहाभिभूओ संखेज्जे हिंडिऊण भवगहणे । घायण-वहण-चुन्नग-वियणाओ पाविउं बहुसो ४०४ ॥२॥
दारिद्दकुलुप्पत्तिं दरिद्दभावं च पाविउं बहुसो । बहुजणधिक्कारं तह मणुएसुवि गरहणिज्जं तु ॥ ४०५ ॥ ३ ॥
तगराए इब्भसुओ जाओ तक्कम्मसेसयाए उ । दारिद्दमसंपत्ती पुणो पुणो चित्तनिव्वेओ ॥ ४०६ ॥ ४ ॥
केवलिजोगे पुच्छा कहणे बोही तहेव संवेगो । किं एत्थसुचियमिण्हिं चेइयदव्वस्स वुड्ढित्ति ॥ ४०७ ॥ ५ ॥
गासच्छादणमेत्तं मोत्तुं जं किंचि मज्झ तं सव्वं । चेतियदव्वं णेयं अभिग्गहो जावजीवंति ॥ ४०८ ॥ ६ ॥
सुहभावपवित्तीओ संपत्तीभिग्गहम्मि निच्चलया । चेतीहरकारावण तत्थ सया भोगपरिसुद्धी ॥४०९॥ ७ ॥

निट्ठीवणाइकरणं असक्कहा अणुचियासणादी य। आयतणम्मि अभोगो एत्थं देवा उयाहरणं ॥४१०॥८॥
देवहरयम्मि देवा विसयविसविमोहियावि न कयाइ। अच्छरसाहिंपि समं हासक्खेडाइवि करेंति॥४११॥९
इय सो महाणुभावो सव्वत्थवि अविहिभावचागेण। चरियं विसुद्धधम्मं अक्खलियाराहगो जाओ४१२॥१०

इह संकाशो नाम श्रावकः स्वभावादेव भववैराग्यवान् यथोदितश्रावकसमाचारसारव्यवहारः 'गंधिलावइ'त्ति गन्धिलावत्यां पुरि समस्ति स्म। स च शक्रावतारे चैत्ये प्रशस्तचित्तःसंश्चिन्तां चकार। अन्यदा च कथमपि गृहव्याक्षेपादिकारणैश्चैत्यद्रव्योपयोगी देवद्रव्योपजीवकः प्रमादतोऽज्ञानसंशयविपर्यासादिरूपात् संजातः सन्ननालोचिताप्रतिक्रान्तो मरणमाप ततः संसारे ॥ ४०३ ॥ १ ॥

तृष्णाक्षुधाभिभूतः सन् संख्यातानि हिण्डित्वा भवग्रहणानि। तेषु च घातनेन शस्त्रादिभिः, वाहनेन पृष्ठकण्ठभारारोपणपूर्वकदेशान्तरसंचारणस्वरूपेण; चूर्णनेन च या वेदनास्ताः प्राप्य वहुशोऽनेकशः ॥ ४०४ ॥ २ ॥

तथा; 'दारिद्दकुलुप्पत्तिं' इति दरिद्रकुलोत्पत्तिं यावज्जन्म दरिद्रभावं च तत्र प्राप्य, वहुशो वहुजनधिकारं यतः कुतोऽपि निमित्ताद् अनिमित्ताच्च वहोर्जनाद् धिक्कारमवर्णवादं, तथेति समुच्चये, मनुष्येष्वपि समुत्पन्नः, गर्हणीयमन्यदपि पुत्रकलत्रादिकं निन्द्यमेव प्राप्य ॥ ४०५ ॥ ३ ॥

पश्चात्तगरायां पुरि इभ्यसुतः सञ्जातः। कस्यां सत्यामित्याह–तत्कर्मशेषतायां तु तस्य चैत्यद्रव्योपयोगकालोपार्जितस्य

कर्मणो लाभान्तरायादेः शेषोऽवशिष्टोंऽशः, तस्य भावस्तत्ता, तस्यां सत्यामेव, परं तत्रापि दारिद्र्यं निर्द्धनत्वम्, असम्प्राप्तिर्वाञ्छितस्य । पुनः पुनरनेकश इत्यर्थः, चित्तनिर्वेदो हृदयोद्वेगरूपः समभूत् ॥ ४०६ ॥ ४ ॥

अन्यदा च केवलियोगे जाते सति पृच्छा तेन कृता । यथा भगवन्! मया भवान्तरे किं कर्म कृतं, येनेत्थमसम्पद्यमानमनोरथोऽहं सम्भूतः? कथने संकाशादिभवग्रहणवृत्तान्तस्य केवलिना कृते, वोधिरुक्तरूपस्तथैव क्षुल्लकजीववत् संवेगस्तस्य समपद्यत । प्रपच्छ च किमित्यत्र चैत्यद्रव्योपयोगापराधे मम कर्त्तुमुचितमिदानीं साम्प्रतम्? भणितं च केवलिना, यथा—चैत्यद्रव्यस्य जिनभवनविम्बयात्रास्नानादिप्रवृत्तिहेतोर्हिरण्यादिरूपस्य वृद्धिरुपचयरूपोचिता कर्त्तुमिति ॥ ४०७ ॥ ५ ॥

ततोऽस्य ग्रासाच्छादनमात्रं प्रतीतरूपमेव मुक्त्वा यत् किंचिद् मम व्यवहरतः सम्पत्स्यते, तत् सर्वं चैत्यद्रव्यं ज्ञेयमिति । इत्यभिग्रहो यावज्जीवमभूदिति ॥ ४०८ ॥ ६ ॥

ततः शुभभावप्रवृत्तितो लाभान्तरायापायहेतोः शुभस्य पूर्वोक्ताभिग्रहलक्षणस्य भावस्य प्रवृत्तेरुद्भवात् प्रक्षीयमाणक्लिष्टकर्म्मणः सम्प्राप्तिर्धनधान्यादिलाभरूपा जज्ञे । त्यक्तमुर्च्छस्य चाभिग्रहे प्रागुक्ते निश्चलता स्थैर्यलक्षणा सम्पन्ना । कालेन च भूयसो द्रव्यस्योपचये सम्पन्ने सति परद्रव्यसाहाय्यनिरपेक्षत्वेन 'चेईहरकारावण'त्ति तस्यामेव तगरायां चैत्यगृहकारापणं विहितं । तत्र चैत्यगृहे सदा सर्वकालं भोगपरिशुद्धिः चैत्यगृहासेवननिर्मलता कृता अभोगपरिहारेण ॥४०९॥७॥

अभोगमेव दर्शयति—निष्ठीवनादिकरणमिह निष्ठीवनं मुखश्लेष्मपरित्यागः, आदिशब्दाद् मूत्रपुरीषताम्बूलकर्णनासि-

कादिमलप्रोज्झनग्रहः । असत्कथा स्त्रीभक्तचोरजनपदादिवृत्तान्तनिवेदनलक्षणा । अनुचितासनादि चानुचितमासनं गुरुजनासनापेक्षयोच्चं समं वा, आदिशब्दात् पर्यस्तिकादिबन्धग्रहः । एतत्सर्वं, किमित्याह—आयतने जिनगृहेऽभोगो वर्त्तते । इह नञ् कुत्सार्थः, यथाऽत्र—"जह दुवयणमवयणं कुच्छियसीलं असीलमसईए । भण्णइ तह णाणंपि हु मिच्छद्दिट्ठिस्स अण्णाणं ॥ १ ॥" इति । ततः कुत्सितो भोगश्चैत्यगृहोपजीवनमभोगः, चैत्याशातनाफलत्वेन तस्य दुर्गतिहेतुत्वात् । अत्र भोगपरिशुद्धौ देवा भवनपत्यादय उदाहरणम् ॥ ४१० ॥ ८ ॥

एतदेव भावयति—देवेत्यादि । देवगृहके नन्दीश्वरादिगतचैत्यभवनरूपे देवा जिनजन्ममहिमादिषु सन्तः विषयविषमोहिता अपि दुष्टचारित्रमोहोदयाद् न नैव कदाचित् कस्यामपि वेलायामप्सरोभिरपि स्वप्राणाधिकप्रेमपदप्राप्ताभिः समं सहासखेलाद्यपि, इह हासः प्रतीत एव, खेला क्रीडा, आदिशब्दाच्चित्रसूचीवचनग्रहः, अपिशब्दाच्च संभोगादिस्थूलशेषापराधावरोधो दृश्यः, कुर्वन्ति विदधति । यदत्राप्सरोग्रहणं तत् तासां हासक्रीडादिस्थानत्वेन ताभिः सह तेषां हासादिपरिहारस्य दुष्करत्वख्यापनार्थमिति ॥ ४११ ॥ ९ ॥

इत्येवमुक्तनीत्या संकाशजीवो महानुभावः समुद्घटितप्रशस्तसामर्थ्यः सर्वत्रापीहलोकफलेषु परलोकफलेषु च कृत्येष्वविधिभावपरित्यागेनानुचितप्रवृत्तिनिरोधरूपेण चरित्वा निषेव्य विशुद्धधर्म्मं श्रुतचारित्रलक्षणमस्खलिताराधको निर्वाणस्य सञ्जातः । यदत्र साधुप्रद्वेषिणः क्षुल्लकजीवस्य नरकप्रवेशेनैकेन्द्रियेषु कायस्थितिवासवशेन चानन्तभवभ्रमणरूपः संसार उक्तः, संकाशश्रावकजीवस्य तु "संखेज्जे हिंडिऊण भवगहणे" इतिवचनात् संख्यातभवग्रहणरूप एव । तत्रायम-

भिप्रायः—प्रमाददोषादेव चैत्यद्रव्योपयोगः संकाशस्य संवृत्तः, इति नासौ नरकप्रवेशेन तद्दोषवशोद्भवं कर्म्मानुभूतवान्, किन्तु कुमानुषत्वतिर्यक्त्वभवेषु तृष्णाबुभुक्षाघातनवाहनाद्यधिसहनद्वारेण । इतरस्त्वाकुट्टिकया सर्वमपि हन्तुमुपस्थित इत्यत्यन्तदारुणपरिणामाद् नरकादिप्रवेशफलमनन्तसंसारावहं कर्म समुपार्जितवान् । इत्यनयोरयं संसारभ्रमणविशेषः ॥ ४१२ ॥ १० ॥ समाप्तं संकाशश्रावकज्ञातम् ।

**एत्तोच्चिय भणियमिणं पुव्वायरिएहिं एत्थ वत्थुम्मि । अन्नयवतिरेगगयं परिसुद्धं सुद्धभावेहिं ॥ ४१३ ॥**

यत एव चैत्यद्रव्योपयोगोऽनर्थफलोऽत एव हेतोर्भणितमिदं वक्ष्यमाणं पूर्वाचार्यैरत्र चैत्यद्रव्योपयोगानर्थचिन्तालक्षणवस्तुनि चिन्तयितुमधिकृतेऽन्वयव्यतिरेकगतमन्वयेनास्मिन् विहिते इदं स्यादेवंलक्षणेन व्यतिरेकेण चैतद्विपरीतेन युतं परिशुद्धं स्फुटरूपमेव शुद्धभावैरज्ञानादिदोषोपघातरहितमनोभिः ॥ ४१३ ॥

भणितमेव दर्शयति;—

**चेइयदव्वं साहारणं च जो दुहति मोहियमतीओ । धम्मं व सो न याणाति अहवा बद्धाउओ पुव्विं ॥ ४१४ ॥**

चैत्यद्रव्यं चैत्यभवनोपयोगि धनधान्यादि काष्ठपाषाणादि च, तथा साधारणं च द्रव्यं, तथाविधव्यसनप्राप्तौ शेषद्रव्यान्तराभावे जिनभवनजिनबिम्बचतुर्विधश्रमणसंघजिनागमलेखनादिषु धर्मकृत्येषु सीदत्सु सत्सु यदुपष्टम्भकत्वमानीयते, तत्र यो द्रुह्यति विनाशयति । कीदृशः सन्नित्याह—मोहितमतिको लोभातिरेकेण मोहमानीता मोहितामतिरस्येति

ममास्तः। धर्म्मं वा जिनप्रणीतं स न जानाति। अनेन च तस्य मिथ्यादृष्टित्वमुक्तम्। अथवा, जानन्नपि किञ्चिद् धर्म्मं बद्धायुष्को नरकादिदुर्गतौ पूर्वं चैत्यद्रव्यादिचिन्ताकालात् प्राग् इति ॥ ४१४ ॥

तथा—

**चेइयदव्वविणासे तद्दव्वविणासणे दुविहभेए। साहू उवेक्खमाणो अणंतसंसारिओ भणिओ ॥ ४१५ ॥**

इह चैत्यद्रव्यं क्षेत्रहिरण्यग्रामवनवास्त्वादिरूपं तत्तत्समयवशेन चैत्योपयोगितया सम्पन्नं तस्य विनाशे चिन्तानियुक्तैः पुरुषैः सम्यगप्रतिजागर्यमाणस्य स्वत एव परिभ्रंशे सम्पद्यमाने, तथा तद्द्रव्यविनाशने चैत्यद्रव्यविलुण्टने परैः क्रियमाणे। कीदृशे इत्याह—द्विविधभेदे वक्ष्यमाणविनाशनीयद्विविधवस्तुविषयत्वेन द्विप्रकारे। साधुः सर्वसावद्यव्यापारपराङ्मुखोऽपि यतिरुपेक्षमाणो माध्यस्थ्यमवलम्बमानोऽनन्तसंसारिकोऽपरिमाणभवभ्रमणो भवति, सर्वज्ञाज्ञोल्लंघनात्। उक्तं च पञ्चकल्पभाष्ये, यथा—“चोएइ चेइयाणं खेत्तहिरण्णाइं गामगावाइं। मग्गंतस्स हु जइणो तिगरणसुद्धी कहं नु भवे? ॥ १ ॥ भण्णइ एत्थ विभासा जो एयाइं सयं विमग्गेज्जा। न हु तस्स होइ सुद्धी अह कोइ हरेज्ज एयाइं ॥ २ ॥ सव्वत्थामेण तहिं संघेणं होइ लग्गियव्वं तु। सचरित्तचरित्तीणं एवं सव्वेसिं सामन्नं ॥ ३ ॥” इति ॥ ४१५ ॥

अथ यद् द्रव्यद्वैविध्याद् द्विविधं विनाशनमुक्तं, तदेव दर्शयति;—

**जोग्गं अतीयभावं मूलुत्तरभावओ अहव कट्ठं। जाणाहि दुविहभेयं सपक्खपरपक्खमाइं च ॥ ४१६ ॥**

योग्यं चैत्यगृहनिष्पत्तौ समुचितमेकं, द्वितीयं तु अतीतभावं चैत्यगृहनिष्पत्तिमपेक्ष्य समुत्तीर्णयोग्यतापर्यायं लग्नोत्पादितमित्यर्थः । मूलोत्तरभावतो वा काष्ठमुपलक्षणत्वाद् उपलेष्टकादि वा ग्राह्यं जानीहि द्विविधभेदं विनाशनीयम् । इह मूलभावापन्नं स्तम्भकुम्भिकापट्टादियोग्यं काष्ठदलम्, उत्तरभावापन्नं तु पीठप्रभृत्युपर्याच्छादकतया प्रवृत्तम् । इत्थं विनाशनीयद्वैविध्याद् विनाशनं द्विविधमुक्तम् । सम्प्रति विनाशकभेदात्तदाह—स्वपक्षपरपक्षादि वा । स्वपक्षः साधुश्रावकादिरूपः, परपक्षस्तु मिथ्यादृष्टिलक्षणो यश्चैत्यद्रव्यविनाशकः, आदिशब्दाद् मिथ्यादृष्टिभेदा एव गृहस्थाः पाखण्डिनश्च चैत्यद्रव्यविनाशका गृह्यन्ते । ततोऽयमभिप्रायः—योग्यातीतभेदाद् मूलोत्तरभेदात् स्वपक्षपरपक्षगतयोर्गृहस्थपाखण्डिरूपयोर्वा विनाशकयोर्भेदात् प्रागुक्तं तद्द्रव्यविनाशनं द्विविधभेदमिति ॥ ४१६ ॥

अथ चैत्यद्रव्यरक्षाफलमभिधातुमाह;—

**जिणपवयणवुड्ढिकरं पभावगं णाणदंसणगुणाणं । रक्खंतो जिणदव्वं परित्तसंसारिओ होइ ॥ ४१७ ॥**

जिनप्रवचनवृद्धिकरं भगवदर्हदुक्तशासनोन्नतिसम्पादकम्, अत एव(प्रभावकं)विभावनं विस्तारहेतुः । केषामित्याह—ज्ञानदर्शनगुणानाम् । तत्र ज्ञानगुणा वाचना-प्रच्छना-परावर्त्तना-अनुप्रेक्षाधर्मकथालक्षणाः, दर्शनगुणाश्च सम्यक्त्वहेतवो जिनयात्रादिमहामहरूपाः रक्षंस्त्रायमाणो जिनद्रव्यं निरूपितरूपं, साधुः श्रावको वा परित्तसंसारिकः परिमितभवभ्रमणभाग् भवतीति । तथा हि—जिनद्रव्ये रक्षिते सति तद्विनियोगेन चैत्यकार्येषु प्रसभमुत्सर्प्पत्सु भविनो भव्याः समुद्गतोदग्रहर्षा निर्वाणावन्ध्यकारणबोधिबीजादिगुणभाजो भवन्तीति । तथा, चैत्याश्रयेण संविग्नगीतार्थसाधुभिरनवरतं सिद्धा-

विनाशन-
द्वैविध्यम्
चैत्यद्र०
रक्षणफ-
लञ्च.

न्तव्याख्यानादिभिस्तथा तथा प्रपञ्च्यमानैः सम्यग्ज्ञानगुणवृद्धिः सम्यग्दर्शनगुणवृद्धिश्च सम्पद्यते । इति चैत्यद्रव्यरक्षाकारिणो मोक्षमार्गानुकूलस्य प्रतिक्षणं मिथ्यात्वादिदोषोच्छेदस्य युज्यत एव परीत्तसंसारिकत्वमिति ॥ ४१७ ॥

अथ चैत्यद्रव्यवृद्धिकरस्य फलमाह;—

**जिणपवयणवुड्ढिकरं पभावगं णाणदंसणगुणाणं । वड्ढंतो जिणदव्वं तित्थगरत्तं लहइ जीवो ॥ ४१८ ॥**

पूर्वार्द्धव्याख्या पूर्ववत् । वर्द्धयन् अपूर्वापूर्वद्रव्यप्रक्षेपेण वृद्धिं नयन् जिनद्रव्यं, तीर्थकरत्वं चतुर्वर्णश्रीश्रमणसंघकर्तृत्वलक्षणं लभते जीवः ॥ ४१८ ॥

**चेइयकुलगणसंघे उवयारं कुणइ जो अणासंसी । पत्तेयवुद्ध गणहर तित्थयरो वा तओ होइ ॥ ४१९ ॥**

चैत्यं च कुलं च गणश्चेति द्वंद्वैकत्ववद्भावश्चैत्यकुलगणसंघं तत्र विषये उपकारमुपष्टंभं करोति यः प्राणी, अनाशंसी ऐहिकपारलौकिकफलाभिलाषविकलः सन् । किमित्याह 'पत्तेयवुद्ध'त्ति प्रत्येकवुद्धो वाह्यवृषभादिदर्शनसापेक्षदीक्षालाभः, 'गणहर'त्ति गणधरस्तीर्थकरशिष्यो मातृकापदत्रयोपलंभानन्तरं समुद्घाटितसमस्तश्रुतोपयोगः, तीर्थकरो जिनपतिः, वा शब्दो विकल्पार्थः, तकश्चैत्याद्युपकारको जीवो भवति । इह चैत्यं प्रतीतरूपमेव, कुलं चान्द्रनागेन्द्रादि, गणस्त्रयाणां कुलानां समानसामाचारीकाणामत एव परस्परसापेक्षाणां समवायः, संघस्तु साधुसाध्वीश्रावकश्राविकासमुदाय इति ॥ ४१९ ॥

नन्नु चैत्यद्रव्यरक्षादिपरिणामस्यैकाकारत्वात् कथमयं प्रत्येकबुद्धादिफलभेदः स्यादित्याह;—

परिणामविसेसेणं एत्तो अन्नयरभावमहिगम्म। सुरमणुयासुरमहिओ सिज्झति जीवो धुयकिलेसो॥४२०

परिणामविशेषेण मृदुमध्याधिमात्ररूपतया परिणामानां भेदेन, इत एषु प्रत्येकबुद्धादिषु मध्येऽन्यतरभावं प्रत्येकबुद्धादिलक्षणमधिगम्य प्राप्य सुरमनुजासुरमहितो देवः मानवदानवाभ्यर्च्चितः सिध्यति निष्ठितार्थो भवति जीवो धुतक्लेशः सन् ॥ ४२० ॥

अथ शीतलविहारीदेव इत्येतद्गाथाष्टकेन व्याख्यातुमाह;—

देवो नामणगारो कम्मगुरू सीयलो विहारेण । निद्धंधसो त्ति मरिउं भमिओ संसारकंतारे ॥ ४२१ ॥ १ ॥
सीयलविहारओ खलु भगवंतासायणा णिओगेण। तत्तो भवो अणंतो किलेसबहुलो जओ भणियं॥४२२॥२
तित्थयरपवयणसुयं आयरियं गणहरं महिड्ढीयं । आसायंतो बहुसो अणंतसंसारिओ होति ॥ ४२३ ॥ ३ ॥
सो तम्मि तव्विवागा हीणो दुहिओ य पेसणयकारी। विहलकिरियाइभावो पायं होत्तूण मंदमती ४२४॥४
खविऊण तयं कम्मं जाओ कोसंबिमाहणसुओ त्ति। विज्जामंतोऽगुरुगो चिंता ओसरण निक्खमणं४२५॥५
लोयावन्ना पुच्छा निमित्तकहणम्मि परमसंवेगा। सवत्थुज्जयजोगो सक्कथुती देवहत्थिरिया॥ ४२६ ॥ ६ ॥

चैत्यादि-
द्रव्यरक्ष-
णेफलभेद-
बीजम्.

॥ २३२ ॥

मूइंगलियारक्खणगयचित्तो हत्थिणा समुक्खित्तो। मिच्छादुक्कडसंवेगवुड्डिओ गतिदुगक्खवणं ४२७॥७
वेमाणियसुहमाणुससुद्धाचारपरिपालणाणिरओ। सत्तट्ठजम्ममज्झे चक्की होऊण संसिद्धो ॥ ४२८ ॥८॥

देवो नामानगारः साधुरेक आसीत्। कीदृश इत्याह—कर्मगुरुः प्रबलचारित्रमोहः शीतलः शिथिलो विहारेण साधुसामाचारीरूपेण। ततो निद्धंधसो मूलगुणोत्तरगुणातिचाराभीरुः सन्, इत्यतोऽपराधाद् मृत्वा भ्रान्तः पर्यटितः संसारकान्तारे इति ॥ ४२१ ॥ १ ॥

एतदेव भावयितुमाह—शीतलविहारत उक्तरूपात्, खलुर्वाक्यालंकारे, भगवदाशातना तीर्थकरलाघवानयनरूपा नियोगेन निश्चयेन सम्पद्यते। शीतलविहारेण हि तेषु तेषु प्रमादस्थानेषु समापद्यमानं साधुमालोक्य तथाविधलोकैर्नूनमयमसमंजसरूपो व्यवहार एतच्छास्त्रकारैरेव निरूपित इति मनसि सम्प्रधार्य परिभावयन् भगवति जिने भृशमवज्ञाकारकस्तानि तान्याशातनापदानि समाचरति, इत्यतः शीतलविहारिणः साधोः स्वयमेवाज्ञोल्लंघनहेतुभावाद् नियतमेव भगवदाशातना जायते। ततो भगवदाशातनातो भवः संसारोऽनन्तोऽपरिमाणः क्लेशबहुलः शारीरमानसबाधाभिभूतो भवति यतो भणितमागमे ॥ ४२२ ॥ २ ॥

तदेव दर्शयति—तीर्थंकरप्रवचनश्रुतं तत्र तीर्थंकरश्चतुर्वर्णश्रीश्रमणसंघप्रसूतिहेतुः पुरुषविशेषो वृषभादिः, प्रवक्ति वस्तुतत्त्वमिति प्रवचनं संघः, श्रुतं द्वादशाङ्गम्, आचार्यं युगप्रधानं, गणधरं तीर्थंकरशिष्यप्रधानशिष्यरूपं, महर्द्धिकं

वैक्रियवादादिलब्धिमन्तमाशातयंस्तदुत्प्रेक्षितदोषोद्घोषणेनानुचिताचरणेन वाऽवज्ञास्थानमानयन् बहुशोऽनेकधा अनन्तसंसारिको भवति, सम्यक्त्वादिगुणघातकमिथ्यात्वादिकर्म्मोपार्जनेन दूरं सन्मार्गपराङ्मुखस्य [1]तत्रयोपस्थापना[2]चारणादिति ॥ ४२३ ॥ ३ ॥

अथ प्रस्तुतं सम्बन्धयन्नाह—स देवनामा साधुस्तस्मिन् संसारे तद्विपाकाच्छीतलविहारोपात्तकर्म्मोदयाद् हीनो जातिकुलादिभिः, दुःखितश्च शारीरदुःखोपनिपातैः, प्रेषणककारी परगृहकर्मकरः सन्, तथा विफलो निष्फलतामागतः क्रियादिः कायक्रियावचनचिन्तारूपो भावो व्यापारो यस्य स तथाप्रायो भूत्वा मन्दमतिर्हिताहितविवेकशून्यमतिः ॥४२४॥४

क्षपयित्वा समुच्छेद्य तकं कुकर्म शीतलविहारोपात्तं जातः कौशाम्बीमाहनसुतः कौशाम्ब्यां पुरि ब्राह्मणसूनुरिति । विद्यावान् चतुर्दशविद्यास्थानपरपारगामी, परं अगुरुको राजभवनादिषु महाजनस्थानेषु क्वचिदप्यप्राप्तगौरवः समभूत् । ततश्चास्य चिन्तासमजनि निजविषयप्रवृत्तिजनागौरवगोचरा कथमहमनपराधोऽपि जनैरित्थमेवावज्ञातः कृतः । 'ओसरण'त्ति तस्मिंश्च समये कस्यचिदर्हतो भगवतस्तत्र समवसरणं समजनि । श्रुतधर्मस्य चास्य निष्क्रमणं व्रतमभूत्तदन्ते ॥४२५॥५

तत्र च लोकावज्ञा । पृच्छा यथा भगवन्! कुतो निमित्तादहमवज्ञातो जातः । निमित्तकथने च शीतलविहाररूपस्य हेतो पुनर्निवेदने कृते परमसंवेगः समुदपादि । ततः सर्वत्र साधुसमाचारे उद्यतयोगः सोपयोगप्रवृत्तिः स बभूव । अन्यदा शक्रस्तुतिरुद्यतयोगविषया जाता । ततः 'देवहत्थिरिय'त्ति एकेन देवेन शक्रवचनमश्रद्दधाता हस्तीभूय ईर्यापथ-

१ क. ख. ग. 'तत्त्वयोपस्थापना–' २ घ.—नाचरणादिति ।

प्रथमसमितिरूपा परीक्षितुमारब्धा ॥ ४२६ ॥ ६ ॥ ॥

कथमित्याह—मार्गप्रवृत्तसञ्चरणानां मुइंगलिकानां कीटिकानामित्यर्थः, यद् रक्षणं तत्र गतं चित्तं यस्य स तथा हस्तिना समुत्क्षिप्तोऽसौ । ततो भूमौ निपतितस्य कीटिकारक्षणैकपरिणतेरशक्यरक्षं तदुपद्रवं स्वकायेन पश्यतः स्वजीवितव्यनिरपेक्षस्य यत् पुनः पुनर्मिथ्यादुष्कृतं तेन या संवेगवृद्धिस्तस्याः सकाशाद् गतिद्विकस्य नारकतिर्यग्गतिलक्षणस्य क्षपणं निर्लेपनमस्याभूत् तद्गतिसम्पादककर्म्मानुबन्धव्यवच्छेद इत्यर्थः ॥ ४२७ ॥ ७ ॥

वैमानिकेषु सौधर्म्मादिस्वर्गोद्भवदेवेषु शुभमनुष्येषु च यः शुद्धाचारो निर्मलस्वावस्थोचितानुष्ठानरूपस्तस्य परिपालनायां निरतः समाहितः सन् सप्ताष्टजन्ममध्ये, तत्र सप्त देवभवाः कौशाम्बीब्राह्मणसुतजन्मप्रभृतयश्चाष्टौ मनुष्यभवास्तेषां मध्येऽष्टमे मनुष्यभवे इत्यर्थः, चक्री चक्रवर्ती भूत्वा संसिद्धो निर्वृत इति ॥ ४२८ ॥ ८ ॥

अथ प्रसंगादेवेदमाह;—

**अन्नेवि महासत्ता अतियारजुयावि तप्फलं भोत्तुं। संसुद्धमग्गनिरया कालेणमणंतगा सिद्धा ॥ ४२९ ॥**

अन्येऽपि पूर्वोक्तक्षुल्लकादिजीवव्यतिरिक्ता महासत्त्वाः प्रशस्तपरिणतयोऽतीचारयुता अपि पीठमहापीठादिवत् तत्फलमतीचारकार्यं स्त्रीत्वादि भुक्त्वानुभूय । किमित्याह—संशुद्धमार्गनिरताः सन्तः कालेन भूयसाऽतीतेनानन्तका जीवाः सिद्धाः ॥ ४२९ ॥

उपसंहरन्नाह;—

(एवं[1] ओसहणायं भावेअव्वं निउणबुद्धीए । असमयसमयपओगा विहिसइपरिवालणाओ य ॥ ४३० ॥)

एवमुक्तवदौषधज्ञातं "भन्नइ जहोसहं खलु जत्तेण सया विहाणओ जुत्तं" इत्यादिग्रन्थोक्तं भावयितव्यं परिभावनीयमिति निपुणबुद्ध्या ऊहापोहसारमित्यर्थः । कथमित्याह–असमयसमयप्रयोगाद् असमयप्रयोगं समयप्रयोगं चाश्रित्य विधेः सदा परिपालनातश्च विधिं सदा परिपालनं चापेक्ष्येत्यर्थः ॥ ४३० ॥

एतदेव भावयति;—

होंति अकालपयोगो निरत्थगो तहवगारपरओ य । हंदि हु सदोसहस्सवि नियमा लोगेवि सिद्धमिणं ४३१

भवत्यकालप्रयोगोऽभिनवज्वरादावौषधप्रदानलक्षणो निरर्थको विवक्षितव्याध्युपशमं प्रत्यकिञ्चित्करः । तथेति समुच्चयाक्षेपे । अपकारपरकः रोगोत्कोपकारितया समधिकबाधाविधायकः । च समुच्चये । हंदीति पूर्ववत् । हुर्यस्मात् सदौषधस्यापि व्याधिनिवृत्तिं प्रत्यवन्ध्यशक्तितया सतः सुन्दरस्याप्यौषधस्य नियमाद् निश्चयेन लोकेऽपि न केवलमायुर्वेदशास्त्रेषु प्रसिद्धं प्रतीतमिदमनन्तरोक्तमिति ॥ ४३१ ॥

अथ दार्ष्टान्तिकतयोपन्यस्तस्य संसाररोगिषु वचनौषधप्रयोगस्याकालं च निर्दिशन् घणेत्यादिगाथाद्वयमाह;—

घणमिच्छत्तो कालो एत्थ अकालो उ होति नायव्वो । कालो य अपुणबंधगपभिती धीरेहिं निद्दिट्ठो ४३२



[1] इयमपि मूलगाथा कुत्राप्यादर्शपुस्तके नोपलभ्यते । टीकाक्षराण्युपजीव्य स्वयं लिखिता ।

**निच्छयओ पुण एसो विन्नेओ गंठिभेयकालो उ । एयम्मी विहिसतिवालणा हि आरोग्गमेयाओ ४३३**

घनं महामेघावलुप्तसकलनक्षत्रादिप्रभाप्रसरभाद्रपदामावास्याश्यामामध्यभागसमुद्भूतान्धकारवन्निविडं मिथ्यात्वं तत्त्वविपर्यासलक्षणं यत्र स तथा; कालश्चरमपुद्गलपरावर्त्तव्यतिरिक्तशेषपुद्गलपरावर्त्तलक्षणः । अत्र च वचनौषधप्रयोगेऽकालस्त्वकाल एव भवति ज्ञातव्यः । चरमपुद्गलपरावर्त्तलक्षणस्तु तथा भव्यपरिपाकतो बीजाधानोद्भेदपोषणादिषु प्रवर्त्तमानेषु स्यादपिकाल इति । अत एवाह—कालस्त्ववसरः पुनरपुनर्वन्धकप्रभृतिस्तत्रापुनर्वन्धकः "पावं न तिव्वभावा कुणइ" इत्यादिलक्षणः, आदिशब्दाद् मार्गाभिमुखमार्गपतितौ गृह्येते । तत्र मार्गो ललितविस्तरायामनेनैव शास्त्रकृतेत्थंलक्षणो निरूपितो 'मग्गदयाणं' इत्याद्यालापकव्याख्यायाम्, यथा इह मार्गश्चेतसोऽवक्रगमनं भुजंगगमननलिकायामतुल्यो विशिष्टगुणस्थानावाप्तिप्रवणः स्वरसवाही क्षयोपशमविशेषो हेतुस्वरूपफलशुद्धा सुखेत्यर्थः । तत्र पतितः प्रविष्टो भव्यविशेषो मार्ग्गपतित इत्युच्यते, तदादिभावापन्नश्च मार्ग्गाभिमुख इति । एतौ च चरमयथाप्रवृत्तकरणभागजावेव विज्ञेयौ अपुनर्वन्धककालः प्रभृतिर्यस्य स तथा धीरैस्तीर्थकरादिभिर्निर्दिष्टो व्यवहारत इति ॥ ४३२ ॥ १ ॥

निश्चयतो निश्चयनयमतेन पुनरेष वचनौषधप्रयोगकालो विज्ञेयः । क इत्याह—ग्रन्थिभेदकालस्तु ग्रन्थिभेदकाल एव, यस्मिन् कालेऽपूर्वकरणानिवृत्तिकरणाभ्यां ग्रन्थिर्भिन्नो भवति तस्मिन्नेवेत्यर्थः । कुतो यत एतस्मिन् ग्रन्थिभेदे सति विधिनावस्थोचितकृत्यकरणलक्षणेन सदा सर्वकालं या पालना वचनौषधस्य तया कृत्वा आरोग्यं संसारव्याधिनिरोधलक्षणमेतस्माद् वचनौषधप्रयोगाद् भवति । अपुनर्वन्धकप्रभृतिषु वचनप्रयोगः क्रियमाणोऽपि न तथा सूक्ष्मबोधविधायकः,

अनाभोगवहुलत्वात्तत्कालस्य । भिन्नग्रन्थ्यादयस्तु व्यावृत्तमोहत्वेनातिनिपुणबुद्धितया तेषु तेषु कृत्येषु प्रवृत्तमानास्तत्तत्कर्मव्याधिसमुच्छेदका जायन्त इति ॥ ४३३ ॥ २ ॥

ग्रन्थिभेदमेव पुरस्कुर्वन्नाह;—

**इहरावि हंदि एयम्मि एस आरोग्गसाहगो चेव । पोग्गलपरियट्टद्धं जमूणमेयम्मि संसारो ॥ ४३४ ॥**

इतरथापि विधिसदापालनामन्तरेणापि । हंदीति पूर्ववत् । एतस्मिन् गन्थिभेदे कृते सत्येष वचनौषधप्रयोग आरोग्यसाधकश्चैव भावारोग्यनिष्पादक एव सम्पद्यते । तथा च पठ्यते—"लब्ध्वा मुहूर्त्तमपि ये परिवर्जयन्ते सम्यक्त्वरत्नमनवद्यपदप्रदायि । भ्राम्यन्ति तेऽपि न चिरं भववारिराशौ तद्बिभ्रतां चिरतरं किमिहास्ति वाच्यम्? ॥ १ ॥" अत्र हेतुमाह–पुद्गलानामौदारिक–वैक्रिय–तैजस–भाषा–आनप्राण–मनः–कर्मवर्ग्गणापरिणामपरिणतानां विवक्षितकालमादौ कृत्वा यावता सामस्त्येनैकजीवस्य ग्रहनिसर्गौ सम्पद्येते स कालः पुद्गलपरावर्त्त इत्युच्यते, पुद्गला ग्रहनिसर्ग्गाभ्यां परिवर्त्तन्ते परापरपरिणतिं लभन्तेऽस्मिन्निति व्युत्पत्तेः, तस्यार्द्धं यावत्, यद्यस्मादूनं किञ्चिद् हीनमेतस्मिन् ग्रन्थिभेदे सति संसारो जीवानां तीर्थकराद्याशातनाबहुलानामपि । अत्र च दृष्टान्ताः कूलबालगोशालकादयो वाच्याः ॥ ४३४ ॥

**एयम्मि एयजोगे ण विवज्जयमेति पायसो जीवो । समुवत्थियकल्लाणो णहु तव्विवरीयगो होति ॥४३५॥**

एतस्मिन् ग्रन्थिभेदे सति एतद्योगे वचनौषधप्रयोगे सम्पन्ने सति न नैव विपर्ययं देवगुरुधर्मतत्त्वगोचरं विपर्यासमेति

प्रतिपद्यते प्रायशो बाहुल्येन जीवः । प्रायोग्रहणमवश्यवेद्यमिथ्यात्वादिक्लिष्टकर्म्मणां केषाञ्चिद् विपर्ययसम्भवेन व्यभिचारपरिहारार्थमिति । एतदेव भावयति—समुपस्थितकल्याणः समासन्नीभूताद्भुतप्रभूतकुशलो न नैव हुर्यस्मात् तद्विपरीताचारपरायणो भवति । यथा हि समुपस्थितकल्याणो न तद्विपरीतको भवति, तथा ग्रन्थितकः समुपस्थितकल्याणविरुद्धाचारपरायणो भवति । यथा हि समुपस्थितकल्याणो न तद्विपरीतको भवति, तथा ग्रन्थिभेदे उपयुक्तजिनवचनोपधः सन् न विपर्यस्तमतिर्जन्तुर्जायते ॥ ४३५ ॥

एतदेव भावयति;—

**नो परलोओ न जिणा ण धम्म मो गंडपील सीलं तु । नत्थट्ठमिया य तहा एमादि न मन्नई एसो ॥ ४३६॥**

नो नैव परलोको वर्त्तमानभवापेक्षया भवान्तररूपः समस्ति । तस्माद् आगच्छतो गच्छतश्च तत्र कस्यचित् कदाचित् केनचिदनवलोकनात्, किन्तु भूतपञ्चकसमुदायरूपकडेवरमेवेदमुद्भूतचैतन्यं तासु तासु क्रियासु प्रवर्त्तमानं जीवतीति व्यपदेशं प्रतिपद्यते, तदुपरामं च मृतमिति । तथा, न जिना भगवन्तोऽर्हन्तः सर्वथा निवृत्तरागद्वेषमोहमालिन्या मानवविशेषाः सन्ति, तादृशस्य कस्यचिदधुनाऽनुपलम्भात्, दृष्टानुसारेण चादृष्टकल्पनायाः साधीयस्त्वात् । न धर्म्मो दुर्गतिपतज्जन्तुजातधारकः, एतेषामेव च सुगतौ धावको जीवपरिणामविशेषः, प्रत्यक्षेण साक्षादनिरीक्षणात् । 'मो' इति पूर्ववत् । गण्डस्य तथाविधव्रणस्य या पीडा तदुपशमं शीलं तु वस्तिनिरोधरूपं पुनः । यथा हि गण्डपीडायां सह्यमानायां न कश्चिद् गुणः, किन्तु तन्निपीडनमेव, एवं वस्तिनिरोधपक्षेऽपि भावना कार्या । नास्ति न विद्यतेऽष्टमिका, च तथा, रत्नप्रभादिभ्यो नरकपृथिवीभ्यः सप्तभ्यः पुरतोऽधस्ताद् अष्टमी पृथिवी उपार्जितप्रचुरतमसामिति । अयमभिप्रायः—

किं पुनः प्रागुक्तो वचनौषधप्रयोगकाल इत्यपिशब्दार्थः, कुशलैर्बुद्धिमद्भिर्मुणितव्यो ज्ञेयः सदा सर्वकालम्। कथमित्याह—वैद्यकशास्त्रनीत्या आत्रेयचरकसुश्रुतादिचिकित्साग्रन्थानुसारेण। तत्राधिमात्रे रोगे सदौषधस्याप्रयोगावसर एव, औषधस्याद्यापि स्वसामर्थ्यमलभमानस्य रोगस्वरूपं त्वनुवर्त्तमानस्य तत्पुष्टिकारकत्वमेव, यतो मध्यमावस्थायां तु स्यादपि कश्चिद् गुणस्तत्प्रयोगात्, मृदुभूतावस्थायां तु तथा तथा कुशलैरुपचर्यमाणो रोगः सर्वथोपरमं प्रतिपद्यत एव। सदौषधानि चैवं शास्त्रे पठ्यन्ते—"तित्तकडुएहिं सिंभं जिणाहि पित्तं कसायमहुरेहिं। निद्धुण्णेहि य वायं सेसा वाही अणसणाए ॥ १ ॥" ॥ ४३७ ॥

परः प्राह;—

**कह णु अकालपओगे एत्तो गेवेज्जगाइसुहसिद्धी। णणु साहिगओसहजोगसोक्खतुल्ला मुणेयव्वा॥४३८॥**

कथं नु प्रश्ने, पृच्छाम्यकालप्रयोगे तथाभव्यत्वापरिपाकलक्षणेऽकाले वचनौषधप्रयोगे जाते सति दूरभव्यानामभव्यानां च केषांचिद् इतो वचनौषधप्रयोगाद् ग्रैवेयकादिसुखसिद्धिः शास्त्रे श्रूयते। उक्तं च—"तित्थंकराइपूयं दट्ठुणन्नेण वावि कज्जेण। सुयसामाइयलंभो होज्जा भवस्स गंठिम्मि ॥ १ ॥" ततश्च—"जे दंसणवावन्ना लिंगग्गहणं करेंति सामन्ने। तेसिं चिय उववाओ उक्कोसो जाव गेवेज्जा ॥ २ ॥" अत्र प्रतिविधीयते—नन्विति परपक्षाक्षमायां, सा ग्रैवेयकादिसुखसिद्धिरधिकृतौषधयोगसौख्यतुल्या मुणितव्या। यथा हि सदौषधं समयप्रयोगात् क्षणमात्रं स्वसम्बन्धसामर्थ्याद् असाध्ये व्याधौ सौख्यमुपनयति, तदनु च समधिकव्याधिप्रकोपाय सम्पद्यते। एवमधिकृतवचनौषधप्रयोगोऽप्यपक्वभव्य-

वस्तुप्राप्तिकालाकालनिरूपणम्.

त्वानां सत्त्वानां ग्रैवेयकादिषु सुखसिद्धिमात्रमाधाय पश्चात् पर्यायेण नरकादिदुर्गतिप्रवेशफलः सम्पद्यते ॥ ४३८ ॥

एतत् स्वयमपि भावयति;—

**कुणइ जह सण्णिवाए सदोसहं जोगसोक्खमेत्तं तु । तह एयं विण्णेयं अणोरपारम्मि संसारे ॥ ४३९ ॥**

करोति यथा सन्निपाते वातादिदोषत्रययुगपत्प्रकोपरूपे सदौषधं क्रियातिक्तक्वाथादिरूपं योगसौख्यमात्रमेव, न पुन-स्तदुच्छेदमपि । तथैतद् ग्रैवेयकादिसुखं समयवचनौषधप्रयोगाद् उत्पन्नं विज्ञेयमनर्वाक्पारे संसारे ॥ ४३९ ॥

**णय तत्तओ तयंपि हु सोक्खं मिच्छत्तमोहियमइस्स । जह रोद्दवाहिगहियस्स ओसहाओवि तब्भावे ४४०**

न नैव, चकारो वक्तव्यान्तरसूचकः, तत्त्वतो निश्चयवृत्त्या तदपि ग्रैवेयकादिगतं, हुः स्फुटं, सौख्यं वर्त्तते । कस्ये-त्याह–मिथ्यात्वमोहितमतेः दृढविपर्यासपिशाचाभिभूतचेतसो जीवस्य । दृष्टान्तमाह—यथा रौद्रव्याधिगृहीतस्य दुःसाध-व्याधिबाधाविधुरशरीरस्य कस्यचिद् औषधादपि तद्भावे सौख्यभावे न तत्त्वतः सुखम् । तथा हि स्वभावतस्तावत् तस्य न सौख्यमस्ति, यदि परमौषधात् । परं तत्राप्यत्यन्तदारुणरोगेणानवरतं तुद्यमानमर्मणो बाह्य एव सुखलाभः । यथा हि शरत्काले कठोरतरतरणिकिरणनिकरेण तापितेष्वपि महाह्लदेषु बहिरेवोष्णानि जलानि, मध्ये पुनरत्यन्तशीत-लभावभाञ्जि भवन्ति, एवं सत्क्रियायोगाद् बाह्यसौख्ययोगेऽप्यत्यन्तमिथ्यात्वोपप्लुतत्वाद्दुःखमेव ॥ ४४० ॥

पुनरपि दृष्टान्तोपन्यासेनामुमेवार्थं भावयति;—

सप्तसु तावद् गता गच्छन्ति गमिष्यन्ति च जीवाः, किं ताभ्यो भयमस्ति? अष्टमी च नरकपृथिवी भवद्भिर्न प्रतिपाद्यते, इतीन्द्रियप्रीतिरेव सम्पादयितुं युक्ता, न पुनः पापभयात् तत्परिहार इति। एवमाद्यन्यदपि वचनापौरुषेयत्वजगदीश्वरकर्तृत्वादि नास्तिकमीमांसकनैयायिकादिपरिकल्पितं न मन्यते, एष भिन्नग्रन्थिः, सम्यग्बोधप्रदीपप्रभाप्रहतप्रौढमिथ्यात्वान्धकारभावत्वात्तस्य। मन्यते पुनरित्थं–यत् कार्यं तदनुरूपकारणप्रभवं, यथा शालिगोधूमादिधान्यविशेषः, कार्यं चेहभविका हर्षविषादादयः, यच्चैतेषामनुरूपं कारणं तत्प्राग्भवचैतन्यमिति परलोकसिद्धिः। तथा संति च जिनाः, तत्साधकप्रमाणस्याबाधितविषयस्य सत्त्वात्। तथा हि–ये यतो हेतोर्देशतः क्षीयमाणा वीक्ष्यन्ते ते ततः प्रकर्षप्राप्तात् सम्भवत्सर्वक्षया अपि, यथा चिकित्सासमीरणादिभ्यो रोगजलधरादयो, दृश्यन्ते च प्रतिपक्षभावनातः क्वचित् प्राणिनि देशतः क्षीयमाणा रागादयः, ततः प्रस्तुतभावनाप्रकर्षात् सम्भवत्येव तेषां कदाचित् सर्वप्रलय इति, ये च सर्वप्रक्षीणदोषास्त एव जिनाः। न चादर्शनमात्रेण तेषामसत्त्वमुद्भावनीयमर्वाग्दर्शिभिरदृश्यमानानामपि पातालतलगतानां मूलकीलादीनां बहूनां भावानां सद्भावात्। धर्म्मोऽपि समस्ति, सूत्रे धर्मस्योपलक्षणत्वात् पापमपि गृह्यते। ततः पुण्यं पापं समस्तीत्यर्थः। कथमन्यथा तुल्यव्यवसाययोरपि द्वयोः फलसिद्धौ सर्वजनप्रतीतो भेद उपलभ्यते? यथोक्तम्—"तुल्यप्रतापोद्यमसाहसानां, केचिल्लभन्ते निजकार्यसिद्धिम्। परे न तामत्र निगद्यतां मे, कर्म्मास्ति हित्वा यदि कोऽपि हेतुः? ॥ १ ॥ विचित्रदेहाकृतिवर्णगन्धप्रभावजातिप्रभवस्वभावाः। केन क्रियन्ते भवनेऽङ्गिवर्गाश्चिरंतनं कर्म निरस्य चित्राः? ॥ २ ॥ विवर्द्ध्य मासान् नव गर्भमध्ये, बहुप्रकारैः कललादिभावैः। उद्वर्त्त्य निष्का-

भिन्नग्रंथिनोविपर्यस्तमत्यभावत्वम्.

मयते सविच्याः को गर्भतः कर्म विहाय पूर्वम्? ॥ २ ॥" यच्च गण्डपीडाधिसहनतुल्यं शीलमुक्तं तदपि न चारु, गण्डपीडाप्रतीकारस्य तथाविधरागद्वेषयोरभावेन प्रवृत्तत्वात्। वस्तिनिरोधपीडाप्रतीकारस्य च संसारमूलतीव्रकामरागमूलत्वेनात्यन्तदुर्वृत्तत्वाद् न किञ्चित् तत्प्रतीकारयोः साम्यमस्ति। तथा चार्षम्—"मूलमेयमहम्मस्स महादोससमुस्सयं। तम्हा मेहुणसंसग्गिं निग्गंथा वज्जयंति णं" ॥ १ ॥ यच्चोक्तं नास्त्यष्टमी पृथिवीति, सापि शठोक्तिरेव, संसारभयमसारममन्यमान एवेत्थं वक्ति। नहि संसारभीरवोऽन्यतरनरकपृथ्वीदुःखमप्यनुमन्यन्ते, किं पुनः सर्वपृथ्वीप्रभवमिति। यच्च मीमांसकैर्वचनापौरुषेयत्वमुद्घुष्यते, तदपि सुधीभिर्नेष्यत एव। तथा हि—उच्यत इति वचनं पुरुषव्यापारानुगतं रूपमस्य, कथं तत्क्रियाया अभावे तद् भवितुमर्हति? । न चैतत् केवलं क्वचिद् वनादुपलभ्यते। उपलब्धावपि क्वचिददृष्टवक्त्राशङ्का न निवर्त्तते। यच्चेश्वरकारणिकैरीश्वरकर्तृकं जगदिति प्रोच्यते। तदप्युच्चावचमेव। ईश्वरो हि परैरुत्पत्तिविकलः कल्प्यते। न च तादृशात् किञ्चित् कार्यमुपपद्यते। यथोक्तम्—"नेश्वरो जन्मिनां हेतुरुत्पत्तिविकलत्वतः। गगनाम्भोजवत् सर्वमन्यथा युगपद् भवेत् ॥ १ ॥" इति ॥ ४३६ ॥

इत्थमकालं कालं च वचनौषधप्रयोगस्य प्रतिपाद्य दृष्टान्ततयोपन्यस्तं सदौषधमधिकृत्य कालमुपदिशन्नाह;—

**दोसावेक्खा चेवं सम्मं कालो सदोसहगओवि। कुसलेहिं मुणेयव्वो सइ वेज्जगसत्थनीईए ॥ ४३७ ॥**

दोषापेक्षया इह दोषा वातपित्तश्लेष्मप्रकोपप्रभवा ज्वरातीसारादयो रोगा मृदुमध्याधिमात्ररूपास्तेषामपेक्षा च तानपेक्ष्येत्यर्थः, एवं वचनौषधप्रयोगवत् सम्यक् कालः प्रयोगयोग्यः सदौषधगतः स्निग्धोष्णादिसुन्दरौषधोपजीवनारूपः,

किं पुनः प्रागुक्तो वचनौषधप्रयोगकाल इत्यपिशब्दार्थः, कुशलैर्बुद्धिमद्भिर्मुणितव्यो ज्ञेयः सदा सर्वकालम् । कथमित्याह—वैद्यकशास्त्रनीत्या आत्रेयचरकसुश्रुतादिचिकित्साग्रन्थानुसारेण । तत्राधिमात्रे रोगे सदौषधस्याप्रयोगावसर एव, औषधस्याद्यापि स्वसामर्थ्यमलभमानस्य रोगस्वरूपं त्वनुवर्त्तमानस्य तत्पुष्टिकारकत्वमेव, यतो मध्यमावस्थायां तु स्यादपि कश्चिद् गुणस्तत्प्रयोगात्, मृदुभूतावस्थायां तु तथा तथा कुशलैरुपचर्यमाणो रोगः सर्वथोपरमं प्रतिपद्यत एव । सदौषधानि चैवं शास्त्रे पठ्यन्ते—"तित्तकडुएहिं सिंभं जिणाहि पित्तं कसायमहुरेहिं । निद्धुण्णेहि य वायं सेसा वाही अणसणाए ॥ १ ॥" ॥ ४३७ ॥

परः प्राह;—

**कह णु अकालपओगे एत्तो गेवेज्जगाइसुहसिद्धी । णणु साहिगओसहजोगसोक्खतुल्ला मुणेयव्वा ॥४३८॥**

कथं नु प्रश्ने, पृच्छाम्यकालप्रयोगे तथाभव्यत्वापरिपाकलक्षणेऽकाले वचनौषधप्रयोगे जाते सति दूरभव्यानामभव्यानां च केषांचिद् इतो वचनौषधप्रयोगाद् ग्रैवेयकादिसुखसिद्धिः शास्त्रे श्रूयते । उक्तं च—"तित्थंकराइपूयं दट्ठुणन्नेण वावि कज्जेण । सुयसामाइयलंभो होज्जा भवस्स गंठिम्मि ॥ १ ॥" ततश्च—"जे दंसणवावन्ना लिंगग्गहणं करेंति सामन्ने । तेसिं चिय उववाओ उक्कोसो जाव गेवेज्जा ॥ २ ॥" अत्र प्रतिविधीयते—नन्विति परपक्षाक्षमायां, सा ग्रैवेयकादिसुखसिद्धिरधिकृतौषधयोगसौख्यतुल्या मुणितव्या । यथा हि सदौषधं समयप्रयोगात् क्षणमात्रं स्वसम्बन्धसामर्थ्याद् असाध्ये व्याधौ सौख्यमुपनयति, तदनु च समधिकव्याधिप्रकोपाय सम्पद्यते । एवमधिकृतवचनौषधप्रयोगोऽप्यपक्वभव्य-

वस्तुप्राप्ति-
कालाका-
लनिरू-
पणम्.

त्यानां सत्त्वानां ग्रैवेयकादिषु सुखसिद्धिमात्रमाधाय पश्चात् पर्यायेण नरकादिदुर्गतिप्रवेशफलः सम्पद्यते ॥ ४३८ ॥

एतत् स्वयमपि भावयति;—

**कुणइ जह सण्णिवाए सदोसहं जोगसोक्खमेत्तं तु । तह एयं विण्णेयं अणोरपारम्मि संसारे ॥ ४३९ ॥**

करोति यथा सन्निपाते वातादिदोषत्रययुगपत्प्रकोपरूपे सदौषधं क्रियातिक्तक्काथादिरूपं योगसौख्यमात्रमेव, न पुन-स्तदुच्छेदमपि । तथैतद् ग्रैवेयकादिसुखं समयवचनौषधप्रयोगाद् उत्पन्नं विज्ञेयमनर्वाक्पारे संसारे ॥ ४३९ ॥

**णय तत्तओ तयंपि हु सोक्खं मिच्छत्तमोहियमइस्स । जह रोद्दवाहिगहियस्स ओसहाओवि तब्भावे ४४०**

न नैव, चकारो वक्तव्यान्तरसूचकः, तत्त्वतो निश्चयवृत्त्या तदपि ग्रैवेयकादिगतं, हुः स्फुटं, सौख्यं वर्त्तते । कस्ये-त्याह-मिथ्यात्वमोहितमतेः दृढविपर्यासपिशाचाभिभूतचेतसो जीवस्य । दृष्टान्तमाह—यथा रौद्रव्याधिगृहीतस्य दुःसाध-व्याधिबाधाविधुरशरीरस्य कस्यचिद् औषधादपि तद्भावे सौख्यभावे न तत्त्वतः सुखम् । तथा हि स्वभावतस्तावत् तस्य न सौख्यमस्ति, यदि परमौषधात् । परं तत्राप्यत्यन्तदारुणरोगेणानवरतं तुद्यमानमर्मणो बाह्य एव सुखलाभः । यथा हि शरत्काले कठोरतरतरणिकिरणनिकरेण तापितेष्वपि महाह्रदेषु बहिरेवोष्णानि जलानि, मध्ये पुनरत्यन्तशीत-लभावभाञ्जि भवन्ति, एवं सत्क्रियायोगाद् बाह्यसौख्ययोगेऽप्यत्यन्तमिथ्यात्वोपप्लुतत्वाद्दुःखमेव ॥ ४४० ॥

पुनरपि दृष्टान्तोपन्यासेनामुमेवार्थं भावयति;—

एतामेव गाथाचतुष्टयेन व्याचष्टे;—

**एगंतणिच्चवाए अणिच्चवाए सदसदविसेसो । पिंडो घडोत्ति पुरिसादन्नो देवोत्ति णातातो ॥ ४४५ ॥**

**भवहेउ णाणमेयस्स पायसोऽसप्पवित्तिभावेण । तह तदणुबंधओ च्चिय तत्तेतरणिंदणादीतो ॥४४६॥**

एकान्तनित्यवादे एकान्तेन स्याद्वादविपरीतरूपेण नित्यस्याप्रच्युतानुत्पन्नस्थिरैकस्वभावस्यात्मादेरभ्युपगमे क्रियमाणे परैः सांख्यादिभिः, सदसदविशेषः प्राप्नोति, विवक्षितावस्थायाः सत्त्वकाले च द्रव्यस्याविशेषोऽनानात्वमापद्यते । ततो य एव पिण्डो मृदः सम्बन्धी स एव घटः, इत्यायातं मृद्द्रव्यस्योभयावस्थानुयायित्वम्, तिलतुषत्रिभागमात्रमपि स्वरूपभेदाभावात् । न च वक्तव्यमेकाकारेऽपि द्रव्ये पिण्डो घटश्चेत्यवस्थाभेदाश्रयोऽसौ व्यवहारो लोके न प्रवर्त्यत इति, अवस्थातुरभेदे तन्निबन्धनानामप्यभेदप्राप्तेः, कारणभेदपूर्वकत्वात् कार्यभेदस्य । यथोक्तम्—"अयमेव भेदो भेदहेतुर्वा यद् विरुद्धधर्म्माध्यासः कारणभेदश्च"इति । अनित्यवादे चैकान्तक्षणक्षयित्वलक्षणे पुरुषाद् विहितदेवभवप्राप्तिप्रायोग्यपुण्यकर्म्मणः सकाशात् मरणानन्तरं देवभवप्राप्तावन्य एकान्तेनैव विलक्षणो देव इत्यापद्यते । अयमभिप्रायः—यथा समुपार्जितसुकृताद् मनुष्याद् नारकतयोत्पन्नो जीवः सर्वथाऽन्य एव, तथा तद्मरणानन्तरं देवतयोत्पत्तावपि, निरन्वयोत्पादस्योभयत्रापि समानत्वात् न चैतद् युज्यते, अकृताभ्यागमकृतनाशदोषप्रसङ्गात् । एवं च नित्यवादे य एव पिण्डः स एव घटो, य एव च घटः स एव पिण्ड इति न्यायात् सदसतोरवस्थयोरविशेषः । अनित्यवादेऽपि पुरुषा-

दन्यो देवो देवाच्च पुरुष इति । ततो यथा पुरुषस्य विद्यमानताकाले कश्चिद्देवतयोत्पन्न एकान्तेनैवान्यस्तथा तन्मरणानन्तरमुत्पन्नोऽपि देवोऽन्य एव । ततः पुरुषसत्त्वकालेऽसत्त्वकाले च देवतयोत्पन्नो जन्तुरविशिष्ट एवेति यो न्यायस्तस्मात् सदसतोरविशेष इति ॥ ४४५ ॥

भवेत्यादि । भवहेतुः संसारनिबन्धनं ज्ञानं शास्त्राभ्यासादिजन्यो बोध एतस्य मिथ्यादृष्टेः । कथमित्याह–प्रायशो बाहुल्येनामत्प्रवृत्तिभावेन विपर्यस्तचेष्टाकारणत्वात् तस्य । यदिह प्रायशोग्रहणं तद्यथाप्रवृत्तकरणचरमभागभाजां संनिहितग्रन्थिभेदानामत्यन्तजीर्णमिथ्यात्वज्वराणां केषाञ्चिद् दुःखितदयागुणवदद्वेषसमुचिताचाररूपप्रवृत्तिसाराणां सुन्दरप्रवृत्तिभावेन व्यभिचारपरिहारार्थम् । तथेति हेत्वन्तरसमुच्चये । तदनुबन्धत एवासत्प्रवृत्त्यनुबन्धादेव । एतदपि कुत इत्याह–तत्त्वेतरनिन्दनादितः । स हि मिथ्यात्वोपघातात् समुपात्तविपरीतरुचिस्तत्त्वं सद्भूतदेवतादिकमर्हदादिलक्षणं निन्दति । इतरच्चातत्त्वं तत्तत्कुयुक्तिसमुपन्यासेन पुरस्करोति । ततस्तत्त्वेतरनिन्दनादिदोषाद् भवान्तरेऽप्यसत्प्रवृत्तिरनुबन्धयुक्तैव स्यादिति ॥ ४४६ ॥

उम्मत्तस्सव णेतो तस्सुवलंभो जहित्थरूवोत्ति । मिच्छोदयतो तो च्चिय भणियमिणं भावगहरूवं॥४४७

उन्मत्तस्येव मद्यपानपराधीनमनसो मनुजस्येव विज्ञेयस्तस्य मिथ्यादृष्टेरुपलम्भो वस्तुबोधरूपो यदृच्छारूपः स्वविकल्पमात्रसंघटित इति । कुत इत्याह–मिथ्यात्वोदयाद् मिथ्यात्वमोहनीयकर्मविपाकात् । तथा हि–पीतमद्यो मदावेशात् किंकरमपि राजीयति, राजानमपि किंकरीयति, तथोदीर्णमिथ्यात्वो जीवः सद्भूतमपि वस्तु अतत्त्वरूपतया व्यवह-

**जह चेवोवहयणयणो सम्मं रूवं ण पासई पुरिसो। तह चेव मिच्छदिट्ठी विउलं सोक्खं न पावेइ ॥४४१॥**

यथाचैवेति दृष्टान्तार्थः। उपहतनयनः काचकामलादिदोषोपप्लुतलोचनः सम्यग् यथावद्रूपं स्त्रीपुरुषादिलक्षणं न पश्यति न वीक्षते पुरुषः प्रमत्तो जीवः। तथा चैवेति दार्ष्टान्तिकोऽर्थः। मिथ्यादृष्टिरुपहतसम्यग्बोधो विपुलं बहु समुपस्थितमपि सौख्यं न प्राप्नोति ॥ ४४१ ॥

कुत इति चेदुच्यते;

**असदभिणिवेसवं सो णिओगओ ता ण तत्तओ भोगो। सव्वत्थ तदुवघाया विसघारियभोगतुल्लो त्ति ४४२**

असदभिनिवेशवान् वितथाभिनिविष्टः स मिथ्यादृष्टिर्नियोगतो नियमेन, तत्तस्माद् न तत्त्वतो भोगः स्त्र्यादिविषयवस्तुगोचरः, सर्वत्र हेये उपादेये च वस्तुनि तदुपघातादसदभिनिवेशोपद्रवात्। विषघारितभोगतुल्यः। यादृशो हि विषविकारविह्वलीभूतचेतसः स्रक्चन्दनाङ्गनादिभोगस्तत्त्वतोऽभोग एव, एवं मिथ्यादृष्टेश्चक्रवर्त्यादिपदवीप्राप्तावपि विपर्यासवशाद् न कश्चिद् भोगः। इतिर्वाक्यपरिसमाप्तौ ॥ ४४२ ॥

एतदेव भावयति;—

**कत्थइ ण णाणसेयस्स भावओ तम्मि असइ भोगोवि। अंधलयतुल्लभोगो पुव्वायरिया तहा चाहु ॥४४३॥**

कुत्रचिद् जीवादौ वस्तुनि न नैव ज्ञानमवबोध एतस्य मिथ्यादृशो भावतः सम्यग्रूपतया वर्त्तते। ततस्तस्मिन् ज्ञाने-

मिथ्यादृष्टेर्विपुलसौख्याभावत्वम्.

ऽमति भोगोऽपि स्त्र्यादिवस्तुविषयोऽन्धलकभोगतुल्यो यादृशोऽन्धपुरुषस्य प्रासादशय्यासनवनितादिभोगोऽनुपलब्धरूपतत्त्वस्य न परमार्थतो भोगतां बिभर्त्ति, मिथ्यादृशोऽपि तथा प्रस्तुतभोग इति । एतदेव द्रढयन्नाह–पूर्वाचार्या जिनभद्रगणिक्षमाश्रमणपादास्तथा च तथैव यथैतद्वस्तु सिध्यति तथाऽऽहुरुक्तवन्तः ॥ ४४३ ॥

उक्तमेव दर्शयति;—

**सदसदविसेसणाओ भवहेउजहिच्छिओवलंभाओ। णाणफलाभावाओ मिच्छद्दिट्ठिस्स अन्नाणं॥ ४४४**

सदसतोरविशेषणाद् मिथ्यादृष्टेरज्ञानमित्युत्तरेण योगः । मिथ्यादृष्टिर्हि यदस्ति तत् सर्वथाऽस्त्येवेति निर्विशेषणं वदति । एवं नास्तीत्यपि वाच्यम् । न चैवं वस्तुस्वरूपमस्ति, सर्वभावानां स्वरूपेण सत्त्वात् । असत्त्वमपि विवक्षितपर्यायापेक्षयैव, न पुनः सर्वानपि पर्यायानपेक्ष्य, पर्यायविशेषापेक्षयाऽसत्त्वविवक्षाकालेऽपि घटादेः सत्त्वाभ्युपगमात् तथा, 'भवहेउ'त्ति भावप्रधानत्वेन निर्देशस्य, भवहेतुत्वात् संसारकारणत्वात्, मिथ्यात्वादीनां कर्मबन्धहेतूनां विपरीतज्ञानरूपत्वेन प्रवृत्तेः । तथा, यदृच्छया स्वेच्छारूपयोपलम्भात् सर्वभावानामवबोधात्, न पुनः सम्यग्दृष्टेरिव सर्वविद्वचनपारतंत्र्यात् । तथा, ज्ञानफलाभावात् । ज्ञानस्य हि फलं विरतिः । सा च ज्ञानाऽभ्युपगमयतनासु सतीषु सम्पद्यते । मिथ्यादृष्टेस्तु विपर्यस्तबोधोपहतत्वेन ज्ञानस्यैव तावदसम्भवात् कुतोऽभ्युपगमयतनासम्भवः? न च स्वकार्यमकुर्वत् कारणं कारणतया विपश्चितो निश्चिन्वन्ति । पठन्ति चात्र—"यदेवार्थक्रियाकारि तदेव परमार्थसत् ।"इति । ततस्तादृशस्य ज्ञानफलस्याभावाद् मिथ्यादृष्टेरुदीर्णमिथ्यात्वमोहस्य ज्ञानमपि शास्त्राभ्यासादिजन्यमज्ञानं वर्त्तते ॥ ४४४ ॥

एनामेव गाथाचतुष्टयेन व्याचष्टे;—

एगंतणिच्चवाए अणिच्चवाए सदसदविसेसो । पिंडो घडोत्ति पुरिसादन्नो देवोत्ति णातातो ॥ ४४५ ॥
भवहेउ णाणमेयस्स पायसोऽसप्पवित्तिभावेण । तह तदणुबंधओ च्चिय तत्तेतराणिंदणादीतो ॥४४६॥

एकान्तनित्यवादे एकान्तेन स्याद्वादविपरीतरूपेण नित्यस्याप्रच्युतानुत्पन्नस्थिरैकस्वभावस्यात्मादेरभ्युपगमे क्रियमाणे परैः सांख्यादिभिः, सदसदविशेषः प्राप्नोति, विवक्षितावस्थायाः सत्त्वकाले च द्रव्यस्याविशेषोऽनानात्वमापद्यते । ततो य एव पिण्डो मृदः सम्बन्धी स एव घटः, इत्यायातं मृद्द्रव्यस्योभयावस्थानुयायित्वम्, तिलतुषत्रिभागमात्रमपि स्वरूपभेदाभावात् । न च वक्तव्यमेकाकारेऽपि द्रव्ये पिण्डो घटश्चेत्यवस्थाभेदाश्रयोऽसौ व्यवहारो लोके न प्रवर्त्तेत इति, अवस्थातुरभेदे तन्निबन्धनानामप्यभेदप्राप्तेः, कारणभेदपूर्वकत्वात् कार्यभेदस्य । यथोक्तम्—"अयमेव भेदो भेदहेतुर्वा यद् विरुद्धधर्माध्यासः कारणभेदश्च"इति । अनित्यवादे चैकान्तक्षणक्षयित्वलक्षणे पुरुषाद् विहितदेवभवप्राप्तिप्रायोग्यपुण्यकर्म्मणः सकाशात् मरणानन्तरं देवभवप्रासावन्य एकान्तेनैव विलक्षणो देव इत्यापद्यते । अयमभिप्रायः—यथा समुपार्जितसुकृताद् मनुष्याद् नारकतयोत्पन्नो जीवः सर्वथाऽन्य एव, तथा तद्मरणानन्तरं देवतयोत्पत्तावपि, निरन्वयोत्पादस्योभयत्रापि समानत्वात् न चैतद् युज्यते, अकृताभ्यागमकृतनाशदोषप्रसङ्गात् । एवं च नित्यवादे य एव पिण्डः स एव घटो, य एव च घटः स एव पिण्ड इति न्यायात् सदसतोरवस्थयोरविशेषः । अनित्यवादेऽपि पुरुषा-

दन्यो देवो देवाच्च पुरुष इति । ततो यथा पुरुषस्य विद्यमानताकाले कश्चिद्देवतयोत्पन्न एकान्तेनैवान्यस्तथा तन्मरणानन्तरमुत्पन्नोऽपि देवोऽन्य एव । ततः पुरुषसत्त्वकालेऽसत्त्वकाले च देवतयोत्पन्नो जन्तुरविशिष्ट एवेति यो न्यायस्तस्मात् सदसतोरविशेष इति ॥ ४४५ ॥

भवेत्यादि । भवहेतुः संसारनिबन्धनं ज्ञानं शास्त्राभ्यासादिजन्यो बोध एतस्य मिथ्यादृष्टेः । कथमित्याह–प्रायशो बाहुल्येनासत्प्रवृत्तिभावेन विपर्यस्तचेष्टाकारणत्वात् तस्य । यदिह प्रायशोग्रहणं तद्यथाप्रवृत्तकरणचरमभागभाजां संनिहितग्रन्थिभेदानामत्यन्तजीर्णमिथ्यात्वज्वराणां केषाञ्चिद् दुःखितदयागुणवदद्वेषसमुचिताचाररूपप्रवृत्तिसाराणां सुन्दरप्रवृत्तिभावेन व्यभिचारपरिहारार्थम् । तथेति हेत्वन्तरसमुच्चये । तदनुबन्धत एवासत्प्रवृत्त्यरनुबन्धादेव । एतदपि कुत इत्याह–तत्त्वेतरनिन्दनादितः । स हि मिथ्यात्वोपघातात् समुपात्तविपरीतरुचिस्तत्त्वं सद्भूतदेवतादिकमर्हदादिलक्षणं निन्दति । इतरच्चातत्त्वं तत्तत्कुयुक्तिसमुपन्यासेन पुरस्करोति । ततस्तत्त्वेतरनिन्दनादिदोषाद् भवान्तरेऽप्यसत्प्रवृत्तिरनुबन्धयुक्तैव स्यादिति ॥ ४४६ ॥

**उम्मत्तस्सव णेतो तस्सुवलंभो जहित्थरूवोत्ति । मिच्छोदयतो तो च्चिय भणियमिणं भावगहरूवं॥४४७**

उन्मत्तस्येव मद्यपानपराधीनमनसो मनुजस्येव विज्ञेयस्तस्य मिथ्यादृष्टेरुपलम्भो वस्तुबोधरूपो यदृच्छारूपः स्वविकल्पमात्रसंघटित इति । कुत इत्याह–मिथ्यात्वोदयाद् मिथ्यात्वमोहनीयकर्मविपाकात् । तथा हि–पीतमद्यो मदावेशात् किंकरमपि राजीयति, राजानमपि किंकरीयति, तथोदीर्णमिथ्यात्वो जीवः सद्भूतमपि वस्तु अतत्त्वरूपतया व्यवह-

रति, असद्भूतमपि तत्त्वतयेति । अत एव यदृच्छोपलम्भाद् भणितमिदं मिथ्यात्वं भावग्रहरूपं पारमार्थिकग्रहस्वभावम्, इतरग्रहेभ्यः पिशाचादिरूपेभ्योऽस्य महानर्थप्रसाधकत्वात् ॥ ४४७ ॥

**णाणस्स फलं विरती पावे पुन्नम्मि तह पवित्तीओ । जोगत्तादिअणुगया भावेण ण सा अओऽण्णाणं४४८**

ज्ञानस्य वस्तुबोधस्य फलं कार्यं विरतिरुपरमः। क्वेत्याह–पापे प्राणातिपातादिरूपे कुकृत्ये, पुण्ये पवित्रे स्वाध्यायध्यानतपश्चरणादौ कृत्यविशेषे, तथेति समुच्चये, प्रवृत्तिस्तु प्रवर्त्तनमेव या सम्पद्यते सापि ज्ञानफलम् । कीदृशीत्याह–योग्यत्वाद्यनुगता योग्यत्वेन योग्यतारूपेण, आदिशब्दाद् द्रव्यक्षेत्रकालभावत्वानुकूल्येन चानुगता सम्बद्धा । ततो भावेन भावार्थरूपेण न नैव सा मिथ्यादृष्टेः पापे विरतिः, पुण्ये च प्रवृत्तिर्योग्यताद्यनुगता सम्पद्यते यतः कारणात्, अतो ज्ञानमप्यज्ञानं तस्याशुद्धालाबुपात्रनिक्षिप्तदुग्धशर्करादिमधुरद्रव्याणामिव ज्ञानस्यापि तत्र मिथ्यात्वोदयाद् विपरीतभावापन्नत्वात् ॥४४८॥

उपसंहरन्नाह;—

**एवमतिणिउणबुद्धीए भाविउं अप्पणो हियट्ठाए । सम्मं पयट्टियव्वं आणाजोगेण सव्वत्थ ॥ ४४९ ॥**

एतत् पूर्वोक्तमतिनिपुणबुद्ध्या भावयित्वा परिणमय्यात्मनः स्वस्य हितार्थं कल्याणनिमित्तं सम्यग् यथावत् प्रवर्त्तितव्यमाज्ञायोगेन सर्वत्र धर्म्मार्थादिकार्ये ॥ ४४९ ॥

ततश्च;—

**णाऊण अत्तदोसं वीरियजोगं च खेत्त कालो य । तप्पच्चणीयभूए गिण्हेज्जाभिग्गहविसेसे ॥ ४५० ॥**

ज्ञात्वा सम्यगधिगम्यात्मदोषं तीव्रकोपवेदोदयादिकं, वीर्ययोगं च तन्निग्रहसमर्थसामर्थ्यलक्षणं, क्षेत्रकालौ च प्रतिपित्सिताभिग्रहपरिपालनानुकूलं क्षेत्रं कालं चेत्यर्थः । किमित्याह–तत्प्रत्यनीकभूतान् स्वयमेव संवेदितस्वदोषप्रतिपक्षभावगतान् गृह्णीयात् समादद्याद् अर्हत्सिद्धादिप्रत्यक्षमेवाभिग्रहविशेषान् क्षमाशरीराप्रतिकर्मत्वादीन्, मुमुक्षूणां क्षणमपि निरभिग्रहाणामवस्थानस्याक्षमत्वादिति ॥ ४५० ॥

न चाभिग्रहा ग्रहणमात्रत एव फलदायिनो भवन्ति, किन्तु परिपालनादिति तद्गतोपदेशमाह;—

**पालिज्ज य परिसुद्धे आणाए चेव सति पयत्तेण । वज्झासंपत्तीय वि एत्थ तहा निज्जरा विउला ॥ ४५१ ॥**

पालयेच्च रक्षेत् पुनः परिशुद्धान् सर्वातिचारपरिहारात्, आज्ञया चैव प्रवचनोक्तैस्तैस्तैरुपायैरित्यर्थः, सदा सर्वकालं प्रयत्नेनादरेण महता । कुतः । यतो बाह्यासम्प्राप्तावपि बाह्यस्याभिग्रहविषयस्य क्षमणीयादेरर्थस्याप्राप्तावपि, अत्राभिग्रहे गृहीते सति तथा तत्प्रकारस्य निग्रहीतुमिष्टस्य क्रोधादेः कर्म्मणो निर्जरा क्षपणा विपुला प्रचुरा सम्पद्यत इति ॥ ४५१ ॥

एतदपि कुत इत्याह;—

**तस्संपायण भावो अवोछिन्नो जओ हवति एवं । तत्तो य निज्जरा इह किरियायवि हंदि विन्नेया ॥ ४५२ ॥**

तत्सम्पादनभावोऽभिग्रहविषयस्यार्थस्य निष्पादनपरिणामोऽव्यवच्छिन्नोऽत्रुटितो, यतो भवति एवमभिग्रहप्रतिपत्तौ ।

एवमपि किमित्याह–तस्मादेवाव्यवच्छिन्नात् तत्सम्पादनपरिणामाद् निर्जरेह प्रवचने जैने क्रियायामप्यभिग्रहगोचरार्थनिष्पादनेऽपि भवति, हंदीति पूर्ववत्, विज्ञेयाऽवबोद्धव्या । न हि क्रियामात्राद् भावशून्यात् किञ्चित् फलमस्ति, किंतु भावात् । यथोक्तम्—"क्रियाशून्यश्च यो भावो भावशून्या च या क्रिया । तयोरन्तरमुन्नेयं भानुखद्योतयोरिव ॥ १ ॥ खद्योतकस्य यत्तेजस्तदल्पं च विनाशि च । विपरीतमिदं भानोरेवमत्र विभाव्यताम् ॥ २ ॥" ॥ ४५२ ॥

अमुमेवार्थं दृष्टान्ततः साधयन्नाह;—

**आहरणं सेट्ठिदुगं जिणिंदपारणगदाणदाणेसु । विहिभत्तिभावभावा मोक्खंगं तत्थ विहिभत्ती ॥ ४५३॥**

आहरणं दृष्टान्तः श्रेष्ठिद्विकं जीर्णाभिनवलक्षणं जिनेन्द्रपारणकदानादानयोर्जिनेन्द्रस्य भगवतो महावीरस्य च्छद्मस्थकाले विहरतः पारणके प्रवृत्ते दानेऽदाने च विधिभक्तिभावाभावाद् विधिभक्त्योर्भावमभावं चापेक्ष्याहरणं मोक्षांगं मोक्षकारणं तत्र पारणकदानेऽपि विधिभक्ती संवृत्ते ॥ ४५३ ॥

एनामेव गाथां गाथात्रयेण व्याचष्टे;—

**वेसालि वासठाणं समरे जिणपडिमसेट्ठिपासणया । अतिभत्तिं पारणदिणे मणोरहो अन्नहिं पविसे॥४५४**
**जातिच्छिदाणधारा लोए कयपुन्नगोत्ति य पसंसा । केवलिआगम पुच्छण को पुन्ने जुन्नसेट्ठित्ति ॥ ४५५॥**

इह किलैकदा भगवान् श्रीमन्महावीरः छद्मस्थकाले विहरन् वेशाल्यां पुरि वर्षासु स्थानमकरोत् । ततः 'समरे'इति

कामदेवायतने 'जिणपडिमसिट्ठि पासणया'इति तं जिनं प्रतिमास्थितं जीर्णश्रेष्ठी नित्यमागत्य पश्यति स्म । 'अइभत्ति'ति भक्तिश्चातीव तद्विषया तस्य समजनि । अन्यदा चतुर्मासकक्षपणस्य विकृष्टतपसः पारणकदिने प्रवृत्ते मनोरथो वक्ष्यमाणरूपो जज्ञे । गृहद्वारावलोकनादिविनयपरो यावदसावास्ते तावत् स जिनोऽन्यत्राभिनवश्रेष्ठिगृहे प्रविष्टः ॥ ४५४ ॥

दापिता च तेन स्वमाहात्म्यौचित्येन तस्मै भिक्षा । कृता च तद्देशविचारिभिर्जृम्भकदेवैरर्हत्पारणकसन्तुष्टैर्यादृच्छिकदानधारा वसुधारावृष्टिलक्षणा । सा चैवं विज्ञेया—"अद्धत्तेरसकोडी उक्कोसा होइ तत्थ वसुधारा । अद्धत्तेरसलक्खा जहन्निया होइ वसुधारा" ॥ १ ॥ ततो लोके कृतपुण्यकोऽसाविति तस्यैवं च प्रशंसा विजृम्भिताऽभिनवश्रेष्ठिनः । 'केवलि आगम'त्ति कालेन च पार्श्वापत्यीयस्य केवलिनः कस्यचिद् आगमे तत्र बहलकुतूहलाकुलचेतसा लोकेन पृच्छाऽकारि भगवन्! कोऽत्र परिपूर्णः पुण्यवान्? भगवता चोचे जीर्णश्रेष्ठीति ॥ ४५५ ॥

ननु जीर्णश्रेष्ठिनः पारणकविषयो मनोरथ एवासीन्न कश्चिदभिग्रह इति कथमसौ दृष्टान्ततयोपन्यस्त इत्याशंक्याह;—

एत्थ हु मणोरहो च्चिय अभिग्गहो होति नवर विन्नेओ ।
जदि पविसति तो भिक्खं देमि अहं अस्स चिंतणओ ॥ ४५६ ॥

अत्र पारणकविषये 'हुः' यस्माद् मनोरथ एवाभिग्रहः पात्रदानविषयो नवरं केवलं न पुनरन्यत् किञ्चिद् भवति विज्ञेयः । कथमित्याह—यदि प्रविशति कथञ्चिद् मम गृहे भगवानेषः, ततो भिक्षां ददाम्यहमस्मै चिन्तनादेवंरूपात् । अय-

मत्राभिप्रायः—सर्वोऽप्यभिग्रह इच्छा–प्रवृत्ति–स्थैर्य–सिद्धिभेदाच्चतुर्धा परिगीतः। तत्रास्येच्छारूप एव परिशुद्धोऽभिग्रहो भवन् स एव पारणकभेरीशब्दश्रवणकालं यावत् प्रवृद्धः सन् पारंपर्येण मोक्षफलतया संवृत्तः। इतरस्य च माहात्म्यौचित्येन दत्तदानस्याप्यभ्युत्थानादेर्भक्तेश्च गुणवद्बहुमानरूपाया अभावाद् यादृच्छिकवसुधारादिफल एव संवृत्तः परिणामो, न पुनर्निर्वाणफल इति ॥ ४५६ ॥

अथान्यदप्यभिग्रहमाहात्म्यमभिधातुमाह;—

**पच्चग्गकयंपि तहा पावं खयमेइऽभिग्गहा सम्मं। अणुबंधो य सुहो खलु जायइ जउणो इहं नायं ॥४५७॥**

प्रत्यग्रमाकुट्टिकादिदोषात् सद्योरूपं कृतं निर्वर्त्तितं प्रत्यग्रकृतं, किं पुनश्चिरकालकृतत्वेन जीर्णभूतमित्यपिशब्दार्थः, तथेति वक्तव्यान्तरसमुच्चये, पापं ऋषिघातादिजन्यमशुभं कर्म क्षयमपगममेति प्रतिपद्यते। कुत इत्याह—अभिग्रहात् 'सम्मं'त्ति सम्यग्रूपतया परिपालितात्। अनुबन्धश्चानुगमः पुनः शुभः पुण्यकर्म्मानुवृत्तिरूपः, खलुर्वाक्यालंकारे, जायते। यमुनो राजा इहार्थे ज्ञातं दृष्टान्तः ॥ ४५७ ॥

तदेव गाथाष्टकेन संगृह्णन्नाह;—

**महुराए जउणराया जउणावंके य डंडमणगारो। वहणं च कालकरणं सक्कागमणं च पवज्जा ॥ ४५८ ॥ १ ॥**

**जउणावंके जउणाए कोप्परे तत्थ परमगुणजुत्तो। आयावेण्ण महप्पा दंडो नामेण साहुत्ति ॥ ४५९ ॥ २ ॥**

कालेण रायणिग्गम पासणया अकुसलोदया कोवो। खग्गेण सीसछिंदण अण्णेउ फलेण ताडणया॥४६०
सेसाण लेट्ठुखेवे रासी अहियासणाए णाणत्ति । अंतगडकेवलित्तं इंदागम पूयणा चेव॥ ४६१ ॥ ४ ॥
दट्ठूण रायलज्जा संवेगा अप्पवहपरीणामो। इंदनिवारण सम्मं कुण पायच्छित्त मो एत्थ ॥ ४६२ ॥ ५ ॥
साहुसमीवगमणं सवणं तह चेव पायछित्ताणं। किं एत्थ पायच्छित्तं सुद्धं चरणंति पव्वज्जा ॥ ४६३ ॥ ६ ॥
पच्छायावाइसया अभिग्गहो सुमरियम्मि नो भुंजे। दरभुत्ते चेवं चिय दिवसम्मि न तेण किल भुत्तं ४६४
आराहण कालगओ सुरेसु वेमाणिएसु उववण्णो। एवं अभिग्गहो इह कल्लाणणिबन्धणं णेओ ॥ ४६५॥

इह मध्यमप्रतिष्ठितगगनतलोल्लेखिशिखररत्नमयदेवताविनिर्मितजिनस्तूपप्रभावोपलब्धसर्वदिङ्मण्डलव्याप्तिश्लाघायां मथुरायां पुरि यमुनो राजाऽभूत्। तत्र च यमुनावक्रे दण्डो नामानगार आतापनां चकार। 'वहणं च'त्ति हननं च यमुनेन राज्ञा तस्य कृतम्। कालकरणं च सञ्जातं शक्रागमनं चेन्द्रावताररूपम्। ततः प्रव्रज्या यमुनस्य समजनीति॥ ४५८॥ १ ॥

एतामेव गाथां गाथा सप्तकेन व्याचष्टे—'जउणा' इत्यादि यमुनावक्रे, एतदुक्तं भवति—यमुनाया नद्याः कूर्परे, कूर्परो नाम समाकुञ्चिताग्रभागस्य बाहोर्यादृश आकारस्तदाकारं यत् क्षेत्रं तत्र, परमगुणयुक्त आतापयति शीताद्यधिसहनेनात्मानमायासयति महात्मा प्रशस्तपरिणामो दण्डो नाम्ना साधुरिति ॥ ४५९ ॥ २ ॥

एवं च तस्मिन्नातापयति, कालेन केनचिद् गतेन, राज्ञो यमुनस्य 'निग्गम'त्ति नगराद् बहिर्निर्गमे जाते 'पासणय'त्ति दण्डानगारदर्शनमभूत्। ततो निर्निमित्तमेवाकुशलोदयात् क्लिष्टकर्मविपाकात् तस्य तत्र दण्डानगारे कोपो बभूव। तत ऐहिकमामुष्मिकं च पापफलमनालोच्यैव तेन तस्य साधोः खड्गेन शीर्षच्छेदनमकारि। अन्ये त्वाचार्याः फलेन बीजपूरादिना तेन ताडना कृतेति ब्रुवते ॥ ४६० ॥ ३ ॥

तदनु शेषाणां सेवकलोकानां सम्बन्धिनि लेष्टुक्षेपे राशिर्लेष्टूनामसौ जातः। अधिसहनायां 'स्वकृतकर्मफलपाकोऽयं मे समुपस्थितो न कश्चित् कस्यचिद् अपराधः' एवंरूपायां जातायां समुल्लसितशुक्लध्यानस्य ज्ञानं केवलाख्यमजायत। ततोऽन्तः कर्मणां सर्वेषामेव तत्कालं कृतो येनासावन्तकृतः, स चासौ केवली च तस्य भावस्तत्त्वं सम्पन्नमस्य, तत्क्षणमेव सिद्धोऽसावित्यर्थः। तत इन्द्रागमः शक्रावतारः पूजना चैव पुष्पधूपादिभिस्तच्छरीरस्य कृता शक्रेणेति ॥ ४६१॥४॥

दृष्ट्वेन्द्रागमनं पूजनं च राज्ञो यमुनस्य लज्जा तेन महता स्वस्यानुचितचेष्टनेन त्रपा संवृत्ता। संवेगाद् 'धिग्मामेवमसमञ्जसकारिणम्' एवंरूपादात्मवधपरिणामः समजनि। लब्धाभिप्रायेण चेन्द्रेण निवारणमकारि। अभाणि च सम्यग् यथावत् कुरु प्रायश्चित्तमेतदपराधशुद्धिरूपं, 'मो' इति पूर्ववत्, अत्रापराधप्राप्ताविति ॥ ४६२ ॥ ५ ॥

साधुसमीपे गमनं कृतं, श्रवणमाकर्णनं, तथा चैवेति समुच्चये, प्रायश्चित्तानामालोचनादीनां पाराञ्चिकपर्यवसानानाम्। ततः किमत्रापराधे प्रायश्चित्तमिति पप्रच्छ। कथितं च साधुभिः शुद्धं चरणं प्रायश्चित्तमित्येवं प्रतिपाद्यते। प्रव्रज्या सर्वसावद्ययोगविरहलक्षणा तेन प्रतिपन्ना ॥ ४६३ ॥ ६ ॥

अभिग्रहविषये यमुनराजज्ञातम्.

प्रतिपन्नायां च तस्यां पश्चात्तापातिशयात् तेनाभिग्रहो गृहीतो यथा भोजनकालाद् अर्वाक् स्मृतेऽपराधे नो नैव तद्दिने भुञ्जे, दरभुक्तेऽप्यर्द्धभुक्तेऽपि सति यदि स्मरामि तदा एवमेव न भुञ्जे इत्यर्थः। एवं गृहीताभिग्रहेण तेन भगवता दिवस-मप्येकमपि च दिवसमित्यर्थः, किलेत्याप्तप्रवादसूचनार्थः, न भुक्तम्, अभिग्रहस्य नित्यमेवानुस्मरणात् ॥ ४६४ ॥ ७ ॥

आराधना आलोचना व्रतोच्चारादिका पण्डितमरणरूपा जाता। कालगतः सन् सुरेषु वैमानिकेषूत्पन्नः। उपसंहर-न्नाह–एवममुना प्रक्रमेणाभिग्रहो यमुनराजर्षिगृहीताभिग्रहवद् इह प्रवचने कल्याणनिबन्धनं ज्ञेय इति ॥ ४६५ ॥ ८ ॥

अथ परमतमाशंकते;—

**जइ एवं रिसिघाएवि हंत आराहणा इमस्सेसा। कह खुड्डया इयाणं दोसलवाणंतसंसारो ? ॥ ४६६ ॥**

यदि चेदेवमाकुट्टिकया ऋषिघातेऽपि दण्डनामानगारमारणेऽपि बोधिलाभमूलाङ्गीकृते सति। 'हंत' इति कोमलामं-त्रणे। आराधना परिशुद्धप्रव्रज्यालाभलक्षणा अस्य यमुनराजस्यैषा सुगतिलाभफला जाता। कथं तर्हि क्षुल्लकादीनां "साहुपओसी खुड्डो" इत्यादिग्रन्थोक्तानां दोपलवात् साधुप्रद्वेषादिमात्रलक्षणादनन्तसंसारः, उपलक्षणत्वात् संख्या-तोऽसंख्यातश्च केषाञ्चिदिति ? ॥ ४६६ ॥

**भणइ अप्पडियारो दोसलवो तेसि ण पुण इयरस्स। कयपडियारो य इमो ण फलइ विसमेत्थमाहरणं ॥**

भण्यते समाधिरत्र। अप्रतिकारोऽकृतप्रायश्चित्तरूपप्रतिविधानो दोपलवस्तेषां क्षुल्लकादीनामिति स तथा विकारमा-

पन्नः, न पुनरितरस्य यमुनराजर्षेस्तत्क्षणमेव प्रतिपन्नोदग्रप्रायश्चित्तस्य । यदि नामैवं ततः किमित्याह–कृतप्रतीकारश्चायं दोषलवो न फलति न विपच्यते । विषं स्थावरादिभेदभिन्नमत्रार्थे आहरणं दृष्टान्तः ॥ ४६७ ॥

तदेव भावयति;—

**मारइ विसलेसोवि हु अकयपडीयार मो णउ बहुंपि । कयपडियारं तं चिय सिद्धमिणं हंत लोएवि॥४६८॥**

मारयति च्युतजीवितं करोति विषलेशोऽपि हु, किं पुनः प्रभूतं तदित्यपिहुशब्दार्थः, 'अकयपडियार'त्ति अकृतप्रतीकारोऽविहितमंत्रतंत्रप्रतिविधानो 'मो' इति पूर्ववत् । न तु न पुनर्बह्वपि कृतप्रतीकारं तदेव विषं मारयति । सिद्धं प्रतीतमिदं हन्त लोकेऽपि पृथग्जने, किं पुनः शास्त्रे, इत्यपिशब्दार्थः ॥ ४६८ ॥

प्रतीकारमेव भावयति;—

**मंतागयरयणाणं सम्मपओगो विसम्मि पडियारा । आणेसणिज्जभिग्गहरूवा एते उ दोसविसे ॥ ४६९ ॥**

मंत्रा गारुडशास्त्रप्रसिद्धाः, अगदा औषधानि, यथा—"मरिचं निम्बबीजानि सैन्धवं मधुना सह । घृतपीतोऽगदो-हन्ति विषं स्थावरजङ्गमम्" ॥ १ ॥ रत्नानि सर्प्पशिखामणिप्रभृतीनि । ततस्तेषां मंत्रागदरत्नानां सम्यक् प्रयोगो यथावद् विनियोजनं विषे प्रतीकाराः । तथा, आज्ञा सर्वविद्वचनोपयोगरूपा, एषणीयमाधाकर्म्मादिदोषविकलमन्नपानवस्त्रपात्रादि, अभिग्रहा द्रव्यक्षेत्रकालरूपाः, ततस्ते रूपं येषां त आज्ञैषणीयाभिग्रहरूपा एते तु प्रतीकाराः सम्यक् प्रयुक्ता

अपराध-
पश्चात्तापे-
लाभसाम-
र्थ्यम्.

दोषविषे विज्ञेयाः। यथा हि मंत्रादिभिर्निगृह्यमाणं विषं निष्फलीभवति तथाज्ञैषणाभिग्रहैर्मन्त्रागदरत्नसमानैर्दोषविषं प्रतिविधीयमानं निष्फलीभावमाप्नोतीति ॥ ४६९ ॥

**एए पउंजिऊणं सम्मं निज्जरइ अइबहूयंपि । दोसविसमप्पमत्तो साहू इयरोव बुद्धिजुओ ॥ ४७० ॥**

एतानाज्ञैषणीयाभिग्रहान् प्रयुज्य सम्यग् अविपरीतरूपतया निर्जरयति परिशाटयति अतिप्रभूतमप्यसंख्यातभवोपात्ततया प्रचुरमपि दोषविषमप्रमत्तः सर्वातिचारपरिहारवान् साधुर्यतिः। दृष्टान्तमाह–इतर इव स्थावरादिविषवेगव्याकुलकलेवर इव नरो बुद्धियुतो विषपरिणामदारुणभावदर्शी मंत्रादिसम्यग्प्रयोगवान् इतरविषमिति ॥ ४७० ॥

एतदेव विस्तरतो भावयति;—

**कम्मं जोगनिमित्तं वज्झइ वंधट्ठिती कसायवसा। सुहजोयम्मी अकसायभावओऽवेइ तं खिप्पं ॥ ४७१ ॥**

कर्म्म ज्ञानावरणादि योगनिमित्तम्, इह योगो मनोवाक्कायव्यापारः। यथोक्तम्—"मणसा वाया काएण वावि जुत्तस्स विरियपरिणामो। जीवस्स अप्पणिज्जो स जोगसन्नो जिणक्खाओ ॥ १ ॥" ततो योगो निमित्तं यस्य तत् तथा बध्यते संगृह्यते। तस्य च बन्धस्य बन्धस्थितिर्बन्धावस्थानकालो जघन्यमध्यमोत्कृष्टभेदभिन्नः कषायवशात् तथारूपकषायपारतंत्र्यात्। यदि नामैवं, ततः किमित्याह–शुभयोगे प्रत्युपेक्षणादिरूपे साधुजनयोग्ये क्रियमाणेऽकषायभावतः कषायपारतंत्र्यवैकल्यादपैति नश्यति तत् कर्म्म क्षिप्रं झगिति तैलवर्त्तिक्षयात् प्रदीप इवेति ॥ ४७१ ॥

अत्रोपपत्तिमाह;—

**गरुओ य इहं भावो णेओ सहगारिगरुयभावेण । तित्थगराणा णियमा एत्थं सहगारिणी जेण ॥ ४७२ ॥**

गुरुकश्च गरीयानेव इह शुभयोगे प्रवृत्तेः तत्तत्क्रियोपयोगरूपो ज्ञेयः । केन हेतुनेत्याह–सहकारिगुरुकभावेन । एतदेव दर्शयति–तीर्थकराज्ञा भगवदादेशरूपा नियमादवश्यं भावादत्र शुभयोगे सहकारिणी सहायभूता येन कारणेन-वर्त्तत इति ॥ ४७२ ॥

**दोसो उ कम्मजो च्चिय ता तुच्छो सो इमंतु अहिगिच्च । लेसो वि अग्गिणो डहइ हंदि पयरंपि हु तणाणं ॥**

दोषस्तु ऋषिघातादिः पुनः कर्मज एव जीवस्वरूपविलक्षणकषायादिकर्मोद्भव एव, ततस्तुच्छः फल्गुरूपः स दोषः, पुनस्तुशब्दस्य पुनःशब्दार्थस्येह योजनात्, इमां सर्वज्ञाज्ञामधिकृत्यापेक्ष्य । अत्र प्रतिवस्तूपमालक्षणं दृष्टान्तमाह–लेशोप्यग्नेः, किं पुनर्बहुरसावित्यपिशब्दार्थः, दहति भस्मभावमानयति व्रातमपि हु तृणानां, किं पुनः स्तोकानि तानीत्यपिहुशब्दार्थः ॥ ४७३ ॥

कथमित्याह;—

**अणुकूलपवणजोगा ण तु तव्विरहम्मि सिद्धमेयं तु । भावो उ इहं अग्गी आणा पवणो जहा भणिओ ४७४**

अनुकूलपवनयोगाद् दाह्यतृणाभिमुखप्रवृत्तपवनसम्बन्धात्, न पुनस्तद्विरहे, सिद्धं प्रतीतमेतत् त्विदं पुनः । अथ

शुभयोगे आज्ञाया-सहकारित्वप्रद०—

दृष्टान्तयोजनामाह—भावः प्रायश्चित्तप्रतिपत्त्यादिपरिणामरूपः, तुः पादपूरणार्थः, इह दोषतृणदहनेऽग्निरनलः, आज्ञा पवनो यथा भणितो भावाग्निसाहाय्यकारी ॥ ४७४ ॥

नन्वाज्ञापवनयोर्बृहदन्तरत्वात् कथं दृष्टान्तदार्ष्टान्तिकभाव इत्याशंक्याह;—

**सा पुण महाणुभावा तहवि य पवणाइरूव मो भणिया। विवरीएसा समओदिया य तह बंधवुड्ढिकरा॥**

सा पुनराज्ञा महानुभावा पवनमपेक्ष्य प्रौढसामर्थ्याऽशेषदाहका, दाह्यकर्मकचवरभस्मभावसम्पादनात्, तथापि च लोकप्रतीतशेषोपमानाभावादिह तावत् पवनरूपा। अन्यत्र तु "आणा हि मोहविसपरममंतो, जलं रागाइजलणस्स, कम्मवाहिविगिच्छासत्थं, कप्पपायवो सिवफलस्स" इत्यादिसूत्रेषु परममंत्रादिरूपा भणिता। 'मो' पूर्ववत्। तथा विपरीता द्रव्यक्षेत्राद्यनौचित्यसेवनेन विपर्यस्ता एषा आज्ञा, किं विशिष्टापि सतीत्याह—समयोदितापि सामान्यतः सिद्धान्तनिरूपितापि, तथेति समुच्चये, बन्धवृद्धिकरी कर्म्मोपचयकारिणी ॥ ४७५ ॥

उपसंहर्तुमाह;—

**आलोचियव्वमेयं सम्मं सुद्धाए जोगिवुद्धीए। इयरीए उ ण गम्मइ रूवं व सदंधसपणाए॥ ४७६ ॥**

आलोचनीयं मीमांसनीयमेतद् यथेहेयमाज्ञा सम्यक् प्रयुक्ता भावाग्नेः पवनतुल्या, विपरीता तु बन्धवृद्धिकरी,

सम्यक् शुद्धया योगिबुद्ध्या सज्ज्ञानगुणपात्रजनयोग्यप्रज्ञया, इतरया त्वयोगिबुद्ध्या न गम्यते न बुद्ध्यते। दृष्टान्तमाह—रूपवद् नीलपीतादिलक्षणं रूपमिव सदान्धसंज्ञया जात्यन्धविहितहस्तस्पर्शादिलक्षणबुद्ध्या ॥ ४७६ ॥

आज्ञाया-
मन्धान-
न्धविभा-
गप्र०—

अथ भावतोऽन्धानन्धविभागं दर्शयति;—

**जच्चंधो इह णेओ अभिण्णगंठी तहंधलयतुल्लो। मिच्छद्दिट्ठी सज्जक्खओ य सइ सम्मदिट्ठी ओ॥ ४७७॥**

जात्यन्धो जन्मकालप्रभृत्येव नयनव्यापारविकल इह सद्भूतभावरूपोपलब्धौ ज्ञेयोऽभिन्नग्रन्थिः कदाचनाप्यव्यावृत्तमिथ्यात्वतिमिरपटलो जीवः ॥ १ ॥ तथान्धकतुल्यः पश्चान्नष्टदृष्टिजनसमानो मिथ्यादृष्टिः, अवश्यवेद्यमिथ्यात्वमोहोदयाद् ग्रन्थिभेदेऽपि सम्यक्त्वभ्रंशानन्तरं मिथ्यात्वगतो जीवः ॥ २ ॥ सज्जाक्षश्च प्रगुणलोचन एव सदा सर्वकालं सम्यग्दृष्टिस्त्वविचलितसम्यग्बोधः पुनर्जन्तुः ॥ ३ ॥ यथैको जात्यन्धो, द्वितीयोऽन्धः, तृतीयः सज्जाक्ष इति त्रयो लोके रूपोपलंभयोग्या नरा वर्त्तन्ते। तथा धर्मतत्त्वरूपोपलंभविषयेऽप्यभिन्नग्रन्थिर्भिन्नग्रन्थिश्च मिथ्यादृष्टिः सम्यग्दृष्टिश्च तृतीयो योग्यरूपतया वाच्य इति ॥ ४७७ ॥

यश्चैतेषु सज्जाक्षतुल्यः सम्यग्दृष्टिः, स यत् करोति तदाह;—

**एसो मुणेइ आणं विसयं च जहट्ठियं णिओगेणं। एईए करणम्मि उ पडिबंधगभावओ भयणा॥ ४७८॥**



एष सम्यग्दृष्टिर्मुणति जानीते आज्ञां विषयं चोत्सर्गापवादरूपं यथावस्थितं द्रव्यक्षेत्रकालभावादिशुद्धं नियोगेन

नियमेन, एतस्या आज्ञायाः करणे पुनः प्रतिवन्धकभावाद् दृढचारित्रमोहोदयात् तीव्रवीर्यान्तरायभावाच्च परिनिश्चिताज्ञा स्वरूपस्यापि जन्तोर्भजना कदाचिद् आज्ञाकरणं न स्यादपीत्यर्थः । तथा हि कृष्णश्रेणिकादीनां करतलकलितमुक्ताफलन्यायेन निश्चिताज्ञास्वरूपाणामत एव भवनिष्क्रमणाभिमुखमानसजन जनिताद्भुतसाहाय्यानाम्, तथा, "जैनं मुनिव्रतमशेषभवात्तकर्मसन्तानतानवकरं स्वयमभ्युपेतः । कुर्यात् तदुत्तरतरं च तपः कदाहं भोगेषु निःस्पृहतया परिमुक्तसङ्गः ! ॥ १ ॥" इत्येवं प्रवर्द्धमानाधिकमनोरथानामपि पूर्वभवनिकाचितक्लिष्टकर्मविपाकाद् न चारित्रलाभोऽभूत् । अत एव पठ्यते—"कम्माइं पुण घणचिक्कणाइं कठिणाइं वज्जसाराइं । नाणड्ढयंपि पुरिसं पंथाओ उप्पहं णिंति" ॥ १ ॥ इति ॥ ४७८ ॥

उपसंहरन्नाह;—

**कयमेत्थ पसंगेणं समासओ जेण एस आरंभो । दिसिमत्तदंसणफलो पगयं चिय संपयं वोच्छं ॥ ४७९ ॥**

कृतं पर्याप्तमत्राज्ञामाहात्म्यख्यापने प्रसङ्गेन विस्तरेण । समासतः संक्षेपेण येन कारणेनैष उपदेशपदग्रन्थरूप आरंभः प्रयत्नः । कीदृश इत्याह–दिङ्मात्रदर्शनफलः कस्यचिद् उपदेशस्य परिपूर्णतया भणितुमनुपक्रान्तत्वात् । ततः प्रकृतमेवाभिग्रहमाहात्म्यख्यापनरूपं वस्तु साम्प्रतं वक्ष्ये ॥ ४७९ ॥

एतदेव दर्शयति;—

**अण्णंपि इहाहरणं वणियसुया सज्झिला उ बोहीए । पव्वज्ज सीयल मणोरहो य सुद्धाए फलभेओ ॥४८०॥**

अन्यदपि पूर्वोदाहरणविलक्षणमिहाभिग्रहमाहात्म्यप्रस्तावने वणिक्सुतौ वाणिजकनन्दनौ 'सज्झिलाउ'त्ति सज्झिलकौ सोदरौ। तुः प्राग्वत्। कथमुदाहरणमित्याह—बोधौ प्राप्तायामेकस्य 'पव्वज्जसीयल'त्ति प्रव्रज्या शीतला मन्दा समुदग्राचा[1]रगुरुगच्छादिसहकारिकारणवैकल्याज्जाता। द्वितीयस्य तु मनोरथस्त्वभिलाषः पुनः शुद्धायां प्रव्रज्यायामेव समुत्पादि, न तु प्रव्रज्या। मृतयोश्च समकमेव फलभेद आराधकविराधकजन्यदेवत्वलाभरूप इति ॥ ४८० ॥

इमामेव गाथां गाथाद्वयेन प्रपञ्चयति;—। ( ग्रन्थाग्र० ८००० )

**तगराए व[2]सुसुया सेण-सिद्ध धम्मगुरुबोहि एगस्स। णिक्खमणमकिरिय मणोरहो उ अण्णस्स सुद्धम्मि॥**
**कालेण मिलणमसणीघाओ उववाय वंतरविमाणे। केवलिआगम पुच्छा कहणं भावम्मि बहुमाणो॥४८२**

तगरायां पुरि वसुसुतौ वसुनामकश्रेष्ठिसुतौ पुत्रौ सेनसिद्धनामानावभूताम्। तयोश्च कदाचिद् 'धम्मगुरुबोहि'त्ति धर्माभिधानगुरुपार्श्वगतयोर्बोधिः धर्मप्राप्तिरजायत। ततश्चैकस्य निष्क्रमणं प्रव्रज्या प्रतिपत्तिरूपं संवृत्तं, परमक्रिया कुतोऽपि प्रमादात् प्रत्युपेक्षणा—प्रमार्जनादिक्रियाहानिरूपा संवृत्ता। मनोरथस्तु मनोरथ एवान्यस्य द्वितीयस्य शुद्धे निष्क्रमणे प्रवृत्तः, न पुनः कथञ्चित् तज्जातमिति ॥ ४८१ ॥

कालेन कियतापि गतेन मिलनमेकत्रावस्थानलक्षणं तयोर्जातम्। सुखासीनयोश्च समुचितस्ववृत्तान्तकथनश्रवणप्रवृ-



1 ग. 'समुदयाचार'—। 2 ग. 'वणिसुया'।

तयोरशनिघातोऽकस्मादेव नभस्तलाद् विद्युन्निपाताद् विनाशो जातः। तदनूपपातस्तयोरजनि। केत्याह—व्यन्तरविमाने प्रथमस्य व्यन्तरे, द्वितीयस्य तु विमाने सौधर्माद्यमरावासलक्षणे इति। अन्यदा केवलिनः कस्यचिदागमे पृच्छा लोकेन कृता, यथा—तयोः कः कुत्रोत्पन्नः? कथनं यथा वृत्तान्तस्य तेन कृतम्। ततो लोकस्य भावे शुद्धधर्ममनोरथलक्षणे बहुमानोऽजनि, न त्वशुद्धानुष्ठाने इति ॥ ४८२ ॥ अथ प्रकृतयोजनामाह;—

**एत्थवि मणोरहोच्चिय अभिग्गहो सुद्धणिक्खमणगम्मि। बहुमाणओ वि अविराहणाए एत्थं फलमुदारं॥**

अत्रापि न केवलं प्राच्ये जीर्णश्रेष्ठिदृष्टान्ते मनोरथ एवाभिग्रहः शुद्धनिष्क्रमणके शुद्धायामेव प्रव्रज्यायामित्यर्थः। ततो बहुमानतोऽपि पुरस्कारपरिणामादप्यविराधनायां प्रतिपन्नस्य कस्यचिद् अभिग्रहस्याभङ्गनलक्षणायां सत्यामत्र शुद्धनिष्क्रमणबहुमाने च सति फलमुदारमविराधितदेवभवलक्षणं सम्पन्नमिति ॥४८३॥ एवं स्थिते सति यत्कर्त्तव्यं तदुपदिशन्नाह;—

**अविराहणाए सुद्धे धम्मट्ठाणम्मि बुहजणेण तओ। जत्तो खलु कायव्वो ण अण्णहा संकिलिट्ठम्मि ॥ ४८४॥**

अविराधनया तिलतुषत्रिभागमात्रमपि भावतः प्रतिपन्नाभ्रंशरूपयोपलक्षिते शुद्धे निर्मलीमसे धर्मस्थाने चैत्यवन्दनादौ तत्तद्गुणस्थानोचिते बुधजनेन मतिमता लोकेन ततः सुमनोरथस्याप्युदग्रफलत्वाद्धेतोर्यत्न आदरः, खलु शब्दः पूर्ववत्, कर्त्तव्यो विधेयः; न नैवान्यथा शुद्धमनोरथोल्लंघनेन संक्लिष्टे क्रोधादिसंक्लेशबहुले धर्मानुष्ठाने ॥ ४८४ ॥ कुतः? यतः;—

**तवसुत्तविणयपूया ण संकिलिट्ठस्स होंति ताणंति। खमगागमि विणयरओ कुंतलदेवी उदाहरणा॥४८५॥**

तपःसूत्रविनयपूजाः प्रतीतरूपा एव न नैव संक्लिष्टस्य जन्तोर्भवन्ति त्राणं संसारगर्ते पतितस्यालम्बनम् । इति प्राग्वत् । अत्र क्षपको मासोपवासादिक्षपणकारी, आगमी पारगतागमसूत्रार्थोभयकुशल आचार्यः, विभक्तिलोपश्चोभयत्रापि, प्राकृतत्वात्, विनयरत उदायिनृपमारकः, कुन्तलदेवी कुन्तलदेशाधिपनरनाथपत्नी, उदाहरणानि दृष्टान्ताः ॥ ४८५ ॥

अथोदाहरणचतुष्टयमपि प्रत्येकं गाथात्रयेण भावयन् गाथाद्वादशकमाह;—

कुसुमपुरे अग्गिसिहो खमओ लिंगच्छओ य अरुणोत्ति । वासट्ठाणविहारे अहरुत्तरकोट्ठगे वासो ॥४८६॥१॥
पढमस्स संकिलेसो पावो एसोत्ति पायसो णिच्चं । बिइयस्स उ संवेगो साहुवरि वसामधण्णोहं ॥४८७॥२॥
भववुड्ढि तप्परित्तीकरणं वासंतगमणमोसप्पणे । वासे णिज्जरपुच्छा कहणं पुव्वोइयत्थस्स ॥ ४८८ ॥ ३ ॥
आगमिय किरियणाणं खुड्डग बहुमाण तप्पदूसणया । अणुबंध काल सप्पे उज्जाणे साहुठाणम्मि ४८९॥४
सज्झायभूमि खुड्डगगमणे अणिमित्त गुरुणिवारणया । पेहण सप्पे पडिणीयणाणमोहेणमह गुरुणो४९०॥५
केवलिआगम पुच्छा विसेसकहणाए साहुसंवेगो । तव्वयणओ य खामण सरणं आराहणा चेव ॥४९१॥६॥
विणयरओ उ उदाई राया आणाओ चिंत सामंते । एगस्स कहणम्म्हं ण कोइ जो तं विणासेइ ४९२॥७॥
उच्छिण्ण कुमारोलग्गणाए अहयं तु देहि आएसं । पडिसुणण गम अप्पवेस साहू अयं ति णिक्खमणं४९३

किरिया विणए वारस वरिसा वीसंभ पोसहे गुरुणा। पविसण सुत्ते कंकं गुरुणावि हवो सुदीहोत्ति॥४९४॥९
सम्मे कुंतलदेवी तदणणदेवीण मच्छरसमेया। पूयं कुणइ जिणाणं अइसयमो वच्चई कालो॥ ४९५॥ १०॥
गेलण्ण मरणवत्था पडरयणावणयणं अवज्झाणं। मरणं साणुप्पत्ती केवलि तज्जम्मपुच्छणया॥४९६॥ ११॥
कहणा देवीसंवेगवासणा नेह पूजकरणं च। सरणं वोही खामण पसमो आराहणा चेव॥ ४९७ ॥ १२ ॥

तत्र कुसुमपुरे पाटलिपुत्रापरनाम्नि नगरेऽग्निशिखो नाम क्षपकः षष्ठाष्टमादिनिष्ठुर तपोऽनुष्ठाननिष्टप्तदेहः, लिङ्गध्वजश्च लिङ्गमात्रोपजीवी साधुवेषविडम्बक इत्यर्थः, अरुणोऽरुणाभिधानो वभूव। इति पूर्ववत्। तयोश्च वर्षस्थानार्थं विहारो वर्षास्थानविहारस्तत्रोपस्थितेऽधरोत्तरकोष्ठके वसुभूतिश्रेष्ठिसमीपोपलब्धेऽधःकोष्ठकेऽधःस्थानापवरके उत्तरकोष्ठके च तदुपरिभागवर्तिनि अपवरके एव वासोऽवस्थानमभूत्॥ ४८६ ॥ १ ॥ तत्र च प्रथमस्याग्निशिखक्षपकस्य तपोमदमत्तस्यात्मानं वहु मन्यमानस्य संक्लेशोऽक्षमारूपः। कथमित्याह—पापः पापाचार एपोऽरुणनामायमित्थं मामभिभूय स्थित इत्येवंरूपः प्रायशो वाहुल्येन नित्यं सर्वदिनेषु दुर्गतिफलः प्रादुरभूत्। द्वितीयस्य त्वरुणस्य पुनः प्रायेण नित्यमेव संवेगः पश्चात्तापरूपः परिणामः। कथमित्याह–साधूपरि अस्य साधोः समुज्ज्वलशीलभरभाजः सर्वजगज्जीववत्सलस्य परमकरुणामृतनिधेर्दर्शनमात्रपवित्रीकृतजननयनस्योपरि वसाम्यवतिष्ठे। अधन्योऽहम्, एकं तावत् साधुसमाचारमान्यात्, द्वितीयं पुनरस्य श्रमणसिंहस्योपरि स्थानात्॥ ४८७ ॥ २ ॥

एवं च तयोस्तथावस्थितयोर्भववृद्धिः, तत्परित्तीकरणं सम्पन्नम्, अग्निशिखस्य भववृद्धिररुणस्य तु भवतुच्छभाव-करणं समजायतेत्यर्थः। वर्षान्ते गमनं वर्षाकालपर्यन्तेऽन्यत्र विहरणं ताभ्यामक्रियत। अन्यदा च कस्यचित् केवलिनः समवसरणे प्रवृत्ते 'वासे' इति वर्षाकालावस्थानविषये लोकेन निर्जरापृच्छा कर्मसाटपरिभ्रंशरूपा कृता, यथा–भगवन्! अनयोस्तपस्विनोरत्रकृतवर्षाकालावस्थानयोः कस्य कियती निर्जरा जातेति। तेन च केवलिना कथनं पूर्वोक्तस्यार्थस्य भववृद्धि–तत्परित्तीकरणलक्षणस्याकारीति ॥ ४८८ ॥ समाप्तं च क्षपकज्ञातम् ॥ १ ॥

साम्प्रतं चागमिकज्ञातमाह–तत्रागमिकः कश्चिदाचार्यः स्वभावत एव मेधादिगुणपात्रं सुगुरुपदप्रासादाभ्यस्तसमस्तागमः स्वगच्छनायकत्वमनुभवन्, परमृद्धिरससातगौरवपारवश्यमुपगतो वर्त्तते स्म। 'किरिय णाणं खुड्डग–'त्ति तस्य च सूरेः सम्बन्धिनि गच्छे क्षुल्लके। लघुवयसि कस्मिंश्चित् साधौ क्रिया प्रत्युपेक्षणा–प्रमार्जनादिरूपा सामाचारी सकलमनस्विमानवमानससन्तोषसम्पादिका, ज्ञानं च व्याकरणतर्कगणितज्यौतिषस्वसमयपरसमयशास्त्रपरिज्ञानलक्षणं तत्कालवर्त्तिविद्वज्जनशिरोमणिभावसूचकं तथाविधकर्मह्रासाद् युगपदेव समारूढे अभूताम्। ततो लोकस्यासाधारणतद्गुणाकृष्टचेतसो गुरुपूजोपेक्षणेन तत्र 'बहुमाण'त्ति बहुमानो वन्दनपूजनगुणग्रहणवस्त्रपात्रप्रतिलाभनादिरूपो भूयान् विजृम्भितः। पठ्यते चात्र—"शुद्धाः प्रसिद्धिमायांति लघवोऽपीह नेतरे। तमस्यपि विलोक्यन्ते दन्तिदन्ता न दन्तिनः॥ १ ॥" इत्येवं च स्थिते 'तप्पदूसणय'त्ति तस्य गुरोरसमशिष्यमत्सरक्षारविच्छुरितस्य प्रदूषणा प्रकृष्टदूषणारूपा प्रवृत्ता शिष्यं प्रति महत् कालुष्यमित्यर्थः। 'अणुवंधकालसप्पे' इति अनुबन्धेऽनुगमे प्रद्वेषस्य प्रवृत्ते सति कालो मरणमभूत्। मृतश्च सन्

सर्पः अञ्जनपुञ्जकालकायोऽनाकलितकोपप्रसर उद्याने तत्रैव साधुस्थाने मुनिलोकनिवासभूते स संभूतः ॥ ४८९ ॥ ४ ॥

अन्यदा च स्वाध्यायभूमौ वाचनाप्रच्छनादेः श्रुतधर्मस्य योग्यायां भुवि तेन क्षुल्लकेन गमने क्रियमाणेऽकस्मादेव 'अनिमित्त'त्ति अनिमित्तमपशकुनः संवृत्तः । 'गुरुणिवारणया' इति । ज्ञानस्य गुरुणाभिनवाचार्येण ततस्तेन तत्रगमन-निवारणा कृता । भणितं च तत्र गुरुणा 'निमित्ते कित्तिमे अत्थि निमित्ते' इति । दृष्टश्च सर्प्पस्तं क्षुल्लकं प्रति वेगेन प्रवर्त्तमानः । ततः प्रत्यनीकज्ञानं कश्चिदस्य प्रत्यनीकोऽयमिति परिज्ञानलक्षणमोघेन सामान्येन, न त्वसाविति विशेषेण, अथ सर्प्पदर्शनानन्तरं गुरोरभिनवाचार्यस्य सञ्जातम् ॥ ४९० ॥ ५ ॥ समये च केवल्यागमे पृच्छा जाता । विशेषकथनायां यथा—अयमेव भवतां पूर्वाचार्योऽमुमेव क्षुल्लकं प्रति वृद्धकोपो मृत्वा सर्प्पतया समुत्पन्न एवंरूपायां कृतायां साधुसंवेगः सञ्जातः, यथा—अहो दुरन्तता कषायाणां यदेवंविधां सकलविद्वच्चक्रचित्तचमत्कारकारिणीं वर्त्तमानयुगैकागमिकतामुपलभ्यायमस्मद्गुरुर्दत्तधार्मिकजनोद्वेगां सर्प्पतां प्राप्तः । तद्वचनतस्तु केवलिवचनात् पुनः क्षामणा सर्वैरेव साधुभिः समकालमेव बद्धाञ्जलिभिः क्षमस्वास्मदीयमपराधमित्येवंरूपा तस्य कृता । ततः स्मरणं जातिस्मरणलक्षणं, कृतानशनस्याराधना चैव पण्डितमरणेन देवलोकलाभलक्षणा संजातेति ॥ ४९१ ॥ ६ ॥ **समासमागमिकाख्यानकम् ॥ २ ॥**

विनयरतस्तु यथोदाहरणं सम्भूतस्तथोच्यते—इह पाटलिपुत्रे पूर्वमेव कल्पकज्ञातोक्तवृत्तान्त उदायीनाम राजा समभूत् । स च तेषु तेषु निमित्तेषु सामन्तान् नित्यमेवाज्ञापयन् कालमतिवाहयांचकार । अन्यदा च 'आणाओचिंतसामंते पगरम'त्ति आज्ञया तत्प्रकृया कृत्वा एकस्य सामन्तस्य चिन्ता समुत्पन्ना—कथं वयं हस्तीवाङ्कुशेनानया आज्ञया कदाच-

नापि मस्तकादनुत्तीर्णया सकष्टं जीवामः ? ततः कथनं निजाभिप्रायप्रकाशनं कृतं तेन स्वकीयपरिमितपरिषदे, यथाऽस्माकं न कश्चित् स जीवः समस्ति, यस्तमुदायिनमुदग्रशासनं विनाशयति ॥ ४९२ ॥ ७ ॥ तत उदायिना प्राक् कुतोऽप्यपराधादस्यैकस्य राज्ञो राज्यं 'उच्छिन्नत्ति' उच्छिन्नमुद्दालितमित्यर्थः, तस्य कुमारस्तस्यावलग्नायां प्रवृत्तो य आसीत् तेन प्रोक्तमहकं त्वहमेव तं विनाशयामि, दत्त आदेशम् 'पडिसुणणगमप्पवेसे' इति प्रतिश्रवणं कृतमनेन राज्ञा। ततस्तस्य पाटलिपुत्रे नगरे गमे गमने जाते वहूपायपरस्यापि राजकुलेऽप्रवेशे प्रवेशाभावे संपद्यमाने साधवोऽस्खलितप्रचारास्तत्र प्रविशन्तस्तेन दृष्टास्ततश्चिंतितमेष एवात्र प्रवेश उपाय इत्यस्माद्धेतोर्निष्क्रमणं व्रतग्रहणलक्षणमकार्यनेन ॥ ४९३ ॥ ८ ॥ 'विणए वारस वरिसा' इति, विनये सर्वसाधुगोचरे महान् यत्नोऽप्रारब्धा च क्रिया चक्रवालसामाचारीलक्षणेति । विश्वस्ता गुरवः । अन्यदा पोषधोऽष्टमीस्येति सर्वसाधुभिः प्रतिष्ठितविनयरताभिधानस्य तस्य गतानि द्वादश वर्षाणि । विश्वस्ता गुरवः । अन्यदा पोषधोऽष्टमीचतुर्दश्योः पर्वदिवसयोरन्यतमदिवसरूपे । गुरुणा सह तत्र राजकुले प्रवेशनमभूत् । ततो रात्रौ सुप्ते प्रतिपन्नपोषधे उदायिराजे मुनिनायके च 'कंकं' इति कंकलोहकर्त्तिका कण्ठकर्त्तनाय राज्ञो गले दत्ता । निर्गतश्चासौ ततः स्थानात् । गुरुणापि लब्धवृत्तान्तेन भवः सुदीर्घो नूनं मे प्रवचनोड्डाहाद् भविष्यतीति विचिन्त्य विहिततत्कालोचितकृत्येन सैव कंकलोहकर्त्तिका निजकण्ठे नियोजिता । प्राप्तौ च द्वावपि देवलोकम् । स पुनः परिपालितद्वादशवर्षव्रतः संक्लेशातिरेकाद् अनन्तभवमिति ॥ ४९४ ॥ ९ ॥ समाप्तं विनयरताख्यानकम् ॥ ३ ॥

अथ कुन्तलदेव्युदाहरणमुच्यते—तत्र 'सम्मे' इति सम्यक्त्वसमाचारे जिनभवनजिनबिम्बजिनयात्रादिके प्रारब्धे कीर्त-

लदेवी, तस्याः सकाशाद् अन्यास्ताश्च ता देव्यस्तासां विषये मत्सरसमेता राजलक्षणैकभर्तृद्रव्याभिलाषवशसमुत्पन्नेर्ष्या-दोषविषविकारा पूजां प्रत्यहं पुष्पधूपाद्युपचाररूपां करोति जिनानामर्हतां, 'अइसयमो'त्ति शेषदेवीभिः क्रियमाणपूजाया अतिशयवतीम् । एवं च व्रजति कालस्तस्या इति ॥४९५॥१०॥ अन्यदा तथाविधरोगवशाद् ग्लान्यं ग्लानिभावस्तस्माद् मरणावस्थोपस्थिता तस्याः । तदवस्थाया एव च तथाविधं प्रयोजनमपेक्ष्य प्रागनुभूतपटरत्नस्य कम्बलरत्नादेरपनयनमुद्दालनमकारि राज्ञा अपध्यानमार्त्तध्यानलक्षणं समभूदस्याः । तदनुमरणमभूत् । 'साणुप्पत्ती' इति शुनीभावोत्पत्तिः संवृत्ता । कालेन च केवलिनस्तत्रागतस्य कस्यचित् पार्श्वे तज्जन्मप्रच्छनमकारि लोकेन ॥ ४९६ ॥ ११ ॥ कथना तज्जन्मनस्तेन कृता । ततो 'देवीसंवेग'त्ति शेषदेवीनां संवेगः समजनि—अहो दुरन्तो मत्सरः, यदेवंविधधर्मकर्मनिर्म्मापणपरापि शुनीभावेनोत्पन्ना । ततः शेषदेवीभिस्तद्दर्शनमकारि। स्नेहश्च तस्यास्तासु संवृत्तः। पूजाकरणं तु धूपपुष्पादिसमभ्यर्च्चनरूपं ताभिस्तस्याः पुनः कृतम् । स्मरणं प्राग्भवस्य, बोधिः धर्मप्राप्तिस्तस्याः संवृत्ता । क्षामणा च ताभिस्तस्याः कृता । प्रशम आराधना चैव तस्याः संवृत्तेति ॥ ४९७ ॥ १२ ॥ समाप्तं कुन्तलदेव्युदाहरणम् ॥ ४ ॥ अथोपसंहरन्नाह;—

एयमिह दुक्खरूवो दुक्खफलो चेव संकिलेसो त्ति । आणासम्मपओगेण वज्जियव्वो सयावेस ॥ ४९८ ॥

एवं क्षपकाद्युदाहरणानुसारेणेह प्राणिवर्गे दुःखरूपोऽमर्षस्वभावो दुःखफलश्चैव शारीरमानसादिव्यसनपरंपरारूपोत्तरोत्तरकार्यः संक्लेशः कषायकालुष्यलक्षणः इत्यस्मात् कारणादाज्ञासम्यक्प्रयोगेणावितथजिनादेशव्यापारणेन वर्जयितव्यः सदाप्येष संक्लेश इति ॥ ४९८ ॥ येषु जीवेष्वेष उपदेशो दीयमानः सफलः स्यात्, तान् सप्रतिपक्षान् आह;—

सफलो एसुवएसो गुणठाणारंभगाण भव्वाणं । परिवडमा णाण तहा पायं न उ तट्ठियाणंपि ॥ ४९९ ॥

सफलः सप्रयोजन एप संक्लेशपरिहाररूप उपदेशो गुणस्थानारंभकाणां सम्यग्दृष्ट्यादिगुणस्थानकस्यात्मनि प्रवर्त्तकानां भव्यानां, विवक्षितगुणस्थानकं प्रति सम्पन्नाविकलयोग्यभावानां परिपतता जीवानां तथाविधक्लिष्टकर्म्मोदयाद् विवक्षितं गुणस्थानकसौधशिखरादधःप्रारब्धपातानां, तथेति समुच्चये, प्रायो बाहुल्येन । एवमुक्तं भवति ये निकाचितकर्म्मोदयात् प्रारब्धपातास्तेषामफल एव, ये तु सोपक्रमकर्माणस्तेषु स्यादेव फलवानुपदेश इति । व्यवच्छेद्यमाह—न तु न पुनस्तत्स्थितानामपि सर्वात्मना समधिष्ठितगुणस्थानकानामपीति ॥ ४९९ ॥ अमुमेवोपदेशमाश्रित्याह;—

सहकारिकारणं खलु एसो दंडोव्व चक्कभमणस्स । तम्मि तह संपयट्टे निरत्थगो सो जह तहेसो ॥५००॥

सहकारिकारणं, खलुरेवकारार्थः, एष उपदेशः स्वयोग्यतयैव गुणस्थानकारम्भकाणां प्रतिपाते च स्थैर्ययोग्यानां जीवानाम् । दृष्टान्तमाह—दण्डवत् कुलालदण्ड इव चक्रभ्रमणस्य । तथा हि—अनारब्धभ्रमणं चक्रं दण्डेन भ्राम्यते, प्रारब्धभ्रमणमपि मन्दीभूते तत्र पुनस्तेन भ्रमणतीव्रतां नीयते; एवमत्रापि भावना कार्या । तस्मिन् भ्रमणे तथा सर्वभावमन्दतापरिहारवता प्रकारेण सम्प्रवृत्ते निरर्थको भ्रमणकार्यविकलः स दण्डो यथा, तथैष उपदेशः प्रारब्धस्वगुणस्थानसमुचितक्रियाणामिति ॥ ५०० ॥ अथात्रैव परमतमाशंक्य परिहरन्नाह;—

जइ एवं किं भणिया निच्चं सुत्तत्थपोरिसीए उ । तट्ठाणंतरविसया तत्तोत्ति न तेण दोसोऽयं ॥ ५०१ ॥

यदि चेदेवमेतत् 'सफलो एसुवएसो' इत्यादि प्रागुक्तं वर्त्तते, ततः किं कस्माद् गदिते निरूपिते नित्यं प्रतिदिवसं सूत्रार्थपौरुष्यौ? तुः पादपूरणार्थः। इह द्विविधाः श्रुतग्राहिणः कठोरप्रज्ञास्तदितरे च। तत्र ये कठोरप्रज्ञास्ते प्रथमपौरुष्यां यत् सूत्रमधीयते, द्वितीयायां 'सुत्तत्थो खलु पढमो' इत्यादिनानुयोगक्रमेण तस्यार्थमाकर्णयन्ति। ये तु न तथारूपास्ते पौरुषीद्वयेऽपि सूत्रमेव पठन्ति, पश्चात् कालान्तरेण सम्पन्नप्रज्ञाप्रकर्षाः पौरुषीद्वयेऽप्यधीतसूत्रार्थग्रहणाय यत्नमाद्रियन्त इति। अत्र समाधिः—तयोः सूत्रार्थयोः स्थानान्तरमपूर्वापूर्वरूप उत्तरोत्तरविशेषः स विषयो ययोस्ते तथारूपे सूत्रार्थपौरुष्यौ, इति न नैव तेन कारणेन दोषोऽयमित्थं सूत्रार्थपौरुष्युपदेशलक्षणः[1] ॥ ५०१ ॥ एतदेव भावयति;—

**अप्पुव्वणाणगहणे निच्चब्भासेण केवलुप्पत्ती। भणिया सुयम्मि तम्हा एवं चिय एयमवसेयं ॥ ५०२ ॥**

अपूर्वज्ञानग्रहणेऽपूर्वस्य ज्ञानस्य श्रुतरूपस्य सूत्रार्थभेदभिन्नस्य ग्रहणे क्रियमाणे; कथमित्याह—नित्याभ्यासेन प्रतिदिवसमभ्यसनेन, केवलोत्पत्तिः—निखिलज्ञेयावलोकनकुशलज्ञानलाभरूपा भणिता श्रुते 'अप्पुव्वनाणगहणे' इत्यादिलक्षणे। तस्मादेवमेवैतत् सूत्रार्थपौरुष्युपदेशनमवसेयम्। अयमभिप्रायः—नैतद् गुणस्थानारंभिणां, नापि ततः परिच्यवमानानां, किन्तु प्रारब्धस्वगुणस्थानकोचितकृत्यानां केवलज्ञानलाभावन्ध्यवीजयोः सूत्रार्थमेव तत्पौरुष्युपदेशः कृतः ५०२

किञ्च;—

---

1 क. ग.—'लक्षण. क्षणः'

वधापराधः सम्पद्यते न तु घातकस्याग्निज्ञातेन। न ह्यग्निना स्वसम्बद्धवस्तुव्यतिरेकेणान्यत्र वस्तुनि दाहः क्रियते ५०८॥ २ इत्युत्तरे तेन विहिते सूपकारेण 'पिट्टण'त्ति ताडना यष्टिमुष्ट्यादिभिस्तस्य कृता । ततो'बोले' दीनप्रलापरूपे तेन विहिते 'रायायन्नण'त्ति राज्ञः समाकर्णनमभूदस्य वृत्तान्तस्य । ततः 'परिओस विम्हयाहवणंति' परितोषो जीवाहिंसासंभवाद् विस्मयाच्च-अहो! परायत्ततायामपि स्वप्राणनिरपेक्षतया परप्राणरक्षापरिणामोऽस्येत्येवंरूपात्, आह्वानमाकारणं तस्य राज्ञा कृतं भावपरीक्षणं परिणामपरीक्षणमारब्धं तस्य राज्ञा मायया कोपः कृतः तद्विषयो व्यापत्तिहस्त्याज्ञा यथा व्यापादयतैनं हस्तिनेति ॥५०९॥ ४ ॥ लोलनं वारणेन वसुन्धरायां कृतं तस्य । ततः पृच्छा कृता राज्ञा, यथा-मोक्ष्यसि वा नवाऽभिग्रहमिति । ततो निश्चलभावादभिग्रहगतात् प्रतिषेधः कृतः सूपस्य, यथा-न त्वया किंचिदयं विरूपकं वाच्यः। मोचना च कृता तस्य करिणः सकाशात्, सम्यग् यथावत् । ततो नूनमयं नियोगरक्षाकरभावयोग्यतायां वर्त्तते, निजप्राणव्ययेऽपि परप्राणरक्षानिपुणचित्तत्वात्, इति परिभाव्यसत्कारेण सत्क्रियया युता ये विपुलभोगा विस्तीर्णविभूतिरूपास्ते तस्य कृताः। खड्गधरनिरूपणा चैव नित्यं ममाङ्गरक्षाकरो भव त्वमित्येवंरूपा, चैवेति समुच्चये, विहिता तस्य ॥ ५१० ॥ ५ ॥ प्रस्तुतमेव व्रतपरिणाममधिकृत्याह;—

**एवं वयपरिणामो धीरोदारगरुओ मुणेयव्वो । सण्णाणसद्दहाणाहि तस्स जं भावओ भावो ॥५११॥**

एवं जिनधर्म्मोदाहरणन्यायेन व्रतपरिणामो निरूपितरूपो धीरोदारगुरुको-धीरः परैः क्षोभ्यमाणस्याप्यक्षोभात्, उदारोऽत्युत्तममोक्षलक्षणफलदायकत्वात्, गुरुकश्चिन्तामणिप्रभृतिपदार्थेभ्योऽपि दूरमतिशायित्वाद् मुणितव्यः । अत्र

हेतुनाह—सज्ज्ञानश्रद्धानात् सज्ज्ञानादविपर्यस्ताद् व्रतगतहेतुस्वरूपफलपरिज्ञानात् श्रद्धानाच्चेदमित्थमेवेति प्रतीतिरूपात् । तस्य व्रतपरिणामस्य यद्यस्माद् भावतस्तत्त्ववृत्त्या भावः समुत्पादः । इदमुक्तं भवति—अव्रतपरिणामस्तत्त्वविपर्यादज्ञाना-दश्रद्धानाच्च जीवानामस्वभावभूतः प्रवर्त्तते, इति नासौ धीरोदारगुरुक इति चालयितुमपि शक्यते । व्रतपरिणामस्त्वे-तद्विपरीत इति न चालयितुं शक्यः ॥ ५११ ॥ एतदेव भावयति;

**जाणइ उप्पण्णरुई जइ ता दोसा नियत्तई सम्मं । इहरा अपवित्तीयवि अणियत्तो चेव भावेण ॥५१२॥**

जानाति हेतुतः स्वरूपतः फलतश्च दोषं जीवहिंसादिरूपं, तत उत्पन्नरुचिः समुन्मीलितश्रद्धानः पुमान् मिथ्यात्व-मोहोदयविगमाद् यदि चेत्, ततो दोषाद् निवर्त्तते सम्यग् मनःशुद्धिपूर्वकम् । इतरथा ज्ञानश्रद्धानाभावे कुतोऽपि लाभादिकारणादप्रवृत्तावपि दोषेऽनिवृत्तश्चैवानुपरत एव भावेन परमार्थेन । यथा दाहकशक्तिव्याघाताभावे कुतोऽपि वैगुण्याददहन्नपि दहनस्तत्त्वतो दाहक एव, एवं ज्ञानश्रद्धानाभावे दोषनिवृत्तावपि जीवो दोषेष्वनिवृत्त एव द्रष्टव्यः, दोषशक्तेः कस्याश्चिदनुपघातादिति ॥ ५१२ ॥ पुनरप्येतदेव समर्थयन्नाह;

**जाणंतो वयभंगे दोसं तह चेव सद्दहंतो य । एवं गुणं अभंगे कह धीरो अण्णहा कुणइ ? ॥ ५१३ ॥**

जानन्नवबुध्यमानो व्रतभङ्गे प्रतिपन्नव्रतविनाशे दोषं नरकपातादिलक्षणं, चैवेति समुच्चये, श्रद्दधानश्च श्रद्दधान एव; एवं जानानः श्रद्दधानश्च गुणं स्वर्गादिलाभरूपम् अभङ्गे व्रतस्य कथं धीरः सात्त्विकोऽन्यथा कुरुते ? प्रतिपद्य व्रतं तस्य भङ्गं न कुरुत इति भावः ॥ ५१३ ॥ कुतः । यतः—

**गुणठाणगपरिणामे संते उवएसमंतरेणावि । नो तव्वाघायपरो नियमेणं होति जीवोत्ति ॥ ५०३ ॥**

गुणस्थानकपरिणामे सम्यग्दर्शनादिगुणविशेषपरिणतिलक्षणे सति, उपदेशं तीर्थकरगणधरादिप्रज्ञापनारूपमन्तरेणापि नो नैव तद्व्याघातपरः स्वयमेवस्वगतगुणस्थानकपरिणतिव्याहतिप्रधानो नियमेन भवति जीव इति, प्रस्तुतगुणस्थानकात्यन्ताराधनावशेन तद्बाधकसंक्लेशानां हानिभावादिति ॥ ५०३ ॥

**एत्थवि आहरणाइं णेयाइंऽणुव्वएवि अहिगिच्च । इट्ठत्थसाहगाइं इमाइं समयम्मि सिद्धाइं ॥ ५०४ ॥**

अत्र च पूर्वोक्तेऽर्थे आहरणानि दृष्टान्तलक्षणानि विज्ञेयानि बोध्यानि, अणुव्रतानि स्थूलप्राणातिपातविरमणादीनि रात्रिभोजनविरतिं च, न केवलं प्रागुक्तेष्वर्थेष्वित्यपिशब्दार्थः, अधिकृत्याश्रित्य । कीदृशानीत्याह—इष्टार्थसाधकानि-वक्तुमिष्टार्थसंसिद्धिकारणानि । इमानि वक्ष्यमाणानि समये जिनप्रवचने सिद्धानि प्रतिष्ठितानि ॥ ५०४ ॥ तान्येवाह;—

**जिणधम्मो सच्चोविय गोट्ठीसड्ढो सुदंसणो मइमं । तह चेव धम्मणंदो आरोग्गादिओ य कयपुण्णो ॥५०५**

जिनधर्मः श्रावकसुतः प्रथमः । द्वितीयः सत्यः सत्यनामा । अपिचेति समुच्चये । तृतीयो गोष्ठीश्राद्धः । चतुर्थः सुदर्शनो नाम मतिमान् प्रशस्तप्रज्ञः । तथा चैव पञ्चमो धर्म्मनन्दः । षष्ठश्च दृष्टान्त आरोग्यद्विजकश्च कृतपुण्य इति ५०५ 'यथोद्देशं निर्देशः' इति न्यायाज्जिनधर्म्मदृष्टान्तमेव भावयन् गाथापञ्चकमाह;—

**भरुयच्छे जिणधम्मो सावगपुत्तो अणुवयधरो त्ति । अवहरिओ परकूले विक्कीओ सूवहत्थम्मि ॥५०६॥१॥**

लावेसूसासाणा मोयण रुट्टेण ताडिओ धणियं । एवं पुणोवि नवरं कहणा एएसु पडिसेहो ॥ ५०७ ॥ २ ॥
दासो मे आणत्तिं कुण सच्चमिणं करेमि उचियंति । मज्झं तु एत्थ दोसो अतत्तमिणमग्गिनाएण ५०८॥३
पिट्टण वोले रायायन्नण परिओसविम्हयाहवणं । भावपरिक्खण मायाकोवो वावत्ति हत्थाणा ॥५०९॥४॥
लोलण पुच्छा भावा पडिसेहण मोयणा सम्मं । सक्कारविउलभोगा खग्गधरनिरूवणा चेव ॥ ५१० ॥ ५ ॥

भरुकच्छे भरुकच्छनाम्नि पुरे दक्षिणापथमुखमण्डनभूते जिनधर्मो नाम श्रावकपुत्रोणुव्रतधरः समासीदिति । स चान्यदा म्लेच्छैस्तत्पत्तनभङ्गेऽपहृतः सन् परकूले कुंकणादौ विक्रीतः सूपहस्ते तत्कूलवासिनो नरपतेर्यः सम्बन्धी सूपकारस्तस्य हस्ते इति ॥ ५०६ ॥ १ ॥ तस्य च तेन 'लावेसूसासाणा' इति लावकेषु लावकनामसु पक्षिषु विषये उच्छ्वासयाज्ञा दत्ता, यथैतान् पञ्जरगतान् लावकान् त्वमुच्छ्वासय । तेन चात्यन्तदयापरायणतया उच्छ्वासो मोचनमिति परिकल्प्य च 'मोयण'त्ति मोचनं कृतं रुष्टेन च तेन सूपकारेण ताडितः स धणिकमत्यर्थम् । एवं पुनरपिद्वितीयवेलायामाज्ञप्तेन नवरं केवलं कथना निवेदना कृता तेन, यथैतेषु लावकेषु वधस्य मे प्रतिषेधः प्रत्याख्यानं वर्त्तत इति ॥ ५०७ ॥ २ ॥ पुनस्तेन सूपेनोक्तं भणितं, यथा–दासो मूल्यक्रीतत्वात् त्वं मे, आज्ञापितं कुरु । भणितं जिनधर्मेण–सत्यं यथाऽहं तव दासः करोम्युचितामाज्ञां, न तु लावकोच्छ्वासरूपामत्यन्तसावद्यरूपामिति । प्राग्वद् भणितं च सूपकारेण–मम तु भवान् लावकवधे दोषोऽपराधः । जिनधर्मः प्राह–अतत्त्वमिदमपरमार्थोऽयं, यदन्येन हन्यमानेषु प्राणिषु अन्यस्य

वधापराधः सम्पद्यते न तु घातकस्याग्निज्ञातेन। न ह्यग्निना स्वसम्बद्धवस्तुव्यतिरेकेणान्यत्र वस्तुनि दाहः क्रियते ५०८॥ ३ इत्युत्तरे तेन विहिते सूपकारेण 'पिट्टण'त्ति ताडना यष्टिमुष्ट्यादिभिस्तस्य कृता । ततो'बोले' दीनप्रलापरूपे तेन विहिते 'रायायन्नण'त्ति राज्ञः समाकर्णनमभूदस्य वृत्तान्तस्य । ततः 'परिओस विम्हयाहवणंति' परितोषो जीवाहिंसासंभवाद् विस्मयाच्च–अहो! परायत्ततायामपि स्वप्राणनिरपेक्षतया परप्राणरक्षापरिणामोऽस्येत्येवंरूपात्, आह्वानमाकारणं तस्य राज्ञा कृतं भावपरीक्षणं परिणामपरीक्षणमारब्धं तस्य राज्ञा मायया कोपः कृतः तद्विषयो व्यापत्तिहस्त्याज्ञा यथा व्यापादयतैनं हस्तिनेति ॥५०९॥ ४ ॥ लोलनं वारणेन वसुन्धरायां कृतं तस्य । ततः पृच्छा कृता राज्ञा, यथा–मोक्ष्यसि वा नवाऽभिग्रहमिति । ततो निश्चलभावादभिग्रहगतात् प्रतिषेधः कृतः सूपस्य, यथा–न त्वया किंचिदयं विरूपकं वाच्यः। मोचना च कृता तस्य करिणः सकाशात्, सम्यग् यथावत् । ततो नूनमयं नियोगरक्षाकरभावयोग्यतायां वर्त्तते, निजप्राणव्ययेऽपि परप्राणरक्षानिपुणचित्तत्वात्, इति परिभाव्यसत्कारेण सत्क्रियया युता ये विपुलभोगा विस्तीर्णविभूतिरूपास्ते तस्य कृताः। खड्गधरनिरूपणा चैव नित्यं ममाङ्गरक्षाकरो भव त्वमित्येवंरूपा, चैवेति समुच्चये, विहिता तस्य ॥ ५१० ॥ ५ ॥ प्रस्तुतमेव व्रतपरिणाममधिकृत्याह;—

**एवं वयपरिणामो धीरोदारगरुओ मुणेयव्वो । सण्णाणसद्दहाणाहि तस्स जं भावओ भावो ॥५११॥**

एवं जिनधर्म्मोदाहरणन्यायेन व्रतपरिणामो निरूपितरूपो धीरोदारगुरुको–धीरः परैः क्षोभ्यमाणस्याप्यक्षोभात्, उदारोऽत्युत्तममोक्षलक्षणफलदायकत्वात्, गुरुश्चिन्तामणिप्रभृतिपदार्थेभ्योऽपि दूरमतिशायित्वाद् मुणितव्यः। अत्र

हेतुमाह—सज्ज्ञानश्रद्धानात् सज्ज्ञानादविपर्यस्ताद् व्रतगतहेतुस्वरूपफलपरिज्ञानात् श्रद्धानाच्चेदमित्थमेवेति प्रतीतिरूपात्। तस्य व्रतपरिणामस्य यद्यस्माद् भावतस्तत्त्ववृत्त्या भावः समुत्पादः। इदमुक्तं भवति—अव्रतपरिणामस्तत्त्वविषयादज्ञानादश्रद्धानाच्च जीवानामस्वभावभूतः प्रवर्त्तते, इति नासौ धीरोदारगुरुक इति चालयितुमपि शक्यते। व्रतपरिणामस्त्वेतद्विपरीत इति न चालयितुं शक्यः ॥ ५११ ॥ एतदेव भावयति;

**जाणइ उप्पण्णरुई जइ ता दोसा नियत्तई सम्मं। इहरा अपवित्तीयवि अणियत्तो चेव भावेण ॥५१२॥**

जानाति हेतुतः स्वरूपतः फलतश्च दोषं जीवहिंसादिरूपं, तत उत्पन्नरुचिः समुन्मीलितश्रद्धानः पुमान् मिथ्यात्वमोहोदयविगमाद् यदि चेत्, ततो दोषाद् निवर्त्तते सम्यग् मनःशुद्धिपूर्वकम्। इतरथा ज्ञानश्रद्धानाभावे कुतोऽपि लाभादिकारणादप्रवृत्तावपि दोषेऽनिवृत्तश्चैवानुपरत एव भावेन परमार्थेन। यथा दाहकशक्तिव्याघाताभावे कुतोऽपि वैगुण्याददहन्नपि दहनस्तत्त्वतो दाहक एव, एवं ज्ञानश्रद्धानाभावे दोषनिवृत्तावपि जीवो दोषेष्वनिवृत्त एव द्रष्टव्यः, दोषशक्तेः कस्याश्चिदनुपघातादिति ॥ ५१२ ॥ पुनरप्येतदेव समर्थयन्नाह;

**जाणंतो वयभंगे दोसं तह चेव सद्दहंतो य। एवं गुणं अभंगे कह धीरो अण्णहा कुणइ? ॥ ५१३ ॥**

जानन्नवबुध्यमानो व्रतभङ्गे प्रतिपन्नव्रतविनाशे दोषं नरकपातादिलक्षणं, चैवेति समुच्चये, श्रद्दधानश्च श्रद्दधान एव; एवं जानानः श्रद्दधानश्च गुणं स्वर्गादिलाभरूपम् अभङ्गे व्रतस्य कथं धीरः सात्त्विकोऽन्यथा कुरुते? प्रतिपद्य व्रतं तस्य भङ्गं न कुरुत इति भावः ॥ ५१३ ॥ कुतः। यतः—

**तुच्छं कज्जं भंगे गरुयमभंगम्मि णियमओ चेव । परमगुरुणो य वयणं इमंति मइमं ण लंघेइ ॥५१४॥**

तुच्छमल्पमिन्द्रियप्रीत्यादिरूपं कार्यं भङ्गे व्रतस्य गुरुकं महद् व्रतभङ्गकार्यापेक्षया निर्वाणादिलक्षणमभङ्गे नियमतश्चैवावश्यमेवेति मन्यमानः परमगुरोश्च भगवतोऽर्हतो वचनमाज्ञा इदं व्रतपरिपालनमित्यस्माच्च हेतोर्मतिमान् भूरिप्रज्ञो न लंघयति नातिक्रामति ॥ ५१४ ॥ तथा;—

**साहाविओ य वयपरिणामो जीवस्स अण्णहा इयरो । एवं एस सरूवेण तत्तओ चिंतियव्वोत्ति ॥५१५॥**

स्वाभाविकश्च स्वभावभूत एव व्रतपरिणामो जीवस्य सत्क्रियाऽनिवृत्तिरूपत्वाद् व्रतपरिणामस्य । अस्याश्च कर्मसामर्थ्यनिग्रहोद्भूतत्वाद् न बाह्यरूपता । व्यतिरेकमाह—अन्यथा कर्मोदयजन्यत्वेन जीवोऽस्वभावभूत इतरोऽव्रतपरिणामो वर्त्तते । एवमुक्तनीत्या एष व्रतपरिणामः स्वरूपेण जीवस्वाभाव्येन तत्त्वतश्चिन्तयितव्यो मीमांसनीयः । ततः "अन्तरंगबहिरङ्गयोरन्तरङ्गो विधिर्बलवान्" इतिन्यायाद् बलीयानेव व्रतपरिणामः । इति परिसमाप्तौ ॥ ५१५ ॥

अथ सत्योदाहरणमाह;—

**वडवद्दे सच्चो खलु वणियसुओ सावगोत्ति विक्खाओ । भाइसमं पारसकुलं गंतुं आगच्छमाणाणं ॥५१६॥१**

**अण्णेहिं समं पासण तिमिगिलस्सा जलोवरिट्ठियस्स । ते मच्छोतिमहल्लो भणंतिभायाउदीवोत्ति ५१७॥२**

सव्वस्सेणं जूयं पडिसेह वलाउ तस्स करणंति । णिज्जामगग्गिजालण वुड्ड तह कूल उप्पत्ती ॥५१८॥३॥
मग्गण विप्पडिवत्ती राउलववहार सक्खिभासणया। मिलियत्ति निवपरिच्छा पूजा सेट्ठिम्मि जाणणया ॥
पूजा महंतसेट्ठिम्मि जोग्गया इच्छ आवकहियत्ति। वीमंसाए मुयणं वाणियगेणंपि रित्थस्स ५२०॥५

वटपद्रके वटपद्रकाभिधाने स्थाने सत्यः सत्याभिधानः, खलुर्वाक्यालंकारे, वणिक्पुत्रो वाणिजकनन्दनः श्रावको विख्यात इत्यनुव्रतादिधारकत्वेन प्रसिद्धः। अन्यदा भ्रातृसमं भ्रात्रा सार्द्धं पारसकूलं नाम द्वीपविशेषं गत्वा समागन्तुं लग्नः ॥ ५१६ ॥ १ ॥ आगच्छतोश्चतयोर्यदभूत् तदाह—अन्यैः प्रावहणिकैः समं 'पासण' त्ति दर्शनमभूत् तिमिङ्गिलस्य महामत्स्यविशेषस्य जलोपरिस्थितस्य सर्वेषां प्रावहणिकानाम् ततस्ते सर्वे प्रावहणिकाः 'मत्स्यो महानेषः' इति भणन्ति भ्राता त्वेतस्य सत्यस्य द्वीप इति समभाणीत् ॥ ५१७ ॥ २ ॥ सर्वस्वेन सर्वगृहसारेण द्यूतं पणो व्यवस्थापितः। प्रतिषेधः सत्येन कृतो—नैवं पणबंधो व्यवस्थापयितुं युक्तः। तथापि वलाद् हठवृत्या अस्य पणस्य करणं निर्वर्त्तनमिति। ततो महामत्स्यद्वीपयोः परीक्षार्थं निर्यामकेण प्रवहणप्रवर्त्तकेन पुरुषेण पृष्ठप्रदेशे वैश्वानरप्रज्वालनं कृतम्। तदनु प्रतापितपृष्ठेन तेन मत्स्येन वुडनं निमज्जनं जलमध्ये विहितम्। अथ कालेन तेषां कूलप्राप्तिः सम्पन्ना ॥ ५१८ ॥ ३ ॥ मार्गणा सर्वस्वलक्षणस्य पणस्य प्रवाहणिकैस्तस्य कृता। विप्रतिपत्तिर्विहिता तेन सत्यभ्रात्रा। ततो राजकुले व्यवहारः प्रवृत्तः। साक्षिभाषणा—केऽत्र साक्षिण इति भाषितं राज्ञा। भाषितः स च प्रतिवादिना, यथा—अस्यैव भ्राता सत्याभिधानः

साक्षी । ततः भ्राता भ्रातुर्मिलितो भवतीति । नासावेवंविधार्थसाक्षिभावेन व्यवहर्तुं युक्त इत्यस्मात् कारणाद् नृपपरीक्षा नृपेण परीक्षा कर्त्तुमारब्धा । कथमित्याह–पूजा सत्कारः श्रेष्ठिनि नगरप्रधानवणिग्विशेषे कृता । भणितश्चासौ पृच्छ सत्यं कोऽत्र सद्भावः । ज्ञातश्च श्रेष्ठिना सत्यात् परमार्थः । निवेदितश्च राज्ञः तेनापि ढौकितं सर्वस्वं प्रतिवादिने ॥५१९॥४॥ पूजा कृता सत्यस्य कीदृशीत्याह–महाश्रेष्ठिनि सर्वश्रेष्ठिवर्गप्रधानभावभाजि सति तस्मिन् योग्यतानगरकार्यचिन्तारूपा जाता । इच्छया स्वाभिलाषेण यावत्कथिका यावज्जीविकी तस्येति । विमर्शेऽहो । सत्येन दुष्करं कृतं यद् भ्रातृस्नेहमुपेक्ष्य सद्भूतव्यवहारोऽवलम्बित इत्येवंरूपे सति मोचनं कृतं जातसन्तोषेण वाणिजकेनापि रिक्थस्य सर्वस्वरूपस्य ॥ ५२० ॥ ५ ॥ अथ तृतीयोदाहरणमाह;—

दक्खिणमहुरा गोट्ठी एगो सड्ढोत्ति वच्चए कालो । तत्थन्नयाउ पइरिक्क थेरिगेहम्मि मुसणा य ॥५२१॥१॥
णो सड्ढे थेरिपायवडण लंछणा मोरवित्तरसएण । सावगभागागहणं गोट्ठीपरिवज्जणाभावो ॥५२२॥२॥
थेरीए रायकहणं गोट्ठाहवणमगमो उ सड्ढस्स । एत्तिय विसेसकहणे आहवणमचिंधगो नवरं ॥५२३॥३॥
पुच्छण चिंता गोट्ठी कइआ अज्जेव किमिति एमेव । चोरियपसिणे खुद्धा सव्वे ण उ सावगो नवरं ॥५२४॥४॥
रन्नो भावपरिन्ना विसेसपुच्छाए भूयसाहणया । निग्गहपूजा उ तहा दोण्हवि गुणदोसभावेणं ॥५२५॥५॥

इह दक्षिणमथुरायां काञ्चीति सर्वत्र प्रख्यातायां काचिद् दुर्ललितगोष्ठी समभूत् । एकः श्राद्धः सदाचारः श्रावक-

पुत्रस्तस्यां समभूत्। इत्येवं व्रजति कालः। तत्र दक्षिणमथुरायामेवान्यदा तु कालान्तरे पुनः 'पइरिक्क' विजने सम्पन्ने एकत्र स्थविरागृहे 'मुसणा य' त्ति सर्वस्वमोषणं तया कृतम् चः पूरणे ॥ ५२१ ॥ १ ॥ नो नैव 'सड्ढ' ति श्रावकेण किञ्चित् कृतम्। ज्ञातं च स्थविरया, यथा–मदीयं गृहं दुर्ललितगोष्ठ्या मोषितुमारब्धम् ततः 'थेरिपायवडण' त्ति स्थविरया पादपतनव्याजेन मा मुष्णीत मदीयं गृहमिति भणन्त्या पादस्पर्शे क्रियमाणे लाञ्छना चिह्नकरणं दुर्ललितगोष्ठीपादानां तालतललक्षेन मयूरपित्तरसकेन मयूरवसयेत्यर्थः। तत्र च स्थविरागृहद्रव्ये विभज्यमाने श्रावकभागाग्रहणं स्थविरागृहमोपस्य न तेन भागो गृहीत इत्यर्थः। तथा गोष्ठीपरिवर्जनाभावः—तां गोष्ठीं परिवर्जयितुं परिणामस्तस्य समजायत, यथा–न सुन्दरपरिणामेयं गोष्ठी, ततो मोक्तुमुचितेति ॥ ५२२ ॥ २ ॥ स्थविरया च प्रभातकाले राजकथनमकारि। राज्ञा च गोष्ठ्याह्वानं दुर्ललितगोष्ठ्याकारणं व्यधायि। अगमश्च नागमनं च श्राद्धस्य श्रावकपुत्रस्य समजायत राजकुले। पपृच्छे च राज्ञा किमेतावन्त एव भवन्त उतान्योऽपि कश्चिद् अस्ति ? ततो विशेपकथने दुर्ललितगोष्ठ्या कृते आह्वानं श्रावकसुतस्य संजातम् आगतश्चासावचिह्नको मयूरपित्तचिह्नरहितो नवरं केवलम् ॥ ५२३ ॥ ३ ॥ प्रच्छनमचिह्नितभावविपयं राज्ञा कृतं, यथा–किंनिमित्तं भवानचिह्नितः ? तस्य च चिन्ता समुत्पन्ना किं निमित्तं कथयामि नवेत्येवंरूपा। एवं च वर्द्धमाने तत्र राज्ञा भणितं–गोष्ठी कदेयं समाश्रिता त्वया ? श्रावकपुत्रः प्राह–अद्यैव। राजा–किमिति–कस्मात् समाश्रिता ? श्रावकपुत्रः प्राह–एवमेवानाभोगादेवेत्यर्थः। ततश्चोरिकाप्रश्ने–किमिति भवद्भिः स्थविरागृहे रात्रौ चौर्यमाचरितमित्येवंरूपे राज्ञा कृते क्षुभिताः क्षोभमागताः सर्वेऽपि दुर्ललितगोष्ठीवर्त्तिनस्ते, न पुनः

श्रावको नवरं केवलं क्षुभितोऽनपराधत्वादेव ॥ ५२४ ॥ ४ ॥ ततो राज्ञो भावपरिज्ञा क्षोभाक्षोभाभ्यां तत्परिणामविशेषनिश्चयो वृत्तः । विशेषपृच्छायां को भवतां मध्ये चोरोऽचोरो वेति भूयो राज्ञा कृतायां 'भूयसाहणय' त्ति यथावस्थितार्थनिवेदना तैः कृता ततो निग्रहपूजे चोराणां निग्रहः, श्रावकसुतस्य पूजा प्रवृत्ता तथा स्वव्यवहरणोचिते, द्वयोरपि गुणदोषभावेन श्रावकसुतस्य गुणभावेन, इतरेषां तु दोषभावेन हेतुनेति ॥ ५२५ ॥ ५ ॥ अथ चतुर्थोदाहरणम्;—

कोसंबीए सड्ढो सुदंसणो नाम सेट्ठिपुत्तोत्ति । देवीसंववहारे दंसणओ तीए अणुरागो ॥ ५२६ ॥१॥
चेडीपेसण पीती तुमम्मि जइ सच्चयं ततो धम्मं । कुणसु विसुद्धं एवं एसा जं होइ सफलत्ति ॥ ५२७ ॥ २ ॥
रायनिवेयण दोसो एसो सपराण निरयहेउत्ति । एमाइधम्मदेसण पडिमाए आगमुवसग्गो ॥५२८॥३॥
तत्तो पओस रन्नो माइट्ठाण कहणाए गेण्हणया । पडिकूल कयत्थणपत्थणाहिं खुहिओ न सो धीरो ॥५२९
देवीए सप्पभक्खण जीवावण देसणाए संबोही । चेतीहरकारावण विरमणमो चेव पावाओ ॥५३०॥५॥

कोसंबी नाम पुरी पुराणदेउलतलायसंकलिया । अत्थि नहंगणपरिरिंखमाणबहुधयवडाडोया ॥ १ ॥ सेसालंकाराणायरेण जा चंदमंडलमुहीओ । मन्नंति कुलवहूओ सोहग्गं चिय अलंकारं ॥ २ ॥ पुरिसा उण अच्चुत्तमसत्तुक्करिसाऽवगन्नियविसाया । मोत्तु परक्कममन्नं मन्नंति न भूसणं किंचि ॥ ३ ॥ बंधो कव्वेसु परं दंडो छत्तेसु कंटगा णाले । पउमाण विरहदुक्खं निसाए किल चक्कवायाणं ॥ ४ ॥ संतावहरा तुंगा बहलफला सव्वओ चिय नमंता । सरसा सच्छाया

जत्थ संति तरुणो कुलीणा य ॥ ५ ॥ जह दुज्जणाववाया न फुसंति नरं सया सयाचारं । तह दुट्ठगहविहिया अवग्गहा जत्थ धण्णाणि ॥ ६ ॥ जह दीवपहापरिपूरियम्मि देसे तमो ण ओयरइ । तह धम्मगुणपहाणाए तीए खुद्दाण संतावा ॥ ७ ॥ जियसत्तू णाम निवो तत्थासि पयंडपोरिसकरंडो । नयववहरणसमुज्जियखीरोयजलुज्जलजसोहो ॥ ८ ॥ तस्सासि हियियदय्या देवी देवीव सुंदरावयवा । लायन्नसलिलजलही नामेणं कमलसेणत्ति ॥ ९ ॥ सेणच्चिय वम्महणायगस्स अगजगडणापसत्तस्स । उन्नयतारुन्नगुणादवमन्नियसेससोहग्गा ॥ १० ॥ पंचप्पयारविसओवभोगभोगीणवासरा तेसिं । वोलिंति अभग्गमणोरहाणमप्पत्तविरहाण ॥ ११ ॥ इओ य तत्थ गरिट्ठपइट्ठो सुदंसणोसेट्ठिणंदणो आसि । सड्ढो सम्मदंसणगुणाइरयणिड्ढिसंपन्नो ॥ १२ ॥ सीलसुरसिंधुनिग्गमहिमायलो निच्चलो पइन्नाए । जिणसमयभणियसमणोवासयजणजोग्गचरियरओ ॥ १३ ॥ देवीए कमलसेणाए तेण सद्धिं महापवंधेण । गंधग्गहणाईओ संलग्गो सव्ववहारो ॥ १४ ॥ ववहारनमुचिएसुं किज्जंतेसु य अहोवयारेसु । लग्गम्मिसिड्ढिजणसमुचियम्मि गेहे पभूयम्मि ॥ १५ ॥ तस्स अइचोक्खयाए अविसत्तमणो पइक्खणं वग्गो । चेडीण तम्मि देवीबहुमाणपसाहगो जाओ ॥ १६ ॥ अह अन्नया कयाई दिट्ठो देवीए सो सयं चेव । जाया तक्खणओ रागपरवसा सा विचिंतेइ ॥ १७ ॥ धन्नाओ ताओ जाओ रामाओ एयदंसणसुहाए । सिंचंति समुग्गयहरिसपुलयपरिकलियदेहाओ ॥ १८ ॥ जाओ पुण सप्पणयं संभासपहं इमेण उवणीया । ताओ धण्णयराओ कमलदलच्छीण मज्झम्मी ॥ १९॥ ताओ धन्नतमाओ सव्वगालिंगणेण रयणीसु । जाओ सरयनिसाकरकरगोरासुं रमिज्जंति ॥ २० ॥ मज्झमहण्णाए पुणो दंसणमेत्तंपि णो जहण्णाइ । जायमिमस्स नियरूवचंगिमाविजियमयणस्स

॥ २१ ॥ तो सा चंदालोएवि ससयणे सिसिरनीरसंगे य । अंतोजलियमणोभवजलणा णो निव्वुइं लहइ ॥ २२ ॥ एगत्तो कुललज्जा अलंघणिज्जा हिमाचलसिहव्व । अण्णत्तो पलयाणलतुल्लो मयणाणलो जलइ ॥ २३ ॥ ता लोगाहाणमिणं संजायं जह खरोरुनहरालो । एगत्तो सद्दूलो अन्नत्तो दोत्तडी वियडा ॥ २४ ॥ ता किं कुणमाणाए कल्लाणं होहिइत्ति चिंतंती । अइपोढरागवसगा तं पइ पेसेइ सा चेडिं ॥ २५ ॥ भणिओ तीए मम सुहयचक्कचूडामणिम्मि देवीए । पीई परमा जाया दंसणदिवसा भवंतम्मि ॥ २६ ॥ मुणियाभिप्पाएणं अइदढवरसीलकवयजुत्तेणं । भणियमिमेण सिणेहो जइ सच्चं चिय तओ कुणइ ॥२७॥ धम्मं जिणपण्णत्तं एवं सफलो कओ हवइ एसो । जो पुणकामसिणेहो सो सपरेसिं नरयहेऊ ॥ २८ ॥ रागंधा अंधा इव पडंति गहणासु वसणगत्तासु । हारियमणुस्सजम्मा कुकम्मभरभारिया जीवा ॥ २९ ॥ तहा तव कुलछायाभंसो पंडिच्चप्पभसणा अणिट्ठपहो । वसणाणि रणमुहाणि य इंदियवसगा अणुहवंति ॥ ३० ॥ पज्जलियजलणजालाउलम्मि जलणम्मि खित्तओ अप्पा । वरमेसो न उ सीलं विलुत्तमपवित्तचित्तेण ॥ ३१ ॥ कप्पद्दुमोवि चिंतामणीवि जीवाण कामधेणूवि । ण तहा कप्पंति फलं जहप्पणो सुद्धचरियाइं ॥ ३२ ॥ को णाम किर सकन्नो गुणेसु सुइजुत्तमेत्तसज्झेसु । अप्पाणमगुणसंभावणामसीमीसियं कुणइ ? ॥३३॥ एमाइएहिं निउणेहिं धम्मवयणेहिं पडिहया बाढं । परमंतो रागविसुग्गारो गरुओ ण उत्तरिओ ॥ ३४ ॥ अह अन्नया महप्पा सो पव्वदिणम्मि विहियउववासो । राओ चच्चरदेसे पडिमाए संठिओ संतो ॥ ३५ ॥ णाओ तीए देवीए चेडियाचक्कवालवयणाओ । अइदुब्बिसहो इयराण तस्स विहिओ उवसग्गो ॥ ३६ ॥ अक्खोहम्मि पओसं सा तम्मि गया तओ भणइ एवं । रे रे मं जं न गणेसि भग्ग भग्गो तओ

पेच्छ ॥ ३७ ॥ वंतरपडिमामिसओ संगोवियचंडिचक्कवालेण । आणाविओ नियगिहं रयणीए च्चियस देवीए ॥ ३८ ॥ परिणयवयपरिणामो सो अणुकूलेहिं तह य इयरेहिं । उवसग्गेहिं न खुद्धो दुद्धोदहिगब्भगंभीरो ॥ ३९ ॥ ततश्च–दाविय भूरिवियारा नियनहरविदारियाखिलसरीरा । उक्कूइउं पयत्ता जह सेट्ठिसुओ इमो मज्झ ॥ ४० ॥ एवं परिभवकारी मंताओ चिंतिए अपुज्जंते । दूरमणिच्छंतीए किमेत्थ काहामि मूढमणा ? ॥ ४१ ॥ नाओ एस वइयरो रन्ना मायाइ तीए परिकहिओ । गहिओ सुदंसणो ठाविओ य चारगगिहे गहिरे ॥ ४२ ॥ पुव्वोवज्जियसरइंदुधवलसच्चरियगुणपहाणाए । कित्तीए दूरमक्खित्तमाणसो चिंतई राया ॥ ४३ ॥ णूणं ण एस काही असमंजसमेरिसं महाभागो । देविचरियं सुरूवं निहालिउं जुज्जए एत्तो ॥ ४४ ॥ यतः पठन्ति—"गंगाए वालुयं सायरे जलं हिमवओ य परिमाणं । जाणंति बुद्धिमंता महिलाहिययं न याणंति ॥ १ ॥" देवीए परिवाराओ विसममुवलद्धवइयरो राया । चिंतइ काउं कोवो ण जुज्जए एत्थ जं भणियं ॥ ४५ ॥ "पक्वान्नमिव राजेन्द्र ! सर्वसाधारणाः स्त्रियः । तस्मात्तासु न कुप्येत न रज्येत रमेत च ॥ ४६ ॥ तो सो मुक्को परिपूइओ य गुणरंजिओ य नरवइणा । एत्थंतरम्मि देवी सप्पसरविसेण सप्पेण ॥ ४७ ॥ डक्का सा झत्ति तओ अईव पीडापरव्वसा जाया । करुणामयजलनिहिणा पडिवन्ना तेण विहिणा य ॥ ४८ ॥ मंतेहि य तंतेहि य चित्तेहिं तहा २ पउत्तेहिं । जुत्ति विहिया नियत्तियविसदोसा सा तओ राया ॥ ४९ ॥ दूरतरं संतुट्ठो कलासु कोसल्लमउव्वमेयस्स । अब्भत्थिओ य अभयं नराहिवो तेण देवीए ॥ ५० ॥ अइसुंदरपरिणामेण तेण दट्ठूणमवसरं कहिओ । रन्नो सावगजोग्गो मग्गसिवसुहावहो धम्मो ॥५१॥ जहा । पढमं चिय जिणभवणं नियदव्वनिओयणेण कायव्वं । जम्हा तम्मूलाओ सुहकिरि-

याओ पवत्तंति ॥५२॥ जिणबिंबपइट्ठाओ सुसाहुजिणधम्मदेसणाओ य। कल्लाणगाइअट्ठाहियाओ निच्चं च पूयाओ ॥५३॥ एयं संसारोदहिमज्झनिबुड्डाण तारणतरंडं । जं दंसणस्स सुद्धी एएण विणा ण संभवइ ॥ ५४ ॥ कारावियं मणोहरमुत्तुंगसिहरोहपूरियनहग्गं । तियसविमाणसरिच्छं लच्छीगेहं जिणाययणं ॥ ५५ ॥ तेसिं अन्नेसिं चिय जीवाणं विरमणं च पावाओ । पाणवहाईयाओ संजायं तत्थ परिसुद्धं ॥ ५६ ॥ अथ संग्रहगाथाक्षरार्थः;—



कौशाम्ब्यां पुरि श्राद्धो जिनवचनश्रद्धालुः सुदर्शनो नाम श्रेष्ठिपुत्रः समभूत् । तस्य च जितशत्रुराज्ञो देव्या कमलसेनाभिधानया संव्यवहारे क्रयविक्रयलक्षणे सम्प्रवृत्ते यत्कथंचिद्दर्शनं संजातम् । तस्मात्तस्याः सुदर्शनेऽनुरागः कामलक्षणः संपन्नः ॥ ५२६ ॥ १ ॥ तं च प्रलयज्वलनतुल्यदाहकारिणमसहमानया चेटीप्रेषणमकारि, भणिता च यथा–देवी ब्रूते–प्रीतिस्त्वयि मम सम्पन्ना । भणितं च सुदर्शनेन, यदि सत्यकं निर्मायमेतत्, ततो धर्म्मं जिनप्रज्ञप्तं परपुरुषनिवृत्तिलक्षणं कुरुष्व विशुद्धं चित्तरुचिसारम् । एवं धर्मकरणे एषा मयि प्रीतिर्यद्यस्माद् भवति सफला मच्चित्तावर्जनरूपफलवती । इतिः प्राग्वत् ॥ ५२७ ॥ २ ॥ रागनिवेदना तया कृता, यथा–रागे निवर्त्तमाने शक्यते धर्मः कर्तुं, ततः कुरु मदुक्तमिति तेनोक्तं दोषोऽपराध एष पररामाभिगमरूपः स्वपरयोर्नरकहेतुरिति । एवमादिधर्मदेशनया प्रतिषिद्धया तया पर्वदिवसे प्रतिमास्थितस्य स्वयमागम्योपसर्गः प्रस्तुतव्रतभङ्गफलः कर्तुमारब्धः ॥ ५२८ ॥ ३ ॥ ततो व्रताचलनात् सा राज्ञी तं प्रति प्रद्वेषं गता । ततो राज्ञो मातृस्थानेन मायाप्रधानतया कथनायां कृतायां यथाऽयं मद्गृहप्रवेशेन मामभिभवितुमिच्छति, इति राज्ञा तस्य ग्रहणं निरोधलक्षणमकारि । लब्धवृत्तान्तेन च मुत्कलीकृतः ।

एवं च प्रतिकूलकदर्थनप्रार्थनाभी राजपत्नीकृताभिः क्षुभितश्चलितो न धीरः ॥ ५२९ ॥ ४ ॥ मुक्तमात्रे च तत्र देव्याः कमलसेनाभिधानायाः सर्पभक्षणं वृत्तम् । तेन च तस्या मन्त्रतन्त्रप्रयोगेण जीवापनं जीवनमाहितं, देशनया सम्बोधिर्जिनधर्मप्राप्तिलक्षणा । ततश्चैत्यभवनकारणं राज्ञा विहितं, विरमणं चैव पापादिति ॥ ५३० ॥ ५ ॥

अन्नोवि य चंपाए सुदंसणो सीलपालणवयम्मि । सत्थंतरेसु सुव्वइ एवं चिय तंपि वोच्छामि ॥ १ ॥ सिरिवासवपुज्जपयारविंदजुगलस्स वासुपुज्जस्स । भवणपरिमंडियाए अहेसि चंपाए णयरीए ॥ २ ॥ सिरिएरावणवाहणसमाणविहवेण संजुओ राया । दहिवाहणोत्ति जणगोत्ति विस्सुओ चंदणज्जाए ॥ ३ ॥ वीरजिणसिस्सिणीए सीसारोवियगुरूजणाणाए । नियसीलसमहिणंदियसंकंदणयमुहहिययाए ॥ ४ ॥ छत्तीससहस्सज्जासमूहपरिवज्जमाणचलणाए । उग्घडियकेवलामलणाणाए सिवगइगयाए ॥ ५ ॥ करकंडुणोवि जणओ भुयदंडमखंडिओरुवइरस्स । भूवइणो वालस्सवि पुन्नवसाणीयरज्जस्स ॥ ६ ॥ तस्सासि सरयससिबिंबवयणिया नीलनलिणसमणीया । अभया णामेण पिया सव्वंते उरपहाणगुणा ॥७॥ तच्चिंतियकज्जाणं सव्वेसिं पंडिया विहाणम्मि । नामेण पंडिया तीए अंवधाई तह अहेसि ॥ ८ ॥ तह तत्थ उसभदासो सेट्ठी सुपइट्ठिओ विसिट्ठेसु । दुद्धोयहिसलिलसरिच्छसच्छसच्छायलच्छीए ॥ ९ ॥ सुगुरुसमीवाहिज्जियजिणसमयवसोवलद्धसब्भावो । निययावत्थोच्चियधम्मकज्जवोलिज्जमाणदिणो ॥ १० ॥ तस्साणवज्जकज्जा लज्जामज्जायमंदिरं भज्जा । आसी य अरहदासीनामा सव्वंगचंगीगी ॥ ११ ॥ तेसि गिहे महिसीणं एगो रक्खाकरो सुभगनामो । होत्था पत्थुयकज्जे समत्थओ भद्दगप्पगई ॥ १२ ॥ सो अन्नया नईए तडम्मि सीयम्मि दुरहियासम्मि । निवडंतम्मि वियाले गेहाभिमुहं अइ-

च्छंतो ॥ १३ ॥ महिसीसहिओ चारणसाहुं गयणंगणाओ ओइन्नं । अवलंबियबाहुजुयं काउस्सग्गे ठियं संतं ॥ १४ ॥ दूरनिरावणतणुं पेच्छइ तो तम्मिलग्गबहुमाणो । तग्गुणसंभरणाए तं रयणिं कहवि वोलेई ॥ १५ ॥ संपत्ते पच्चूसे समूसुगो जाव तत्थ सो जाइ । ता सूरुग्गमसमओवियंभिओ भिन्नतिमिरभरो ॥ १६ ॥ उस्सारियभुयजुयलो नमो अरिहंताणमिइ भणेऊण । सो साहू गयणयले उप्पण्णो तक्खणच्चेव ॥ १७ ॥ उप्पयमाणो दिट्ठो तेण सो निसुणिओ नमोक्कारो । तो जायसद्दहाणो अहन्निसं तं चिय पढेइ ॥ १८ ॥ अह सेट्ठिणा कयाई जहा कहंची पढंतयं दट्ठुं । पडिसिद्धो जह एवं पढिज्जमाणे धुवं दोसो ॥ १९ ॥ पडिभणियं तेण जहा एवं पयमंतरेण सक्केमि । ण खणंपि ठाउमिय भासियम्मि सेट्ठी विचिंतेइ ॥ २० ॥ आसण्णसिद्धिलाभो कोइ इमो जस्स एरिसी भत्ती । एयम्मि ता समग्गो दिज्जउ एसो नमोक्कारो ॥ २१ ॥ जिणपडिमापच्चक्खं सुमुहुत्ते दिन्नओ तओ भणिओ । जह सोम ! सुद्धसमाए सययं परिभावणिज्जोत्ति ॥ २२ ॥ अह अन्नया पवत्ते वासारत्ते गहित्तु महिसीओ । पत्तो नईसमीवे पारद्धा चारिउं ताओ ॥ २३ ॥ परतीरगयाओ खेत्तियस्स अन्नस्स खेत्तभूमीओ । लग्गा चरिउं अइवरिसणेण जाया नई सुभरा ॥ २४ ॥ सामिउवालंभभया तासिं महिसीण रक्खणनिमित्तं । दिन्ना नईए झंपा भिन्नो उयरम्मि कीलेण ॥ २५ ॥ इह लोए आरोग्गं अभिरुइयनिप्फत्ती अत्थकामाण । सिद्धीय, सग्गसुकुले पच्चायाई य परलोए ॥ २६ ॥ जस्सेरिसा गुणा वित्थरंति तं भावओ अणुसरंतो । पंचनमोक्कारमईवगोयराकालमणुपत्तो ॥२७॥ तस्सेव सेट्ठिणो भारियाए गब्भम्मि अब्भुयब्भूओ । उववन्नो सो जलनिहिमुत्तिपुडे मोत्तियमणिव्व ॥ २८ ॥ तस्साणुभावओ किंचिदंगमणघत्तणं पवज्जेइ । वयणांभोरुहयं पंडुरं च

जायं गई मंदा ॥ २९ ॥ जा आसि सहावाओ गब्भभरेणं च सा दढं जाया । नीलमुहं परिपंडुरछायं ससिमंडलविडंबि ॥ ३० ॥ वच्छोरुहाण जुयलं छप्पयपरिभुज्जमाणमुहदेसं । कमलजुयलं व राइयअच्चग्गलग्गसोहग्गं ॥ ३१ ॥ जंघाओ सहीओ इव मंभूयाओ पभूयरूवाओ । अलसत्तं मित्तंपिव तीए सयासं न उज्झेइ ॥ ३२ ॥ उदरेण समं वुड्ढिं पत्ता लज्जा अहुज्जमो णट्ठो । उदरवलीहिं सह तह नयणजुयं पंडुरं जायं ॥ ३३ ॥ परिपोढपुन्नगब्भाणुभावओ तीए कमलनयणाए । नंपुन्नो इयरूवो तइए मासम्मि दोहलओ ॥ ३४ ॥ जह जिणहरेसु पूया होइ पभूया दया य जीवेसु । सुहिओ सव्वोवि जणो जइ ता मइ मो वियंभिज्जा ॥ ३५ ॥ तम्मि असंपज्जंते ओलग्गमुही सुपंडुरसरीरा । खीरकवोला वित्थारनयणिया झत्ति सा जाया ॥ ३६ ॥ पुट्ठा य सेट्ठिणो दढमक्खायं जह इमो मणोभावो । संपइ संपन्नोऽपूरणेण तस्सेरिसाऽवत्था ॥ ३७ ॥ महया विहववएणं दूरं परिमुक्क किविणचरिएणं । सो सिट्ठिणा पहिट्ठेण सुट्ठु संपाडिओ सव्वो ॥ ३८ ॥ पइरिक्काए सुहाए सेज्जाए एत्थ भोयणेहिं च । सा गब्भं वहइ महासमाहिसारं तओ नवसु ॥ ३९ ॥ मासेसु समहिएसुं गएसु सुहजोगलग्गसमयम्मि । पुन्नाए तिहीए सुक्किलम्मि पक्खे वरे रिक्खे ॥ ४० ॥ उच्चट्ठाणगएसु गहेसु दिसिमंडलेसु विमलेसु । झत्ति पसूया रविमंडलं व पुव्वा सुयं सा य ॥ ४१ ॥ विहियं वद्धावणयं तूररवापूरपुन्नदिसिचक्कं । सयलपुरलोयलोयणमणहरणं दिन्नबहुमाणं ॥ ४२ ॥ पत्ते दुवालसदिणे विहिएसुं सूइ समय किच्चेसु । संमाणियबंधुजणो पियरजणो नाममिय कुणइ ॥ ४३ ॥ जं दंसणसुद्धिपरा जाया जणणी इमम्मि गब्भगए । तम्हा सुदंसणो एस होउ पुत्तो पवित्तगुणो ॥ ४४ ॥ नीरोगो निस्सोगो विगयविओगो पवड्ढिउं लग्गो । सो बालो बहुलेयरपक्खे ससिमंडलकलव्व ॥ ४५ ॥ समए

संगहियाओ कलाओ सव्वाओ जायतारुन्नो । संपत्तो स मणुन्नो गुणन्नजणजणियसंतोसो ॥ ४६ ॥ वसणं दाणम्मि परं पणओ य मुणीसु सुगुरुसु विणओ य । सीलम्मि रई न मई सुविणेवि अकज्जकरणम्मि ॥ ४७ ॥ परिणाविओ य पिउणा सुकुलुग्गयमग्गलं गुणगणेण । सयलमहिलाण मज्झे मणोरमं नाम वरकन्नं ॥ ४८ ॥ ठाणे २ परिगिज्जमाणगुणगउरवो गुणिजणेणं । गमयइ दिणाइं मइविहवविजियगिव्वाणवहुमंती ॥ ४९ ॥ इओ य दहिवाहणस्स रन्नो पुरोहिओ आसि कविलनामोत्ति । कविला नामेण पिया अहन्नया तीए सो पुरओ ॥ ५० ॥ सेट्ठिसुदंसणचरियं कयवहुमाणो पसंसिउं लग्गो । जह एत्थ णत्थि संपइ गुणेहिं एयस्स कवि तुल्लो ॥ ५१ ॥ "द्वावेतौ पुरुषौ लोके परप्रत्ययकारकौ । स्त्रियः कामितकामिन्यो लोकः पूजितपूजकः ॥ ५२ ॥" इय वयणमणुसरंती सा रागपरव्वसा वहुं जाया । तस्संगमाय मग्गइ वहू उवाए अह कयाइ ॥ ५३ ॥ पेसविया नियचेडी भणाविया जह पुरोहिओ सरुओ । किंचि असत्थसरीरो इच्छइ तुह दंसणं काउं ॥ ५४ ॥ तो सो अइसरलमणो सच्चं नियतुल्लचरियमिक्खंतो । अकयण्णमणवियक्को सच्चं चिय मन्नइ तहाहि ॥ ५५ ॥ निययाणुमाणकप्पियपरासओ सव्वहा जणो सव्वो । णीयाण नाखलो नामहाणुभावो महंताणं ॥ ५६ ॥ पत्तो परिमियपरिवारपरगओ सो पुरोहियगिहम्मि । पुच्छइ अपेच्छमाणो पुरोहियं कत्थ सो एत्थ ॥ ५७ ॥ ता उग्घडियमणोगयभावा कविला पयंपिउं लग्गा । भट्टो गओ निवगिहं परोक्खरागं परिवहंती ॥ ५८ ॥ ज्झीणा दीणाणि वहुयाणि अहमिओ तुहविओयदुक्खमिणं । सक्का सोढुं न कहिंवि वंछियं ता कुण ममंति ॥ ५९ ॥ सूणासालगओ इव छगलो भयविम्हलो हमो जाओ । धी देव्वपरिणईए जुत्तो दुग्घडमिमं जायं ॥ ६० ॥ सयलसमीहियसंपायगस्स चिरपालियस्स

सीलस्स । भंगो धुवं इमाए जइऽचिंतियकारगो होमि ॥ ६१ ॥ अन्नह अतुच्छमच्छरविच्छुरियाइह असंतदोसेण । मज्झ अकलंकचरियस्स लंछणं लाइही एसा ॥ ६२ ॥ ता निउणवुद्धिजोएण केणई एयवसणसलिलाओ । उत्तरियव्वंति तओ परूवियं उत्तरं तेण ॥ ६३ ॥ भद्दे ! नरनेवत्थो नपुंसगो परिभमामि पुरिमज्झे । ता किं करेमि तुमए न चिंतणिज्जो पणयभंगो ॥ ६४ ॥ झत्ति तओ निक्खंतो कयत्थमप्पाणयं परिगणंतो । जम्हा न सीलविलओ नवा अलीओ कलंको मे ॥ ६५ ॥ इहं जो चेव वसंतो लक्खिज्जइ वुहजणेण मासेसु । णो अन्ने जं सुण्णा गुणेहिं जणजणियहरिसेहिं ॥ ६६ ॥ मो अन्नया महूसवसमओ जणजणियवम्महुम्माहो । जाओ जाइपुरस्सरनवकुसुमवियंभियामोओ ॥ ६७ ॥ कलकूजिर-कोइलकुलमणुन्नसंपुन्नकाणणाभोओ । भोगपरलोगकिज्जंतवित्तकड्डापविच्छड्डो ॥ ६८ ॥ महुरारवछप्पयपिज्जमाणमयरंद-कमलसरसुहओ । वाहुल्लुम्मिल्लियपल्लवालिसोहिल्लसालिभरो ॥ ६९ ॥ सुरहिकुसुमोववेओ ठाणे २ तहा इमो जम्हा । तो सुरहित्ति निरूवियनामा सयलम्मि भुवणम्मि ॥ ७० ॥ चंदणतरुसाहंदोलणेण संपुण्णपरिमलो पवणो । मलयाओ निग्गओ निव्ववेइ खोणीतलं जत्थ ॥ ७१ ॥ उज्जाणपालगेहिं राया दहिवाहणो पणमिऊण । विण्णत्तो जह सामी ! महू महीए समोइण्णो ॥ ७२ ॥ उप्पन्नकोउहल्लो सुमहल्लसमिद्धिसंगओ संतो । नयराओ निग्गओ सेट्ठिपमुहनागरजणाणुमओ ॥ ७३ ॥ देवी अभया कविला पुरोहिया तह मणोरमा तइया । सेट्ठिसुदंसणभज्जा । सिवियारूढा पचलियाओ ॥ ७४ ॥ नियदेह पहापूरियदिसामुहा ससिकलव्व सोहंती । दिट्ठा अभयाए मणोरमेहिं पुत्तेहिं सवत्तो ॥ ७५ ॥ परिवेढिया

1 व. इह जाव वयमंतो ।

सिरीसमनेवत्था सा मणोरमा तत्तो । पुट्ठा कविला तीए कस्सेसा चिन्नपुन्नस्स ? ॥ ७६ ॥ हसिया कविला तक्खणमब्बो ! अच्चब्भुयं इममिमीए । संढेवि पइम्मि सुया गयाववाया जओ जणिया ? ॥ ७७ ॥ भणइ अभया कहं ते णायं जह संढओ पई इस्से ? । उग्घाडियभिप्पाया पुव्विल्लं चरियमक्खेइ ॥ ७८ ॥ देवीए पुणो भणियं णपुंसओ सो भवारिसीणं ति । कामुगसत्थनिरूवियपवंचएगंतविमुहाणं ॥ ७९ ॥ ण उणो मणोरमाए पव्वइयाए जिणाणुरत्ताए । ता कह भणियं तुमए जहा सुनिउणा इमा जीए ॥ ८० ॥ जणियाणि पुत्तभंडाणि रक्खिओ तह जणाववाओवि । संते सुदंसणे नियपइम्मि सप्पुरिसचरियम्मि ॥ ८१ ॥ चिंतेइ तओ कविला धुत्तेण पवंचिया जणेणाहं । एवमईए कज्जे फुरइ न कोई उवाउत्ति ॥ ८२ ॥ भणिया देवी जइ नाम एस जाओ नपुंसओ मज्झ । ता किं तीरइ तुमए पुरिसो काउं सुकुसलाए ? ॥ ८३ ॥ अभया भणइ जइ इमं रमाविउं नो तरामितो नियमो । जावज्जीवं महिलत्तणस्स अइनीयचरियस्स ॥ ८४ ॥ इय विहियपइन्नाए समए नयरंतरम्मि पविसित्ता । भणिया पंडियाधाई सुदंसणेणं जहा संगो ॥ ८५ ॥ सिज्झइ लहुं कुण तहा एयम्मि अनिम्मिए न मम जीयं । भणिया एसा तीए न सुंदरं चिंतियं तुमए ॥ ८६ ॥ सो पररामासु सहोयरत्त-मेगंतियं समुवहइ । किं पुण तुह सरिसीसुं नरेंदभज्जासु, तो भणइ ॥ ८७ ॥ अम्मो ! जहा कहंची संपाडेयव्वओ ममं तुमए । जम्हा कविलाय पुरो मया पयिण्णाकया एसा ॥ ८८ ॥ धाईए चिंतियं धणियमेत्थ एक्को परं उवाओत्ति । सो पव्वदिणे चउरंगपोसहो सुन्नगेहम्मि ॥ ८९ ॥ ठाइ मसाणे वा काउसग्गपडिमाण जीवियनिरासो । एगागी तत्थ ठिओ अनज्जमाणो निसासमए ॥ ९० ॥ जइ कामदेवपडिमानिभेण सक्किज्जए इहाणेउं । वंचेत्तु दारपाले ता कहसु जहा तहा

अट्ठमिपव्वे सुन्ने गिहम्मि पडिमाठियं संतं ॥ ९२ ॥ दट्ठुं
काहं ॥ ९१ ॥ भणियं देवीइ अवितथमेव संपज्जए तओ धाई । तो कामसत्थवित्थारिएहिं
निट्ठुरहियया तस्सुप्पाडणमहायरइ ताहे । उप्पाडित्ता चेडीहिं अप्पिओ अभयदेवीए ॥ ९३ ॥ तो कामसत्थावित्थारिएहिं
नाणाविहोवयारेहिं । तं खोभिउं पयट्टा विमुक्कनीसेसनियलज्जा ॥ ९४ ॥ सो सविसेसं पच्चक्खाणट्ठाणे मणं निरुंभित्ता ।
सिद्धिसिलोवरिसरइंदुकुंदसंखुज्जलच्छाए ॥ ९५ ॥ अप्पाणं ठावित्ता तद्देससमीववत्तिणो सिद्धे । धुणियासेसकिलेसे
निउणं परिचिंतिउं लग्गो ॥ ९६ ॥ तो कट्ठनिव्विसिट्ठं तणुचेट्ठंदुद्धरं धरंतस्स । रयणी अइच्छिया सा न कोवि जाओ
वियारो से ॥ ९७ ॥ जाया पभायसमए वहुं विलक्खत्तणं परिवहंती । तिक्खेहिं नियनक्खेहिं दारिउं देहमह लग्गा
॥ ९८ ॥ उक्कूइयं इमो जं नो पडिवन्नो पइद्दयाइ मए । सो जायपओसो मज्झ निग्गहं एवमायरइ ॥ ९९ ॥ अमयस्स
विमरस्सवि णूणमेत्थ ठाणं इमाओ रामाओ । रत्ताउ होंति अमयं विसं पओसं पवन्नाओ ॥ १०० ॥ उच्छलिए तुमुलरवे
रायावि समागओ पलोएइ । देविं जा तदवत्थं विहिओ सो दुद्धरो रोसो ॥ १०१ ॥ माणुस्सयाण जम्हा इत्थीण
पराभवो सुदुव्विसहो । नो अन्नो कत्तोवि य निमित्तओ जं सहिज्जंति ॥ १०२ ॥ तो वज्झो आणत्तो सव्वत्थवि भासिओ
नयरमज्झे । रत्तंदणाणुलित्तो सीसोवरिधरियछित्तरओ ॥ १०३ ॥ खरमारूढो पुरओ ताडियउद्दंडविरसडिंडिमओ ।
रुज्जलकयमुहपिंडो गललंबिसरावमालो य ॥ १०४ ॥ उग्घोसियं न रायावि अन्नो वा कोववरज्झइ इमस्स । नियदुच्च-
रियं केवलमेयफलं ज्झत्ति संजायं ॥ १०५ ॥ निसुओ मणोरमाए वुत्तंतो एस कन्नदुहदाई । परिभावियं महप्पा सुविणेवि
न परिसं कुणइ ॥ १०६ ॥ जइ मज्झ अत्थि तस्स य सीलस्स निसेवियस्स फलमेत्थ । ता अक्खओ इमाओ वसणाओ

लहुं स उत्तरउ ॥ १०७ ॥ इय चिंतिय पवयणदेवयाए विहिओ थिरो तणुस्सग्गो । वज्झट्ठाणोवगओ पडिवन्नो पवयणसूरीए ॥ १०८ ॥ सो पुण नियकम्मफलं परिभावइ न उण कस्सई दोसो । जमलीयदोसदाणं भवंतरे इयफलं होइ ॥ १०९ ॥ आरोविओ जया सो सूलाओ तक्खणेण सा जाया । सिंहासणं मणिखंडमंडियं फुरियतेयभरं ॥ ११० ॥ तत्तो असिप्पहारो खित्तो खंधम्मि सोवि संजाओ । अइबहलपरिमला मालईए माला गले तस्स ॥ १११ ॥ जा पुण साहोलंवणहेऊ रज्जू गलम्मि से दिन्ना । सा थूलामलमुत्ताहलपरिकलिओ लहु हुओ हारो ॥ ११२ ॥ जं जं कुणंति ते वज्झभूमिपुरिसा नराहिवनिउत्ता । तस्साणुकूलभावं तं तं पडिवज्जए सव्वं ॥ ११३ ॥ तो ते अदिट्ठपुव्वं अस्सुयपुव्वं च वइयरं सव्वं । भीया कहंति रन्नो देव ! न जोग्गो इमाए इमो ॥ ११४ ॥ हीलाए धुवं पुरिसंतरं तु एसो अउव्वयं किंचि । रोसं गयम्मि एयम्मि सव्वपलओ फुडं होही ॥ ११५ ॥ णूणमसज्जण चरियाइ मज्झ देवीइ अलियगो एस । आरोविओ कलंको ता खमणिज्जोत्ति चिंतित्ता ॥ ११६ ॥ चउरंगवलसमेओ णागरगजणाणुगम्ममाणपहो । दहिवाहणो तयं तम्मि अप्पणा विणयपणयसिरो ॥ ११७ ॥ पत्तो नियम्मि जयकुंजरम्मि आरोविउं नयरमज्झे । जा आणिज्जइ एसा ता उच्छलिया जणसलाहा ॥ ११८ ॥ निम्महियखीरसायरफेणुज्जलसीलसालिचरियस्स । कत्तो एसो सुविणंतरेवि तुह लग्गइ कलंको ? ॥ ११९ ॥ अज्जवि सीलस्स फलं दीसइ एयारिसम्मि वसणम्मि । सव्वंगनिबुड्डावि हु जमुत्तरंती महासत्ता ॥ १२० ॥ उज्जालियं नियकुलं कित्ती देसंतरेसु संठविया । उग्घाडिओ य सज्जणमग्गो एवं तए अज्ज ॥ १२१ ॥ एमाइयाइं सज्जणजणेण वयणाइं वुच्चमाणाइं । निसुणंतो संपत्तो कुसुमेहिं विकिज्जमाणसिरो ॥ १२२ ॥ रायभवणम्मि पत्तो

विन्नत्तो नरवई जहा सामि ! । मं अणुमन्नसु काउं सामन्नं जम्मणो अहयं ॥ १२३ ॥ दहिवाहणेण तह बंधवेहिं सयलेण नयरलोएण । पडिवज्जं तावि वयं लद्धावसरोपवन्नो सो ॥ १२४ ॥ सावि य अभया देवी अइनिट्ठुरहियियचेट्ठियवसाओ । उप्पन्नतिव्वलज्जा गइमन्नमपस्समाणी य ॥ १२५ ॥ केणावि अनज्जंती उवंधिय पाणहाणिमायरइ । जाया य वणयरी कुसुमणयरपरिसरमसाणम्मि ॥ १२६ ॥ सावि य पंडियधाई तत्तो निस्सारिया इहागंतुं । गणियाए देवदत्ताए मंदिरे चेडिया जाया ॥ १२७ ॥ पइदिवसं वुत्तंतं अहप्पणो तस्स सा परिकहेइ। जह अभयाए न खोभं नीओ विहियायराएवि ॥ १२८ ॥ सोवि महप्पा कइयावि विहरमाणो गओ पुरे तम्मि । दिट्ठो तीए गोयरचरियं सणियं परिभमंतो ॥ १२९ ॥ कहिओ गणियाए जहा एसो सेट्ठी सुदंसणो जत्तो । मम सामिणीए पत्तो वुत्तंतो मरणपज्जंतो ॥ १३० ॥ नियमोहग्गस्स असज्झमेत्थकिंची अपेच्छामाणा सा । कोऊहलाउला तस्स खोभकामा भणइ चेडिं ॥ १३१ ॥ एस हले ! विस्सासिय तहा २ तं कुणेसु जह मज्झ । पविसह गिहम्मि तत्तो जं जोग्गं तं करिस्सामि ॥ १३२ ॥ तत्तो पणामपुव्वं भणिओ तीए इमस्स गेहस्स । नियचरणफंसणेणं कुणसु पवित्ते वहुपएसे ॥ १३३ ॥ गिण्हसु भत्तं पाणं च एत्थ मुणिलोगजोगमेयं च । अइसरलमणो महिलामणाइं कुडिलाइं अमुणंतो ॥ १३४ ॥ पत्तो गिहम्मि तीए ठइयं दारं विचित्तसालाए । णेऊण भणइ गणिया किं सुभग ! वयं पवन्नो सि ? ॥ १३५ ॥ भुंज ताव विसए मणोहरे, कुण पसायमिह ठासु मंदिरे । तुज्झ मज्झ मणुरूवजोव्वणं, मा कुणेसु मम पणयखंडणं ॥ १३६ ॥ णत्थि जम्मफलमन्नमुज्जलं, वज्जिऊण रइसोक्खमग्गलं । ता परूढपणयं तुमं मम, किं न मन्नसि सुरंगणासमं ! ॥ १३७ ॥ दिट्ठमत्थमवहाय खिज्जसे,

सववंछियपयत्थकारयं, मं मुयंतु विलसंतहारयं ॥ १३८ ॥ किंच दुक्करवएवि सेविए, किं परत्थ अहवा न लज्जसे ! । सववंछियपयत्थकारयं, मं मुयंतु विलसंतहारयं ॥ १३८ ॥ किंच दुक्करवएवि सेविए, एयमेव फलमेत्थ पाविए । अत्तणो कुणइ को कयत्थणं, अणुसरंत परलोयपत्थणं ? ॥ १३९ ॥ सेविएसु विसएसु अत्थि मे, चिंतियं जइ वयम्मि एत्थिमे । उग्गरूवतव चरणकारया, होमु दोवि दुग्गइनिवारया ॥ १४० ॥ इय पत्थिओवि जाहे सुरसिहरिसरिच्छधीरिमा मुयइ । न पइन्नमेस लग्गा ताहे उवगूहणाईहिं ॥ १४१ ॥ चालेउं कामुगलोयसत्थवित्थारिएहिं विविहेहिं । तहवि य अजायखोभो दिणावसाणे खमावित्ता ॥ १४२ ॥ तह अप्पाणं निंदिय सविंदियसंवरेण मयकप्पो । चेडीहिं समुप्पाडिय मसाणठाणे परिट्ठविओ ॥ १४३ ॥ पडिवन्नकाउसग्गो तत्थवि वंतरियसुराए अभयाए । उवसग्गिउ-माढत्तो सम्मं सहमाणओ सत्त ॥ १४४ ॥ दिवसाणि जाव गमयइ सूरुग्गमणे अहट्ठमदिणम्मि । पयडियलोयालोयं पावइ सो केवलालोयं ॥ १४५ ॥ सच्चरियाखित्तमणा समागया तत्थ चउविहदेवा । अइधवलविसालदलं सुवन्नकमला-सणं रइयं ॥ १४६ ॥ उवविट्ठो तत्थ इमो केवलमहिमा कया, तओ कहिओ । धम्मो भवन्नवुद्धारधीरबोहित्थसारिच्छो ॥ १४७ ॥ जहा—"लद्धूणुत्तममाणुसत्तणमिणं कत्तोवि पुण्णोदया, धम्मं तित्थयराण तत्थवि तहा पावेत्तु तुब्भेहितो । नीहारिंदुसमुज्जलेण मणसा देवो जए पूज्जउ, पूयापुवगमायरेण महया सम्माणणिज्जो जिणो ॥ १४८ ॥ पच्चक्खाणमणु-क्खणं जलहरासारोवमाणो तहा, कामक्कोहदवग्गिनासणकए सग्गापवग्गावहो । सज्झाओ पडिवन्नपुन्नणियमा णिच्चं तमब्भु-ज्जमो, कायवो जिणदेसिएण विहिणा दीणाइदाणेवि य ॥ १४९ ॥ वाढं नायणहपरायणत्तणरई नीहारहारुज्जले, लोलत्तं जससंगहम्मि गरुई दक्खिन्नबुद्धीवि य । णिच्चं मच्चुझडप्पवाहतसणं तप्पेल्लणे जो सुए, मग्गो तस्स निरूवणं सुनिउणं

पज्जंतकालोचिओ ॥ १५० ॥ वच्छल्लं समधम्मियाण परमं जीवाण रक्खा दढा, वेरग्गं विसएसु दुग्गइपुरीपंथेसु लोलेसु य । अन्नोवेत्थ विही जिणिंदसमए जो बंभचेराइओ, पण्णत्तो सुपवित्तसंपयकरो सो सेवणिज्जो सया ॥ १५१ ॥ लद्धो कप्पतरुवि कप्पियफलो चिंतामणी चिंतिओ, धेणू कामदुहा निहाणमणहं दिव्वोसहीओवि य । णो लब्भंति सुहेण धम्मगुरवो सन्नाण नीराकरा, सुद्धायारपरा सुदेसणसुहाकोसा अरोसा सया ॥ १५२ ॥ जे गोसीससरिच्छसोरभभरा सीलेण लीलालए, जेऽणुद्दामरवम्महारिपसरा जे वुद्धसुद्धागमा । साहूणं समधम्मियाण य तुमं मुंचेज्ज मा संगमं, तेसिं दोसविसोसहाण महिमा माणिक्कठाणेण य ॥ १५३ ॥ नो भूपालपए न रोगविलए नो चेव देवालए, णो चिंतामणिणो ण कप्पतरुणो लाभेवियंभेज्ज सो । निव्विण्णाण भवन्नवाओ धणियं निव्वाणकंखीण जो, संजाएज्ज गुणब्भुयम्मि सुयणे दिट्ठे पमोओ मणो ॥ १५४ ॥ सम्मं णाहिगयागमा गुरुकुले संविग्गमग्गाणुगे, नो वुत्था पसमं सभाववसओ नोप्पन्नपुवा तहा । तेसिं मूढमणाण देसणगुणाऽजोग्गाण जा देसणा, सा दूरेण दवग्गिदूमियमहारन्नंव वज्जा जओ ॥ १५५ ॥ नो सत्थं न विसं न साइणिवसो नो भूययेयग्गहो, दुक्कालो न दुराउलं ण जलणो जालाकरालो य तं । सिद्धंतो जिणभासिओ कुमइणा लोएण मिच्छागहा, संपाडेज्ज जए अणत्थमिहजं देसिज्जमाणोऽन्नहा ॥ १५६ ॥ एसो धम्मोवएसो निविडतमभरुत्तारतारप्पईवो, एसो धम्मोवएसो निविडतममहावाहिनासोसही य । एसो धम्मोवएसो सिवसुहभवणारोहसोवाणसेणी, एसो धम्मोवएसो भवियजण ! तओ नावणिज्जो मणाओ ॥ १५७ ॥ वुद्धा वहवो जीवा

१ ग. व.-डेज अणत्थमत्थमिह ।

वंतरदेवी य देवदत्ता य । तह पंडिया य धाई एवं सो विहियकल्लाणो ॥ १५८ ॥ केवलिविहारमाराहिऊण निस्सेसखीणकम्मं सो । सिवमयलमरुयमभयं पत्तो सिवनामगं ठाणं ॥ १५९ ॥ इय परिणयवयसारा भव्वा कल्लाणकारणं होंति । दढमप्पणो परेसिं च जायहारुज्जलजसोहा ॥ १६० ॥ इति ॥

अथ पञ्चमोदाहरणम्;—

णासेक्के णंदद्दुगं एगो सड्ढोऽवरो उ मिच्छत्तो। राय तलाग णिहाणगसोवण्णकुसाण पासणया ॥५३१॥ १
तह किट्ट लोहमयगा अजत्त कम्मकर गहण विक्कणणं। सड्ढपरिण्णाणग्गह इच्छापरिमाणभंगभया ५३२
इयरगह पइदिणमिहं आणिज्जेह गहणमहिगेणं। बहु गमण निमंतणाओ तह पुत्तनिरूवणा गमणं ५३३
आगम अहिगादाणं वावडमग्गण यरोस खिवणम्मि। मलगम सुवण्णदंसण खरदंडिय पुच्छ सेसेसु ५३४
सांहणगदिट्ठपुव्वा अण्णोण्णेगेण दिट्ठगहणं च। पुच्छा सावगपूया दंडो इयरस्स अइरोद्दो ॥ ५३५ ॥ ५ ॥

नासिक्ये नगरे नन्दद्विकं द्वौ नन्दनामानौ वणिजौ समभूताम् । तयोश्चैकः श्राद्धो जिनवचनश्रद्धालुः गृहीताणुव्रतादिश्रावकजनयोग्यसमाचारो भगवदर्हद्वचनमेव सर्वसमीहितसिद्धिहेतुतया नित्यं मन्यमानः सन्तोषपीयूषपानप्रभावान्निवारितविषयलोभविषवेगः प्रशमसुखखानिमध्यमग्नः कालमतिवाहयांचकार । अपरस्तु द्वितीयः पुनः 'मिच्छत्तो' इति

मिथ्यात्वं युक्तायुक्तवस्तुविचारतिरस्कारकारी जीवपरिणतिविशेषस्तेनार्त्तः पीडितो मिथ्यात्वार्त्तः; अथवा दण्डयोगाद्दण्डवद् मिथ्यात्वयोगाद् मिथ्यात्वः सन् अतितीव्रलोभो भृशं सर्वक्रियासु गुणदोषयोः परिणाममगणयन् प्रवृत्तिमाललम्बे। अन्यदा 'रायतलाग' त्ति राज्ञा तडागमोड्डैः खानयितुमारब्धम्। तत्र च निधानगतसौवर्णकुशानामतिचिरकालनिधाननिक्षिप्तसुवर्णमयकुशानामोड्डानां दर्शनमजायत ॥ ५३१ ॥ १ ॥ 'तह किट्ट' त्ति तथाविधताम्रमयाधारमलसंगलनात् सम्पन्नकिट्टास्ते संजाताः। ततः सुवर्णछायाभङ्गाल्लोहमयका इति संभाव्यायत्नोऽनादरस्तेषु तैर्विहितः। कर्मकरैश्च तडागस्वानकर्किंकरैर्ग्रहणक्रिया तेषु दानं तेषां कृतम्। विपणिपथावतारणेन च विक्रयणमारब्धम्। तत्र च 'सड्ढपरिण्णाणगह' त्ति तेन नन्दश्राद्धेनाकारविशेषात् तौल्यविशेषाच्च किट्टावृता अपि ते सुवर्णमया इति ज्ञानविषयतां नीताः। अग्रहोऽनुपादानं च कृतं चैषाम्। कुत इत्याह—इच्छापरिमाणभंगभयात्। यद्यपि राजलोकेन तथा गृह्यमाणेषु ज्ञातेषु तेषु सर्वस्वापहारादिको निश्चितो दण्डः सम्पद्यत इति मनसि तस्य वितर्कणमस्ति, तथापि तदवधीरणेन प्रतिपन्नस्येच्छापरिमाणव्रतस्य तत्सुवर्णकुशसंग्रहेणाधिक्यं संजायते, इति मा भूत् प्राणभङ्गादपि दारुणफलो व्रतभङ्ग इत्यभिप्रायाद् न गृहीता इति ॥ ५३२ ॥ २ ॥ इतरग्रहः इतरेण मिथ्यादृशा नन्देन दारुणलोभभुजगविषविह्वलेन ग्रहस्तेषां विज्ञाततथावस्थिततत्स्वरूपेणापि कृतः। भणितं च प्रतिदिनमिहानयत कुशानेतान् कार्यं महदस्माकमेतैः। आगतानां च ग्रहणमधिकेन लोहमयकुशमौल्याद् अतिरिक्तेन द्रव्येण करोति स्म। एवं च बहुग्रहणं प्रतिदिवसं गृह्यमाणतया बहूनां प्रभूतानां ग्रहणमजनि। अन्यदा च कस्यचित् स्वजनादेरलंघनीयवचनस्य गृहे कश्चिदुत्सवो बभूव। तेन चासावागत्य निमंत्रितः।

ततो निमन्त्रणात्—यथाऽहं तडागखानकहस्तात् कुशान् गृहीतवान् तथा भवतापि ग्राह्या इति पुत्रनिरूपणानन्तरं तेन तत्र गमनं कृतम् ॥ ५३३ ॥ ३ ॥ तस्य च तत्रागमः समागमनं तडागखानकानां कुशहस्तानां हट्टे संजातम् । तैश्चाधिकधनेन ते कुशा दातुमारब्धाः । तेन चादानमधिकमूल्यस्य कृतम् । ततो व्यावृत्तमार्गणा च व्यावृत्तस्य हट्टव्यवहारे[1] तस्य पार्श्वात् पुनरप्यधिकमूल्यमार्गणा सत्वरैः सद्भिस्तैर्यदा कृता, तदा तेन रोषेणाक्षमया तेषां कुशानां हट्टाद् बहिर्देशे क्षेपे कृते सति मलस्य किट्टलक्षणस्य गमोऽपगमः । ततस्तस्मात् सुवर्णदर्शनं खरकर्मणां दण्डपाशिकनराणां तैश्च निवेदितम् । दण्डिकपृच्छा–राज्ञा प्रश्नः कृतः शेषेषु कुशेषु विषये यथा क्व शेषाः कुशा विक्रीता भवद्भिरिति ॥ ५३४ ॥ ४ ॥

तैश्च साधनं निवेदनं कृतं, यथा—दृष्टपूर्वा अन्येनैकेन नन्देन दृष्टाः परमग्रहणं चाग्रहणमेव तेन तेषां कृतम्, अनेन तु गृहीताः प्रभूता इति । ततः पृच्छा तस्य राज्ञा कृता, यथोपस्थिता अप्यमी कुशाः कस्माद् न गृहीताः? भणितं च तेन देव! इच्छापरिमाणव्रतभङ्गभयात् । ततः श्रावकपूजा श्रावकस्य शुद्धव्यवहारतया पूजा महागौरवरूपा कृता, दण्ड इतरस्य मिथ्यादृशो नन्दस्य पुनः रौद्रः सर्वस्वप्राणहारणलक्षणः कृतः । तथा ह्यसौ मित्रगृहाद् निवर्त्तमान एवं वृत्तान्तमाकर्ण्य 'अहो? निजजंघाबलादेव हट्टादुत्थायाहमन्यत्र गतः, ततो नूनमेतयोरेवापराधः, तच्छेदनीये एते' इति परिभाव्य तीक्ष्णधारेण कुठारेण तयोर्घातमाचचार । ज्ञातवृत्तान्तेन च राज्ञा तदवस्थस्यापि तस्य दण्डो विहित इति ॥ ५३५ ॥ ५ ॥ अथ षष्ठमुदाहरणं गाथापञ्चकेनाह;—

नन्दद्विकोदाहरणम्—

[1] खग. हट्टव्यवहारेण, घ. हट्टस्य व्यवहारे तस्य ।

उज्जेणीए रोगो णामं धिज्जाइओ महासड्ढो । रोगहियासण देविंदपसंसा असद्दहण देवा ॥ ५३६ ॥ १ ॥
काऊण वेज्जरूवं भणंति तं पण्णवेमो अम्हेत्ति । रयणीए परिभोगो महुमाईणं चउण्हं तु ॥ ५३७ ॥ २ ॥
तस्साणिच्छण कहणा रन्नो सयणस्स चेव तेसिं तु । लग्गण सत्थकहाहिं ताणं इयरस्स संवेगो ॥५३८॥३
देहत्थपीडाणाया पडिवोहण मो तु णवरमेतेसिं । आया तु देहतुल्लो देहो पुण अत्थतुल्लोत्ति ॥ ५३९ ॥ ४ ॥
देवुवओगे तोसो नियरूवं रोगहरण नामंति । आरोगो से जायं वयपरिणामोत्ति दट्ठव्वो ॥ ५४० ॥ ५ ॥

उज्जयिन्यां नगर्यां वालकालादेव रोगवहुलतया रोगो नाम रोग इत्याख्यया प्रसिद्धः, धिग्जातीयो महालोभाभिभूततया परप्रार्थनाप्रवणत्वेन धिग् निन्दनीया या जातिस्तस्यां भवो ब्राह्मण इत्यर्थः । कीदृश इत्याह–महाश्राद्धोऽणुव्रतादिश्रावकसमाचारशुद्धपरिपालनतया प्रधानश्रावकः । तस्य च भवान्तरोपार्जितासद्वेद्यादिकर्मपरिपाकतः कश्चिदनिर्द्धारितस्वरूपो रोगो जातः । तेन च सम्पद्यमानचिकित्सासामग्रीकेणापि तस्य रोगस्याधिसहनमाश्रितम्, यथा—"सह कडेवरखेदमचिन्तयन् स्ववशता हि पुनस्तव दुर्लभा । वहुतरं च सहिष्यसि कर्म हे परवशो न च तत्र गुणोऽस्ति ते ॥१॥ अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् । नाभुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपि ॥ २ ॥" एवं च तस्य तं रोगं सम्यगधिसहमानस्य, अत एव रोगप्रतीकारपराङ्मुखस्य गच्छत्सु दिवसेषु देवेन्द्रप्रशंसा प्रवृत्ता, यथा–अहो ! महासत्त्वो रोगनामोज्जयिन्यां ब्राह्मणो यदेवमुपस्थाप्यमानचिकित्सोऽपि तदनपेक्षतया रोगमधिसहमानस्तिष्ठति । ततश्च

प्रत्गृहीतव्यवहारः । गमनं तत्र द्वीपे । तथा कज्जवोज्झनं चैव । तत्र विहिते गोदर्शनं गोमयभरणं वहनानामत्यर्थमिति ॥ ५६६ ॥ १७ ॥ आगमनं निजनगरे । ततो राजदर्शनम् । आनितम् त्वया द्वीपान्तरात् किमिति राजप्रश्ने गोवरो देव! आनीत इत्युत्तरं दत्तम् । राजा प्राह–उच्छुल्कं तव भाण्डम् । प्रसाद इति तेन भणिते हसनं लोकस्य । प्रवेशना ततः स्वगृहे भाण्डस्य ॥ ५६७ ॥ १८ ॥ समये चाग्निज्वालनं गोमयपिण्डानाम् । ततो रत्नानि व्यक्तीभूतानि । अतश्च विक्रयेण रत्नानां परिभोगोऽन्नादिगोचरः समजनि। एवं च लोकपूज्यत्वं तथा लोकोपहासावधीरणेन यो निश्चयः कार्यगतस्तस्मात्प्रा-प्तमेतेन भव्यमत्त्वेन कल्याणयोग्यजीवेनेति ॥ ५६८ ॥ १९ ॥ पट्टकसदृशी आज्ञा, एवमादीहापि धर्मविषये योजनीयमेव निःशेषं निजबुद्ध्या ज्ञायकेन सता यथाविषयं यथायोगमिति । तथाहि–पट्टकसदृशी आज्ञा, पितृस्थानीयो गुरुः, उपहास-स्थानीया अन्यजनवादाः, ग्रहिलत्वस्थानीयं स्वाभिप्रायस्य ज्ञानं लोके स्वप्रकाशनं, रत्नस्थानीयो धर्म इति ॥ ५६९ ॥ २० ॥ ईदृशानां गोवरवणिक्सदृशानां धर्मो दातव्यः परहितोद्यतेन गुरुणा । इह जगत्यात्मंभरित्वमितरथा ईदृशानामप्यदाने । यदि नामैवं ततः किमित्याह–तदात्मंभरित्वमनुचितमीश्वराणामिव ॥ ५७० ॥ २१ ॥ एवं लब्धतदभिप्रायया श्रीमत्या नीता व्रतिनीसमीपं साध्वीमकाशम् । कमित्याह–प्रतिश्रयं वसतिम् । कमित्याह–साधयित्वा वृत्तान्तं न कल्पते मम व्रतदानं कर्त्तुं, किन्तु प्रवर्त्तिन्या एवेतिरूपम् । तत्रापि प्रतिश्रये गता प्रवर्त्तिन्या महत्तरया यथाविधि उचितसम्भाषणादिना विधिनेत्यर्थः दृष्टा सा । इति प्राग्वत् ॥ ५७१ ॥ २२ ॥ दानादिभेदभिन्नः कथितो धर्मश्चतुर्विधस्तस्याः, कर्मोपशमेन तथा सोमायाः परिणतश्चैव ॥ ५७२ ॥ २३ ॥ ततो विधिनाऽणुव्रतग्रहणं पालनमनुवर्त्तनं तस्य । ततोऽप्रीतिकं गुरुजनस्य । भणितं

प्रकृति ॥ ५८६ ॥ ३७ ॥ देवतायोजितपिटिका मस्तकेनैव सह संयोजितहतभर्तृनिक्षिपपिटिका गलद्वसारुधिरभृतस्तनपृष्ठा अन्धा सती पलायमाना वनं प्रति, निवर्त्तमाना च पुरं प्रति सज्जाक्षा भवन्ती ॥ ५८७ ॥ ३८ ॥

डिम्भकवृन्दपरिगता खिंस्यमाना जात्योद्घट्टनतो जनेन रुदती करुणस्वरैर्दृष्टा धिग्जातीया सोमाजनकलोकेन । एवं चैवमेव चतुर्थप्रतिषेधो वृत्तः ॥ ५८८ ॥ ३९ ॥ एवमसन्तोषाल्लोभोद्रेकलक्षणाद् विपन्नवहनो विनष्टयानपात्रः समुद्रात् कथंचिदुत्तीर्णो मत्स्याहारस्यायोगोऽसम्यक्प्रयोगस्तस्मादत्यन्तं व्याधिपरिभूतः कुष्ठाभिधानिष्टव्याधिविधुरितः सञ्जातः ॥ ५८९ ॥ ४० ॥ ततस्तेनाकर्णितं यन्निधिः सुतवलिदानं तस्मात्, तत्फलो निधिलाभफलः 'पउत्ते'त्ति प्रयुक्तो विधिः पुत्रबलिदानलक्षणः परम्, अफलो वृत्तः । कुत इति चेत्, यतस्तदन्यगृहीतस्तस्मात् पुत्रवलिदायकादन्येन केनचिद् गृहीतः प्रागेव निधिरिति । विज्ञातश्चासौ नगरराजैर्नगरारक्षकैर्यथाऽयं निधानार्थे दत्तपुत्रवलिः ॥ ५९० ॥ ४१ ॥ तत उत्क्षुभ्यमाणो निन्द्यमानो वहुजनधिकारितो धिक्कारमानीतो वसनहीनो वस्त्रविकलो दृष्टः कश्चिद्दरिद्रः । ततो जनकलोकेन प्रतिषेधः पञ्चमेऽपि व्रते परित्यज्यमाने कृतस्तथा यथा प्राच्येष्विति ॥ ५९१ ॥ ४२ ॥ प्राप्तानि ततः सोमाजनकमानुषाणि, एवं पूर्ववत् संविग्नानि प्रतिश्रयसमीपं गणिनीसंनिधानम् । तत्रापि च वैशसमिदं दृष्टमेतैः सोमाजनकमानुषैः सहसेति ॥ ५९२ ॥ ४३ ॥ वैशसमेव दर्शयति–रात्रौ भुञ्जानो भोजनं कुर्वन् । कैरित्याह—मण्डकवृन्ताकैः कश्चिद् नरः पुमान् । किं कृत्वेत्याह—'विच्चुं'ति वृश्चिकं 'छोढूण' क्षिप्त्वा मुखेऽदृष्टकमज्ञातमेव । ततो विद्धकस्ताडितस्तेन वृश्चिकेन ॥ ५९३ ॥ ४४ ॥ व्यन्तरजातिविषाद्—भावप्रधानत्वान्निर्देशस्य व्यन्तरजातिविपत्वाद् वृश्चिकस्य, उच्छूनमुखः सम्पन्न-

अयमुवदनोऽत एव महाव्यसनप्राप्तश्चैकित्सिकपरिकरितो वैद्यसंघातसमन्वितः प्रयुक्तचित्रौषधनिधानः ॥ ५९४ ॥ ४५ ॥
उद्वेल्यमानः कृताङ्गभङ्गो बहुशः सगद्गदं विरममारटंश्च । दृष्ट इति सम्बध्यते । ततो हा दुष्टमिदं पापं रात्रिभोजनमिति मन्यमानानां तेषां जातः षष्ठे व्रते परित्यागस्य प्रतिषेधः ॥ ५९५ ॥ ४६ ॥ अत्रान्तरे सोमयाभिहितमेष त्वेष एव मया गृहीतः, प्रायो बाहुल्येन, धर्मः, अन्येषामपि नियमविशेषाणां केषाञ्चिद् ग्रहणादेवमुक्तमिति । ततश्च ते सोमाजनकलोका आहुर्बुवते—पालयेस्त्वं यत्नेन, प्रेक्षामहे, तथाचेति समुच्चये, तां तव गुरुत्वाभिमतां व्रतिनीमिति ॥ ५९६ ॥ ४७ ॥ गमनं प्रतिश्रये चैत्यवन्दनं सन्निहितशय्यातरगृहे चैत्यप्रतिमानाम् । ततः सोमया गणिनीसाधनं यथैष मम गुरुलोक इति । तया गणिन्या 'उचियपडिवत्ती' इति उचितप्रतिपत्त्या पूर्वाभाषणादिकया देशनमकारि । तोषस्तेषां संवृत्तः । धर्मकथा सामान्येन जाता । प्रच्छनं विशेषेण केषाञ्चिदर्थानां तैः कृतम् । कथनं गणिन्या एवंच वक्ष्यमाणनीत्या ॥ ५९७ ॥ ४८ ॥

को धम्मो जीवदया, किं सोक्खमरोग्गया उ जीवस्स । को णेहो सब्भावो, किं पंडिच्चं परिच्छेओ ॥ ५९८ ॥
किं विसमं कज्जगती, किं लद्धं जं जणो गुणग्गाही । किं सुहगेज्झं सुयणो, किं दुग्गेज्झं खलो लोओ ॥ ५९९ ॥
एमादिपुच्छवागरणतो तहा भद्दयाणि जायाणि । जइ तीए धम्मविग्धं पायं सुविणेऽवि ण करेंति ॥ ६०० ॥

इदं न महता प्रबन्धेन व्याख्यातत्वात् सुगमत्वाच्च न व्याख्यायते । एवमादीनि प्राग्गाथाग्रन्थोक्तानि यानि पृच्छाव्याकरणानि, तेभ्यस्तथा भद्रकाणि जातानि, यथा तस्या धर्मविघ्नं प्रायः स्वप्नेऽपि न कुर्वन्तीति ॥ ५९८ ॥ ५९९ ॥ ६०० ॥

च तेन छर्दय मुञ्च इमं धर्मम् । तयोक्तं–गुरुमूले मोक्तव्यः । ततस्तेषां तत्र गुरुमूले नयनमारब्धम् ॥ ५७३ ॥ २४ ॥ कुशलया सोमया चिन्तितमिदं, यथा–संमुखवचनं प्रत्युत्तरदानरूपं गुरूणां मातापित्रादीनां नो नैव युक्तम् । तथा च तत्र प्रवर्तिनीदर्शनेनैतेषामपि गुरूणां बोधिर्भविष्यति ॥ ५७४ ॥ २५ ॥ गच्छद्भिश्च तैर्दृष्टं वणिग्गृहे वैशसमसमंजसं महाघोरम् । किं तदित्याह–हिंसाऽनिवृत्तेर्विजृम्भितं कुलविनाशकरम् ॥ ५७५ ॥ २६ ॥ दुःशीलाऽगारी गृहस्था । सा च भृतके लग्ना । तया च सुतघातनं त्वया विधेयमिति तेन सह संगारः संकेतः कृतः । ततःप्रेषणं ग्रामे तयोर्यौगपद्येन कृतम् । सुतेन तद्धातनम् । ततः केवलागमनं केवलस्यैव सुतस्य गृहागमनमजनीति ॥ ५७६ ॥ २७ ॥ तयाप्यगार्या तस्य वधनं घातः कृतः शिलया प्रतीतरूपया, वध्वा तस्या असिकेन । चुलीपुत्रकेण दुहितुर्निर्वेदनमित्यर्थः । हा किमेतदिति वोलः कोलाहलो जातः ॥ ५७७ ॥ २८ ॥ लोकमिलने वचनं प्रवृत्तं त्वयापि किं न एषा वधूर्मातृघातिका घातिता ? साऽऽह–हिंसाया निवृत्ताऽहम् भणितं च जनेन एतदनिवृत्तिर्हिंसाया अविरमणमहो पापेति ॥ ५७८ ॥ २९ ॥ तया सोमया भणितौ च गुरू मयाप्येकं तावद् व्रतमिदं हिंसानिवृत्तिरूपं गृहीतं वर्त्तते, तत्किं मोक्तव्यमिदमिति पृष्टे तावाहतुः–न नैव मोक्तव्यम्—आस्तामिदं व्रतमिति ॥ ५७९ ॥ ३० ॥ एवं यथा पथि गच्छद्भ्यां गुरुभ्यां कुटुम्बमारी दृष्टा; तथा, विनष्टवहनः कश्चिन्नौवित्तको द्वीपान्तरे मन्दः सन् भृतकेन कर्मकरेण सुष्ठु सादरं प्रतिजागरितः, तुष्टश्चासौ तं प्रति दुहितृदाता वणिक् सम्पन्नः, स च भृतकेनोक्तः–विवादे कथंचित्प्रवृत्ते जीवकाः पक्षिविशेषाः, ते चाभिज्ञाश्च साक्षिणः, तेभ्यो विज्ञेयो भवान् मिथ्याभाषी व्यवहारे इति ॥ ५८० ॥ ३१ ॥ गृहागतश्च महेलादिवशाद् विलोट्टो दुहितृदानं

प्रति सः। ततो विवादो जातः। भृतकेन राज्ञः शिष्टो निवेदितो दुहितृदानव्यवहारः। इति प्राग्वत्। तथा, देव! पक्षिणः साक्षिणो वर्त्तन्ते, इति पक्षिसाक्ष्ये प्रतिपादिते नृपानुज्ञातेन तेन गत्वा ते आनीताः। विस्मयश्च राज्ञः संवृत्तः। ततः 'विरलं'ति संनिहितजनापसारणे कृते। ततः पृच्छा च प्रवृत्ता, यथा—॥ ५८१ ॥ ३२ ॥ कुत्र साक्ष्यमेषाम्। ततश्छगणे गोमये कृमिदर्शनेन—चञ्चूप्रान्तभागेन कृमीणां कीटकानां भोजनार्थं निक्षिप्तानां दर्शनमन्येषां परिपार्श्वतोऽवस्थितानां स्वत एव क्रियमाणं पश्यतां प्रयोजनं तेन तैः साक्ष्यं कृतम्। कथमित्याह—ईदृशैः कर्मभिरलीकभाषणरूपैरेवंरूपगोमयभक्षकैर्भूयत इति। ततो धाटितश्चासौ धिक्कारहतश्चेति धाटितधिक्कारहतो दृष्टः सोमाजनकलोकेन। ततो द्वितीयेऽपि च व्रते मुच्यमाने निषेधः कृतः ॥ ५८२ ॥ ३३ ॥ एवमेव तिलस्तेनः स्नानार्द्रः कथमपि हट्टसंवर्त्तो गोप्रेरितः संस्निग्धपतितः—तिलराशिमध्ये निमग्नः तैस्तिलैः समं तथार्द्र एव गतो गेहमिति ॥५८३॥ ३४ ॥ जनन्या प्रच्छाद्य तिलान् शोषयित्वा निस्तुषीकृत्य प्रतिदत्तखादितो मयूराण्डः कृतः। ततो मयूराण्डकभक्षणात् तस्मिंस्तिलस्तैन्ये प्रलग्नो बह्वादरो जनः, तथा स्नानार्द्रप्रकारेण पुनरिति पुनःपुनर्हृततिलनिकरः ॥ ६८४ ॥ ३५ ॥ एवमेव तिलवच्छेषेऽपि वस्त्रादौ प्रलग्नः। गृहीतो राजपुरुषैः। ततो जनन्याः खादितः स्तनखण्डः। परिच्छिन्नकः कृत्तहस्तपादावयव इत्येवंरूपो दृष्टः। निवारणा नवरं केवलं तृतीयेऽपि व्रते मुच्यमाने कृते ॥ ५८५ ॥ ३६ ॥ एवं घोटकघटिता घोटकरक्षानियुक्तपुरुषविशेषप्रसक्ता दुःशीला काचिन्महिलामोहात् कामोन्मादाद् महापापा। कीदृशी विनिपातितभर्त्तृका परिष्ठापयन्ती तकं भर्त्तारं घोरा रौद्र-

प्रकृति ॥ ५८६ ॥ ३७ ॥ देवतायोजितपिटिका मस्तकेनैव सह संयोजितहतभर्तृनिक्षिपपिटिका गलद्वसारुधिरभृतस्तनपृष्ठा अन्धा सती पलायमाना वनं प्रति, निवर्त्तमाना च पुरं प्रति सज्जाक्षा भवन्ती ॥ ५८७ ॥ ३८ ॥

डिम्भकवृन्दपरिगता खिंस्यमाना जात्योद्घट्टनतो जनेन रुदती करुणस्वरैर्दृष्टा धिग्जातीया सोमाजनकलोकेन । एवं चैवमेव चतुर्थप्रतिषेधो वृत्तः ॥ ५८८ ॥ ३९ ॥ एवमसन्तोषाल्लोभोद्रेकलक्षणाद् विपन्नवहनो विनष्टयानपात्रः समुद्रात् कथंचिदुत्तीर्णो मत्स्याहारस्यायोगोऽसम्यक्प्रयोगस्तस्मादत्यन्तं व्याधिपरिभूतः कुष्ठाभिधानिष्टव्याधिविधुरितः सञ्जातः ॥ ५८९ ॥ ४० ॥ ततस्तेनाकर्णितं यन्निधिः सुतबलिदानं तस्मात्, तत्फलो निधिलाभफलः 'पउत्ते'त्ति प्रयुक्तो विधिः पुत्रबलिदानलक्षणः परम्, अफलो वृत्तः । कुत इति चेत्, यतस्तदन्यगृहीतस्तस्मात् पुत्रबलिदायकादन्येन केनचिद् गृहीतः प्रागेव निधिरिति । विज्ञातश्चासौ नगरराजैर्नगरारक्षकैर्यथाऽयं निधानार्थे दत्तपुत्रबलिः ॥ ५९० ॥ ४१ ॥ तत उत्क्षुभ्यमाणो निन्द्यमानो बहुजनधिक्कारितो धिक्कारमानीतो वसनहीनो वस्त्रविकलो दृष्टः कश्चिद्दरिद्रः । ततो जनकलोकेन प्रतिषेधः पञ्चमेऽपि व्रते परित्यज्यमाने कृतस्तथा यथा प्राच्येष्विति ॥ ५९१ ॥ ४२ ॥ प्राप्तानि ततः सोमाजनकमानुषाणि, एवं पूर्ववत् संविग्नानि प्रतिश्रयसमीपं गणिनीसंनिधानम् । तत्रापि च वैशसमिदं दृष्टमेतैः सोमाजनकमानुषैः सहसेति ॥ ५९२ ॥ ४३ ॥ वैशसमेव दर्शयति—रात्रौ भुञ्जानो भोजनं कुर्वन् । कैरित्याह—मण्डकवृन्ताकैः कश्चिद् नरः पुमान् । किं कृत्वेत्याह—'विच्चुं'ति वृश्चिकं 'छोढूण' क्षिप्त्वा मुखेऽदृष्टकमज्ञातमेव । ततो विद्धकस्ताडितस्तेन वृश्चिकेन ॥ ५९३ ॥ ४४ ॥ व्यन्तरजातिविषाद्—भावप्रधानत्वान्निर्देशस्य व्यन्तरजातिविषत्वाद् वृश्चिकस्य, उच्छूनमुखः सम्पन्न-

श्वयगुवदनोऽत एव महाव्यसनप्राप्तश्चैकित्सिकपरिकरितो वैद्यसंघातसमन्वितः प्रयुक्तचित्रौषधनिधानः ॥ ५९४ ॥ ४५ ॥ उद्वेलमानः कृताङ्गभङ्गो बहुशः सगद्गदं विरसमारटंश्च । दृष्ट इति सम्बध्यते । ततो हा दुष्टमिदं पापं रात्रिभोजनमिति मन्यमानानां तेषां जातः षष्ठे व्रते परित्यागस्य प्रतिषेधः ॥ ५९५ ॥ ४६ ॥ अत्रान्तरे सोमयाभिहितमेष त्वेष एव मया गृहीतः, प्रायो बाहुल्येन, धर्मः, अन्येषामपि नियमविशेषाणां केषाञ्चिद् ग्रहणादेवमुक्तमिति । ततश्च ते सोमाजनकलोका आकूतवते—पालयेस्त्वं यत्नेन, प्रेक्षामहे, तथाचेति समुच्चये, तां तव गुरुत्वाभिमतां व्रतिनीमिति ॥ ५९६ ॥ ४७ ॥ गमनं प्रतिश्रये चैत्यवन्दनं सन्निहितशय्यातरगृहे चैत्यप्रतिमानाम् । ततः सोमया गणिनीसाधनं यथैष मम गुरुलोक इति । तया गणिन्या 'उचियपडिवत्ती' इति उचितप्रतिपत्त्या पूर्वाभाषणादिकया देशनमकारि । तोषस्तेषां संवृत्तः । धर्मकथा सामान्येन जाता । प्रच्छनं विशेषेण केषाञ्चिदर्थानां तैः कृतम् । कथनं गणिन्या एवंच वक्ष्यमाणनीत्या॥५९७॥४८॥

को धम्मो जीवदया, किं सोक्खमरोग्गया उ जीवस्स । को णेहो सब्भावो, किं पंडिच्चं परिच्छेओ ॥ ५९८॥
किं विसमं कज्जगती, किं लद्धं जं जणो गुणग्गाही । किं सुहगेज्झं सुयणो, किं दुग्गेज्झं खलो लोओ॥५९९॥
एमादिपुच्छवागरणतो तहा भद्दयाणि जायाणि । जइ तीए धम्मविग्घं पायं सुविणेऽवि ण करेंति ॥ ६००॥

इदं च महता प्रबन्धेन व्याख्यातत्वात् सुगमत्वाच्च न व्याख्यायते । एवमादीनि प्राग्गाथाग्रन्थोक्तानि यानि पृच्छाव्याकरणानि, तेभ्यस्तथा भद्रकाणि जातानि, यथा तस्या धर्मविघ्नं प्रायः स्वप्नेऽपि न कुर्वन्तीति ॥ ५९८ ॥ ५९९ ॥ ६००॥

प्रकृति ॥ ५८६ ॥ ३७ ॥ देवतायोजितपिटिका मस्तकेनैव सह संयोजितहतभर्तृनिक्षिपपिटिका गलद्वसारुधिरभृतस्तनपृष्ठा अन्धा सती पलायमाना वनं प्रति, निवर्त्तमाना च पुरं प्रति सज्जाक्षा भवन्ती ॥ ५८७ ॥ ३८ ॥

डिम्भकवृन्दपरिगता खिंस्यमाना जात्योद्धट्टनतो जनेन रुदती करुणस्वरैर्दृष्टा धिग्जातीया सोमाजनकलोकेन । एवं चैवमेव चतुर्थप्रतिषेधो वृत्तः ॥ ५८८ ॥ ३९ ॥ एवमसन्तोषाल्लोभोद्रेकलक्षणाद् विपन्नवहनो विनष्टयानपात्रः समुद्रात् कथंचिदुत्तीर्णो मत्स्याहारस्यायोगोऽसम्यक्प्रयोगस्तस्मादत्यन्तं व्याधिपरिभूतः कुष्ठाभिधानिष्टव्याधिविधुरितः सञ्जातः ॥ ५८९ ॥ ४० ॥ ततस्तेनाकर्णितं यन्निधिः सुतबलिदानं तस्मात्, तत्फलो निधिलाभफलः 'पउत्ते'त्ति प्रयुक्तो विधिः पुत्रबलिदानलक्षणः परम्, अफलो वृत्तः । कुत इति चेत्, यतस्तदन्यगृहीतस्तस्मात् पुत्रबलिदायकादन्येन केनचिद् गृहीतः प्रागेव निधिरिति । विज्ञातश्चासौ नगरराजैर्नगरारक्षकैर्यथाऽयं निधानार्थे दत्तपुत्रबलिः ॥ ५९० ॥ ४१ ॥ तत उत्क्षुभ्यमाणो निन्द्यमानो बहुजनधिक्कारितो धिक्कारमानीतो वसनहीनो वस्त्रविकलो दृष्टः कश्चिद्दरिद्रः । ततो जनकलोकेन प्रतिषेधः पञ्चमेऽपि व्रते परित्यज्यमाने कृतस्तथा यथा प्राच्येष्विति ॥ ५९१ ॥ ४२ ॥ प्राप्तानि ततः सोमाजनकमानुषाणि, एवं पूर्ववत् संविग्नानि प्रतिश्रयसमीपं गणिनीसंनिधानम् । तत्रापि च वैशसमिदं दृष्टमेतैः सोमाजनकमानुषैः सहसेति ॥ ५९२ ॥ ४३ ॥ वैशसमेव दर्शयति–रात्रौ भुञ्जानो भोजनं कुर्वन् । कैरित्याह—मण्डकवृन्ताकैः कश्चिद् नरः पुमान् । किं कृत्वेत्याह—'विच्चुं'ति वृश्चिकं 'छोढूण' क्षिप्त्वा मुखेऽदृष्टकमज्ञातमेव । ततो विद्धकस्ताडितस्तेन वृश्चिकेन ॥ ५९३ ॥ ४४ ॥ व्यन्तरजातिविषाद्—भावप्रधानत्वान्निर्देशस्य व्यन्तरजातिविषत्वाद् वृश्चिकस्य, उच्छूनमुखः सम्पन्न-

अथगुरुदनोऽत एव महाव्यसनप्राप्तश्चैकित्सिकपरिकरितो वैद्यसंघातसमन्वितः प्रयुक्तचित्रौषधनिधानः ॥ ५९४ ॥ ४५ ॥ उद्वेल्लमानः कृताङ्गभङ्गो बहुशः सगद्गदं विरसमारटंश्च । दृष्ट इति सम्बध्यते । ततो हा दुष्टमिदं पापं रात्रिभोजनमिति मन्यमानानां तेषां जातः षष्ठे व्रते परित्यागस्य प्रतिषेधः ॥ ५९५ ॥ ४६ ॥ अत्रान्तरे सोमयाभिहितमेष त्वेष एव मया गृहीतः, प्रायो बाहुल्येन, धर्मः, अन्येषामपि नियमविशेषाणां केषाञ्चिद् ग्रहणादेवमुक्तमिति । ततश्च ते सोमाजनकलोका आहुर्ब्रुवते—पालयेस्त्वं यत्नेन, प्रेक्षामहे, तथाचेति समुच्चये, तां तव गुरुत्वाभिमतां व्रतिनीमिति ॥ ५९६ ॥ ४७ ॥ गमनं प्रतिश्रये चैत्यवन्दनं सन्निहितशय्यातरगृहे चैत्यप्रतिमानाम् । ततः सोमया गणिनीसाधनं यथैष मम गुरुलोक इति । तया गणिन्या 'उचियपडिवत्ती' इति उचितप्रतिपत्त्या पूर्वाभाषणादिकया देशनमकारि । तोषस्तेषां संवृत्तः । धर्मकथा सामान्येन जाता । प्रच्छनं विशेषेण केषाञ्चिदर्थानां तैः कृतम् । कथनं गणिन्या एवंच वक्ष्यमाणनीत्या ॥५९७॥४८॥

को धम्मो जीवदया, किं सोक्खमरोग्गया उ जीवस्स । को णेहो सब्भावो, किं पंडिच्चं परिच्छेओ ॥ ५९८॥
किं विसमं कज्जगती, किं लद्धं जं जणो गुणग्गाही । किं सुहगेज्झं सुयणो, किं दुग्गेज्झं खलो लोओ॥५९९॥
एमादिपुच्छवागरणतो तहा भद्दयाणि जायाणि । जइ तीए धम्मविग्घं पायं सुविणेऽवि ण करेंति ॥ ६००॥

इदं च महता प्रबन्धेन व्याख्यातत्वात् सुगमत्वाच्च न व्याख्यायते । एवमादीनि प्राग्गाथाग्रन्थोक्तानि यानि पृच्छाव्याकरणानि, तेभ्यस्तथा भद्रकाणि जातानि, यथा तस्या धर्मविघ्नं प्रायः स्वप्नेऽपि न कुर्वन्तीति ॥ ५९८ ॥ ५९९ ॥६००॥

इत्थं श्रीमतीसोमोदाहरणमभिधाय प्रस्तुते योजनामाह—

**गुणठाणपरिणामे संते जीवाण सयलकल्लाणा । इय मग्गगामिभावा परिणामसुहावहा होंति ॥६०१॥**

गुणस्थानकपरिणामे उक्तलक्षणे सति जीवानां सकलकल्याणानि, इत्येवं मार्ग्गानुगामिभावात् शुद्धनीतिपथानुसरणलक्षणात्, परिणामसुखावहानि परंपरया सुखानुबन्धप्रधानानि भवन्ति । गुणस्थानकपरिणामवन्तो हि जीवा नियमाद् मार्ग्गमेवानुसरन्ति, उन्मार्ग्गानुसरणकारिणो मिथ्यात्वादेः कर्मक्षयेणैव गुणस्थानकपरिणामसंभवात् । ततः सकलकल्याणलाभः सम्पद्यत इति ॥ ६०१ ॥

अथ महाव्रतान्यधिकृत्याह;—

**गुणठाणगपरिणामे महव्वए तु अहिगिच्च णायाइं । समिईगुत्तिगयाइं एयाइं हवंति णेताइं ॥ ६०२ ॥**

गुणस्थानकपरिणामे उक्तलक्षणे सति महाव्रतानि, तुः पुनरर्थे, अधिकृत्याश्रित्य ज्ञातान्युदाहरणानि समितिगुप्तिगतानि समितिगुप्तिप्रतिबद्धान्येतानि भवन्ति ज्ञेयानि । समितिगुप्तीनां महाव्रतरूपत्वेनेत्थमुपन्यासः कृतः ॥ ६०२ ॥

अथ समितिसंख्यां स्वरूपं चाह;—

**इरियासमियाइयाओ समितीओ पंच होंति नायव्वा। पवियारेगसराओ गुत्तीओऽतो परं वोच्छं॥६०३॥**

ईर्यासमितिर्भाषासमितिरेषणा समितिरादानभाण्डमात्रनिक्षेपणासमितिरुच्चारप्रस्रवणखेलसिंघाणजल्लपरिष्ठापनिकासमि-

तिरितिनामिकाः समितयः पञ्च भवन्ति ज्ञातव्याः । किंलक्षणा इत्याह—प्रवीचारैकसराः प्रवीचाराः कायवचसोश्चेष्टाविशेषाः, तमेवैकं सरन्त्यनुवर्त्तन्ते यास्तास्तथा, समिति संगतवृत्त्या इतिः प्रवृत्तिरित्यर्थयोगात्। गुप्तीरतः परं वक्ष्य इति ६०३

**मणगुत्तिमाइयाओ गुत्तीओ तिन्नि समयकेऊहिं । पवियारेतररूवा निद्दिट्ठाओ जओ भणियं ॥६०४॥**

मनोगुप्तिर्वचनगुप्तिः कायगुप्तिरित्येवंलक्षणा गुप्तयो रागद्वेषादिभिर्दोषैर्विक्षोभ्यमाणस्यात्मनो गोपनानि तिस्रः समयकेतुभिः सिद्धान्तधवलगृहध्वजकल्पैराचार्यैः; कीदृश्य इत्याह—प्रवीचारेतररूपाः प्रवीचार उक्तरूपः, इतरशब्दात् तत्प्रतिषेधरूपोऽप्रवीचारस्तौ रूपं यासां तास्तथा निर्दिष्टा निरूपिता वर्त्तन्ते। यतः कारणाद् भणितं समयकेतुभिरेव ॥६०४॥

भणितमेव दर्शयति;—

**समिओ नियमा गुत्तो गुत्तो समियत्तणम्मि भइयव्वो।कुसलवइमुदीरंतो जं वइ गुत्तोवि समिओवि॥६०५॥**

समितः सम्यग् योगप्रधानतया गमनभाषणादावर्थे इतः प्रवृत्तः सन् मुनिर्नियमाद् अवश्यंभावेन गुप्तः स्वपरयो रक्षाकरो वर्त्तते। गुप्तः समितत्वे भजनीयो विकल्पनीयः । अत्र हेतुमाह—कुशलवाचं कुशलमधुरत्वादिगुणविशेषणां वाचं गिरमुदीरयन्नुद्गिरन् सन् यद्यस्मात् 'वइ'त्ति वाचा गुप्तोऽपि समितोऽपि स्यात् । अनेन च समितो नियमाद् गुप्त इत्येतद् भावितं, गुप्तस्तु मानसध्यानाद्यवस्थासु प्रवीचाररूपकायचेष्टाविरहेऽपि गुप्तः स्यादेव ॥ ६०५ ॥

एताश्च यथा शुद्धाः स्युस्तथा चाह;—

**पुव्विं सरूव पच्छा वाघायविवज्जयाओ एयाओ । कज्जे उवउत्तस्साणंतरजोगे य सुद्धाउ ॥ ६०६ ॥**

पूर्वं गुप्तिसमितिप्रयोगकालात् 'सरूव'त्ति पदैकदेशेऽपि पदसमुदायोपचारात् स्वरूपावगमे सत्यासां पश्चात् प्रयोगकाले व्याघातादिविवर्जिता धर्मकथादिव्यापारान्तरविकला एता गुप्तिसमितयः शुद्धा भवन्तीत्युत्तरेण योगः । कीदृशस्य साधोरित्याह—कार्ये ज्ञानादावुपस्थिते एवोपयुक्तस्य सर्वात्मना, सामीप्येनात्मनोऽनन्तरयोगेऽपि ततोऽपि कार्याद्व्यवहित एव कार्यविशेषे, उपयुक्तस्येति योज्यते, शुद्धा निर्मला भवन्ति । इदमुक्तं भवति—प्रथमत आसां स्वरूपे प्रवीचारादिलक्षणे ज्ञाते, ततः प्रयोगकाले व्यापारान्तरपरिहारेण व्याघातवर्जने सति, सर्वात्मनोपयुक्तस्यानन्तरयोगे च तथारूप एव चिकीर्षिते, एताः शुद्धिं प्रतिपद्यन्ते, हेतुस्वरूपानुबन्धानां विशुद्धिभावात् । अत्र स्वरूपावगमो हेतुः । व्याघातवर्जिता कार्ये प्रवृत्तिः स्वरूपम् । अनन्तरयोगश्चानुबन्ध इति ॥ ६०६ ॥

अथ तासामाहरणानि विभणिषुराह;—

**एयासिं आहरणा निद्दिट्ठा एत्थ पुव्वसूरीहिं । वरदत्तसाहुमादी समासतो ते पवक्खामि ॥ ६०७ ॥**

एतासां समितिगुप्तीनामाहरणानि दृष्टान्ता निर्दिष्टा अत्र जैने मते पूर्वसूरिभिः । कीदृशानीत्याह—वरदत्तसाध्वादीन्यष्टौ समासतस्तानि प्रवक्ष्यामीति ॥ ६०७ ॥

एतान्येवैकोनपञ्चाशद्गाथाभिर्व्याचष्टे;—

वरदत्तसाहु इरियासमितो सक्कस्स कहवि उवओगो। देवसभाए पसंसा मिच्छदिट्ठिस्सऽसद्दहणं॥६०८॥
आगम वियारपंथे मच्छियमंडुक्कियाण पुरउत्ति। पच्छा य गयविउव्वण वोलो सिग्घो अवेहित्ति ॥६०९॥
अक्खोभिरियालोयणगमणमसंभंतगं तहच्चेव । गयगहणुक्खिवणं पाडणं च कायस्स सयराहं॥६१०॥
ण उ भावस्सीसिंपि हु मिच्छा दुक्कड जियाण पीडत्ति। अवि उट्ठाणं एवं आभोगे देवतोसो उ ॥६११॥
संहरण रूवदंसण वरदाणमणिच्छ चत्तसंगोत्ति । गमणालोयणविम्हय जोगंतरसंपवित्ती य ॥ ६१२ ॥
संगयसाहू कारणिय रोहगे भिक्खणिग्गमण पुच्छा॥कत्तो तुब्भे णगराओ को अभिप्पाओ णवि जाणे६१३
तत्थ वसंताणं कहं अव्वावारा उ किमिह जंपंति । एत्थवि अव्वावारो किं साहणमाणमेत्थंपि ॥६१४॥
सुम्मइ दीसइ किंची सव्वं साहिज्जए न सावज्जं। किं वसहेत्थ गिलाणो किमिहाडह अपडिबंधाओ॥६१५॥
चारग तुब्भे समणा को जाणइ अप्पसक्खिओ धम्मो। ण हु एत्थं छुट्टिज्जइ जं जाणह तं करेज्जाहि॥६१६॥
कह सत्ति मिय णु सत्तिमयसासण को णु एस सव्वण्णू।एमाइ अणुचियं सइ भासासमिओ ण भासेइ६१७
वसुदेव पुव्वजम्मे आहरणं एसणाए समिईए। मगहा णंदिग्गामे गोयम धिज्जाई चक्कयरो ॥६१८॥

तस्स य धारिणि भज्जा गब्भत्ताए कुओ उ आहूओ। धिज्जाई मओ छम्मासगब्भ धिज्जाइणी जाए ॥६१९॥
माउलके संवड्ढण कम्मकरण वियारणा य लोएणं। णत्थि तुह एत्थ किंची तो बेई माउलो तमिह ॥६२०॥
मा सुण लोगस्स तुमं धूयाओ तिण्णि तासिं जेट्ठयरं। देहामि करे कम्मं पकओ पत्तो य वीवाहो॥६२१॥
सा णिच्छए विसण्णो माउलओ बेइ बीय दाहामि। सावि य तहेव णिच्छइ तइयत्ती णेच्छइ सावि॥६२२॥
णिव्विण्ण णंदिवद्धणआयरियाणं सगासि णिक्खंतो। जाओ छट्ठक्खमओ गेण्हइ यमभिग्गहमिमं तु६२३
बालगिलाणाईणं वेयावच्चं मए उ कायव्वं। तं कुणइ तिव्वसड्ढो खायजसो सक्कगुणकित्ती ॥ ६२४ ॥
अस्सद्दहणा देवस्स आगमो कुणइ दो समणरूवे। एगो गिलाणो अडवीए चिट्ठई अइगओ बिइओ ६२५
बेइ गिलाणो पडिओ वेयावच्चं तु सद्दहे जो उ। सो उट्ठेज्ज खिप्पं सुयं च तं णंदिसेणेण ॥ ६२६ ॥
छट्ठोववासपारणमाणीयं कवल घेत्तुकामेणं। तं सुयमेत्तं रहसुट्ठिओ य भण केण कज्जंति ॥ ६२७ ॥
पाणगदव्वंति तहिं जं णत्थी बेइ तेण कज्जंति। णिग्गय हिंडंते कुणयणेसणं णवि य पेल्लेइ ॥ ६२८ ॥
इय एक्कवार बीयं च हिंडिओ लद्ध तइयवारम्मि। अणुकंपा तूरंतो गओ य सो तस्सगासं तु ॥६२९॥

खरफरुसणिट्ठुरेहिं अक्कोसइ से गिलाणओ रुट्ठो। हे मंदभग्ग! फुक्किय! तूससि तं णाममेत्तेण ॥६३०॥
साहुवगारित्ति अहं णामड्ढो तह समुद्दिसिउमाओ। एयाए अवत्थाए तं अच्छसि भत्तलोहिल्लो ॥६३१॥
अमयमिव मण्णमाणो तं फरुसगिरं तु सो ससंभंतो। चरणगओ खामेई धुवइ य तं समललित्तं॥६३२॥
उट्ठेह वयंमोत्ती तह काहामी जहा हु अचिरेण। होहिह णिरुया तुब्भे बेई ण तरामि गंतुं जे ॥६३३॥
आरुह मे पिट्ठीए आरूढो तो तहिं पहारं च। परमासुइदुग्गंधं मुयई पट्ठीए केसयरं ॥ ६३४ ॥२७॥
बेइ गिरं धिय मुंडिय! वेगविहाओ कउत्ति दुक्खविओ। इय बहुविहमक्कोसइ पए पए सोवि भगवं तु ६३५
ण गणइ तं फरुसगिरं ण य तं गरहइ दुरहिगंधं तु। चंदणमिव मण्णंतो मिच्छा मि दुक्कडं भणइ ॥ ६३६ ॥
चिंतेइ किं करेमी कह णु समाही भवेज्ज साहुस्स। इय बहुविहप्पगारं णवि तिण्णो जाव खोभेउं ॥ ६३७॥
ताहे अभित्थुणित्ता गओ तओ आगओ य इयरो उ। आलोइए गुरूहिं धण्णोत्ति तहा समणुसिट्ठो॥६३८॥
जह तेणमेसणा णो भिण्णा इय एसणाए जइयव्वं। सव्वेण सया अद्दीणभावओ सुत्तजोएण ॥ ६३९॥
धिज्जाइसोमिलज्जो आदाणाइसमिईए उवउत्तो। गुरुगमणत्थं उग्गाहणा उ गमणे णियत्तणया ॥६४०॥

तह सुयण सम्म चोयण किमेत्थ सप्पो त्ति एव पडिभणिओ।संविग्गो हाऽजुत्तं भणियंति सुराएऽणुग्गहिओ
तह सप्पदंसणेणं सुट्ठयरं तिव्वसद्धसंपण्णो । दंडगगहणिक्खेवे अभिग्गही सव्वगच्छम्मि ॥६४२॥३५॥
अण्णोण्णागम णिच्चं अब्भुट्ठाणाइजोगपरितुट्ठो । जत्तेणं हेट्ठवरिं पमज्जणाए समुज्जुत्तो ॥ ६४३॥३६॥
जावज्जीवं एवं गेलण्णम्मिवि अपरिवडियभावो । आराहगो इमीए तिगरणसुद्धेण भावेण ॥ ६४४ ॥
धम्मरूई णामेणं खुड्डो चरिमसमिईए संपण्णो। कहवि ण पेहियथंडिल ण काइयं वोसिरे राई ॥६४५॥
जाया य देहपीडा अणुकंपा देवयाए उप्पण्णा। तीए अकालपहायं तहा कहं जह समुज्जोओ॥६४६॥
वोसिरणा अंधारं हंत किमेयंति देवउवओगो। जाणण मिच्छाउक्कड अहो पमत्तोम्हि संवेगो ॥६४७॥
अण्णोवि य धम्मरूई खमगो पारणग कडुयतुंबम्मि। गुरुवारण नायालोयणाए भणिओ परिट्ठवसु ६४८
आवागथंडिल पिपीलियाण मरणमुवलब्भ तद्देसा।करुणाए सिद्धवियडण भोत्तूणमओ महासत्तो॥६४९॥
मणगुत्तीए कोई साहू झाणम्मि णिच्चलमईओ । सक्कपसंसा असद्दहाण देवागमो तत्थ ॥ ६५०॥४३॥
दिट्ठो उस्सग्गट्ठिओ विउव्वियं जणणिजणगरूवं तु। करुणं च संपलत्तो अणेगहा तत्थ सो तेसिं ॥ ६५१ ॥

पच्छा भज्जारूवं अण्णपसत्तं समत्तसिंगारं । भूओ य अहिलसंतं ऊसुगमच्चंतणेहजुयं ॥ ६५२ ॥ ४५ ॥
तहवि ण मणगुत्तीए चलणं णियरूवदेववंदणया । थुणण लोगपसंसा एवंपि ण चित्तभेओ उ॥६५३॥४६॥
वयगुत्तीए साहू सण्णायगठाण गच्छए दट्ठुं । चोरग्गह सेणावई विमोइउं भणइ मा साह॥६५४॥४७॥
चलिया य जण्णयत्ता सण्णायगमिलणमंत्तरा चेव । मायपियभायमाई सो वि णियत्तो समं तेहिं ॥६५५॥
तेणेहिं गहियमुसिया मुक्का ते विंति सो इमो साहू ।अम्हेहिं गहिय मुक्को तो वेई अम्मगा तस्स॥६५६॥४९
तुब्भेहिं गहियमुक्को, आमं आणेह वेइ तो छुरियं । जा छिंदेमि थणं णणु किं ते सेणावई भणइ॥६५७॥५०
दुज्जम्मजायमेसो दिट्ठा तुब्भे वहा वि नवि सिट्ठं।कह पुत्तो त्ति अह ममं किह णवि सिट्ठंति धम्मकहा६५८
आउट्टो उवसंतो मुक्को मज्झंपि तं सि माइत्ति । सव्वं समप्पियं से वइगुत्ती एव कायव्वा ॥ ६५९ ॥५२॥
काइयगुत्ताहरणं अद्धाणपवण्णगो महासाहू।आवासियम्मि सत्थेण लहइ तहिं थंडिलं किंचि॥६६०॥
लद्धं च णेण कहवी एगो पाओ जहिं पइट्ठाइ । तहिं ठिएगपाओ सव्वं राइं तहिं थद्धो ॥६६१॥५४॥
ण य अत्थंडिलभोगो तेण कओ तत्थ धीरपुरिसेणं। सक्कपसंसा देवागमो य तह भेसणमखोहो॥६६२॥५५

प्रभोः—किमस्माभिः सह संघटिष्यते नवेति? मुनिः प्राह—नापि च जाने नैवाहं जानामि कोऽपि कस्मिन्नभिप्राये वर्त्तत इति ॥ ६१३ ॥ ६ ॥ सैन्यं—तत्र नगरे वसतां भवतां कथमभिप्रायपरिज्ञानं न संजातमिति? मुनिः—अव्यापारास्तु लोकव्यापाररहिता एव साधवो वर्त्तन्त इति । सैन्यं—यद्यभिप्रायो न ज्ञायते तर्हि किमिह पुरमध्ये जना जल्पन्ति सन्धिविग्रहयोर्विषये? मुनिः—अत्रापि जल्पविषयेऽव्यापारोऽहम् । सैन्यं—किं साधनमानं हस्त्यश्वादिसंग्रामाङ्गपरिमाणम्? मुनिः—अत्रापि च साधनमानपरिज्ञानेऽव्यापारोऽहमिति ॥ ६१४ ॥ ७ ॥ मुनिरेवाह—श्रूयते कर्णाभ्यां, दृश्यते लोचनाभ्यां किञ्चिच्छब्दरूपलक्षणं वस्तु, शब्दरूपयोर्ग्रहणस्वभावत्वात् तेषां, परं सर्वं साध्यते कथ्यते न सावद्यं सपापम्, किन्तु कार्ये समुत्पन्ने निरवद्यमेव; सावद्यं सर्वं यद्भवद्भिः पृच्छ्यत इति । अत एव पठन्ति—"बहुं सुणेइ कण्णेहिं बहुं अच्छीहिं पेच्छए । न य दिट्ठं सुयं वावि भिक्खू अक्खाउमरिहइ ॥ १ ॥" सैन्यं—यद्येवं निर्व्यापारा यूयं, किं तर्हि वसथात्र? मुनिः—ग्लानः साधुरस्मदीयः समस्ति । सैन्यं—किमिह सैन्येऽस्मदीयेऽटथ ? अप्रतिबन्धात् क्वचिदप्येकत्र ग्रामकुलनगरादावसंगमात् ॥ ६१५ ॥ ८ ॥ सैन्यं—चारिका हेरिका यूयम् । मुनिः—नैव चारिकाः किन्तु श्रमणा वयम् । सैन्यं—को जानाति कीदृशा यूयम्? मुनिः—आत्मसाक्षिकः, आत्मा साक्षी यत्रेति समासः स धर्मः, नात्र वस्तुन्यन्यस्य कस्यापि साक्षित्वमस्तीत्येवमुपन्यासः । सैन्यं—न हु नैवेत्थमुत्तरप्रदानेन छुब्भते मुच्यतेऽस्मत्सकाशात् । मुनिः—तर्हि यज्जानीथ तत् कुरुध्वम् । इति प्राग्वत् ॥ ६१६ ॥ ९ ॥ सैन्यं—'कह सत्ति मिय णु'त्ति कथं शक्तिः सामर्थ्यरूपा, मकारोऽलाक्षणिकः । इयं तव, नुर्वितर्के, ततो वितर्क्यतेऽस्माभिः कथञ्चित्तव शक्तिरुत्पन्ना यथा यदस्माभिः करिष्ये

तत् सहिष्यत इति? मुनिः—शक्तिमच्छासनात् सकलत्रैलोक्यसमर्गलसामर्थ्यस्य पुरुषविशेषस्य शिक्षणात् । सैन्यं—को नु को नामैष शक्तिमान् पुरुषविशेषः? मुनिः—सर्वज्ञः सर्वमतीतानागतादिभेदभिन्नं वस्तु जानाति हस्ततलन्यस्तनिस्तलस्थूलमुक्ताफलमिवानवरतमाकलयते यः सकलसुरासुरनरवृन्दवन्द्यपादारविन्दो भगवानर्हन्निति । ततः ससन्तोषं सैन्यलोकेन विसृष्टो मुनिः स्वस्थानं ययौ । एवमादि नगराभिप्रायप्रकटनाद्यनुचितं साधुजनायोग्यं सदा सर्वकालं भाषासमितः सन् न भाषते, किन्तु यथा तेन संगतसाधुना भाषितं तथा भाषेतेति ॥ ६१७ ॥ १० ॥ अथैषणासमितावुदाहरणमाह;—वसुदेवः—सहजनिजसौभाग्यवशभग्नसुभगंमन्यमनुजाभिमानो, दशमदशार्हः, अन्धकवृष्णिनाममहाराजाङ्गजः, तत्कालहरिवंशप्रसूतिपितामहीभूतः, वासुदेवपिता, पूर्वजन्मन्याहरणमेषणायामेषणानामिकायां समितौ । तदेव दर्शयति;—'मगह'त्ति मगधविषये नन्दिग्रामे गौतमो नाम धिग्जातिर्ब्राह्मणः, चक्रचरः कुलालचक्रवद् यो भिक्षार्थी सन् ग्रामादौ चरति स चक्रचरो भिक्षाचर इत्यर्थः, समभूत् ॥ ६१८ ॥ ११ ॥ तस्य च गौतमचक्रचरस्य धारणी नाम भार्या आसीत् । एवं कुटुंबधर्मे प्रवर्त्तमाने कियति कालेऽतिक्रान्ते सति गर्भस्तस्या धारण्याः कुतोऽपि गत्यन्तरादभूत् समुद्भूतः । स च स्वभावादनुपचितसमीहितसिद्धिहेतुपुण्यस्कन्धो वर्त्तते । अत एव धिग्जातिर्गौतमनामा मृतः परासुतामापन्नः । इत्याह—'छम्मासे गब्भ'त्ति षण्मासगर्भे षड् मासा यस्य स तथा तस्मिन् गर्भे सति—तस्य गर्भेऽवतीर्णस्य षष्ठे मासे पिता मृत इत्यर्थः । 'धिज्जाइणि'त्ति जननी जाते उदरान्निर्गते तत्र गर्भे मृतेति ॥ ६१९ ॥ १२ ॥ ततो मातुलेन प्रतीतरूपेण संवर्द्धनं वृद्धिमानीतोऽसौ प्रतिष्ठितनन्दिषेणनामा । तत्रैव मातुलगृहे 'कम्मकरण'त्ति कृषिपाशुपाल्यादिकर्म कर्त्तु-

सीतग्गहसंपाडणमचलमंगाण दुक्कडं सम्मं । सुरवंदणा पसंसण अईव लोगेणमुक्करिसो ॥६६३॥५६॥



तत्र वरदत्त साधुः क्वचित् सन्निवेशे वरदत्तनामा मुनिरीर्यासमितस्तथास्वाभाव्यादीर्यासमितावत्यन्तमुपयुक्तः सर्वदा समभूत् । तत्र मुनिवृषभे नित्यं समाहितात्मनि सुगृहीतनामधेये शक्रस्य सौधर्मदेवलोकाधिपतेः स्वभावत एव निष्पन्न-गुणेषु गुणिषु प्रवृत्तदृढानुरागस्य कथमपि विपुलेनावधिना मनुष्यक्षेत्रमवलोकमानस्योपयोगो वरदत्तसाधुगोचरं ज्ञानं समभवत् । दृष्ट्वा च तस्येर्यासमितावत्यन्तनिश्चलत्वं, देवसभायां सुधर्मानामिकायां तेन प्रशंसा प्रवर्त्तिता, यथा—अहो! एष वरदत्तसाधुः सदेवमनुजासुरेणापि जगता नेर्यासमितेः क्षोभयितुं शक्यते । तत्र च मिथ्यादृष्टेरेकस्य देवस्याश्रद्धानं शक्रप्रशंसितगुणेषु समजनि, यथा सुष्ठूक्तं केनापि—"जा इच्छा सा कीरइ बोल्लिज्जइ जं मणस्स पडिहाइ । इयरे जणे न संका पहुत्तणं तेण रमणीयं" ॥ ६०८ ॥ १ ॥ तत आगम इहावतरणलक्षणस्तस्य बभूव । ततो विचारपथे बहिर्भूमिलक्षणे मक्षिकामण्डुकिकानां पुरतोऽग्रतो मार्गे निरन्तरं विकुर्वणं कृतम् । इति प्राग्वत् । पश्चाच्च पश्चिमभागे पुनर्गजविकुर्वणा —गजस्य गिरिशिखरानुकारिणः पवनजवनवेगस्य दूरं समुत्सारितकरस्य विकुर्वणा विरचना कृता । ततो बोलः कलकलो हस्तिपालकेन कृतः, यथा—शीघ्रमपैहि मार्गादपसर, अन्यथा ते न जीवितव्यमस्ति ॥ ६०९ ॥ २ ॥ ततोऽक्षोभस्य त्यक्तसकलत्रासस्येर्यालोकनेन गम्यमानमार्गावलोकनरूपेण गमनमसंभ्रांतकमविह्वलं तथा चैव यथा गजविकुर्वणात् प्राक् । ततो गजग्रहे क्षेपणं गजेन कराग्रेण गृहीत्वा गगनतले दूरमुत्क्षेपणं, पातनं च भूमितले कायस्य 'सयराहं'ति समकमेवोत्क्षेपणपातनयोरत्यन्ताव्यवधानेन भावात् समकमित्युक्तम् ॥ ६१० ॥ ३ ॥ व्यवच्छेद्यमाह—न तु नैव भावस्येर्यासमिति-

परिणतिरूपम्येणदपि हु पातनमजायत । कुतः । यतो मिथ्यादुष्कृतं मे समस्तु इत्युक्तं तेन, जीवानां मक्षिकामण्डुकिका-लक्षणानां पीडा बाधा वर्त्तत इति कृत्वा; अपि च, उत्थानं संवृत्तगात्रेणैवमीर्यासमितिप्रधानतया तेन कृतम् । तत आभोगे तद्भावोपलम्भे कृते देवतोष एव जातः, न पुनरुदासीनतादिभावान्तर भाव इति ॥ ६११ ॥ ४ ॥ तदनन्तरं संहरणं मक्षिकामण्डुकिकानां गजस्य च देवेन विहितम् । रूपदर्शनं चलत्कुण्डलस्योरःस्थलविसारिस्फारहारस्य बहलकिरणजालविलुप्ततमःपटलविकटमुकुटस्य निजरूपस्य दर्शनमकारि । ततो वरदानं वरं वृण्विल्येवंलक्षणमुपस्थापितम् । अनिच्छा निःस्पृहता वरदत्तसाधुना त्यक्तसंग इति कृत्वा । ततो देवो भक्तिभरस्तच्चरणकमलमभिवन्द्य सम्पन्नसन्तोषः स्वस्थानं जगाम । वरदत्तसाधुनापि ततो गमनं पूर्वप्रवृत्तविचारपथे एवालोकनं च जीवानां कृतम् । अविस्मयश्च 'साक्षाद्देव देवो मया दृष्टः' एवंरूपस्य विस्मयस्याकरणम् । योगान्तरसंप्रवृत्तिश्च विचारगमनापेक्षया यद्योगान्तरं स्वाध्यायध्यानादिलक्षणं तत्र सम्यक् प्रवर्त्तनं च जातमिति ॥ ६१२ ॥ ५ ॥ अथ द्वितीयसमित्युदाहरणमाह;—किल क्वचिन्नगरे संगतनामा साधुर्निखिलसाधुसामाचारीकरणपरायणः । तथा—"जा य सच्चा अवोत्तवा सच्चामोसा य जा मुसा । जा य बुद्धेहिं णाइण्णा ण तं भासेज्ज पण्णवं" ॥ १ ॥ एवंरूपायां वाक्यशुद्धौ स्वभावत एवोपयुक्तः समवतिष्ठत । स चान्यदा कारणिको ग्लानप्रतिजागरणकारणवान् रोधके परैः सर्वतो नगरनिरोधलक्षणे कृते 'भिक्खनिग्गमण'त्ति नगर एव मध्ये पुष्कलायां भिक्षायां लभ्यमानायामपि प्रतिबन्धपरिहारार्थं बहिः शत्रुराजसैन्ये भिक्षार्थं निर्गमनं कृतवान् । ततः पृच्छा सैन्यलोकेन कृता—कुतो भवन्त इहागताः? मुनिः प्राह—नगरात् । सैन्यलोकः प्राह—कोऽभिप्राय एतन्नगर

प्रभोः—किमस्माभिः सह संघटिष्यते नवेति? मुनिः प्राह—नापि च जाने नैवाहं जानामि कोऽपि कस्मिन्नभिप्राये वर्त्तत इति ॥ ६१३ ॥ ६ ॥ सैन्यं—तत्र नगरे वसतां भवतां कथमभिप्रायपरिज्ञानं न संजातमिति? मुनिः—अव्यापारास्तु लोकव्यापाररहिता एव साधवो वर्त्तन्त इति । सैन्यं—यद्यभिप्रायो न ज्ञायते तर्हि किमिह पुरमध्ये जना जल्पन्ति सन्धिविग्रहयोर्विषये? मुनिः—अत्रापि जल्पविषयेऽव्यापारोऽहम् । सैन्यं—किं साधनमानं हस्त्यश्वादिसंग्रामाङ्गपरिमाणम्? मुनिः—अत्रापि च साधनमानपरिज्ञानेऽव्यापारोऽहमिति ॥ ६१४ ॥ ७ ॥ मुनिरेवाह—श्रूयते कर्णाभ्यां, दृश्यते लोचनाभ्यां किञ्चिच्छब्दरूपलक्षणं वस्तु, शब्दरूपयोर्ग्रहणस्वभावत्वात् तेषां, परं सर्वं साध्यते कथ्यते न सावद्यं सपापम्, किन्तु कार्ये समुत्पन्ने निरवद्यमेव; सावद्यं सर्वं यद्भवद्भिः पृच्छयत इति । अत एव पठन्ति—"बहुं सुणेइ कण्णेहिं बहुं अच्छीहिं पेच्छए । न य दिट्ठं सुयं वावि भिक्खू अक्खाउमरिहइ ॥ १ ॥" सैन्यं—यद्येवं निर्व्यापारा यूयं, किं तर्हि वसथात्र? मुनिः—ग्लानः साधुरस्मदीयः समस्ति । सैन्यं—किमिह सैन्येऽस्मदीयेऽटथ ? अप्रतिबन्धात् क्वचिदप्येकत्र स्थलनगरादावसंगमात् ॥ ६१५ ॥ ८ ॥ सैन्यं—चारिका हेरिका यूयम् । मुनिः—नैव चारिकाः किन्तु श्रमणा वयम् । सैन्यं—को जानाति कीदृशा यूयम्? मुनिः—आत्मसाक्षिकः, आत्मा साक्षी यत्रेति समासः स धर्मः, नात्र वस्तुन्यन्यस्य कस्यापि साक्षित्वमस्तीत्येवमुपन्यासः । सैन्यं—न हु नैवेत्थमुत्तरप्रदानेन छुट्यते मुच्यतेऽस्मत्सकाशात् । मुनिः—तर्हि यज्जानीथ तत् कुरुध्वम् । इति प्राग्वत् ॥ ६१६ ॥ ९ ॥ सैन्यं—'कह सत्ति मिय णु'त्ति कथं शक्तिः सामर्थ्यरूपा, मकारोऽलाक्षणिकः । इयं तव, नुर्वितर्के, ततो वितर्क्यतेऽस्माभिः कथञ्चित्तव शक्तिरुत्पन्ना यथा यदस्माभिः करिष्ये

तन् महिम्नत इति? मुनिः—शक्तिमच्छासनात् सकलत्रैलोक्यसमर्गलसामर्थ्यस्य पुरुषविशेषस्य शिक्षणात् । सैन्यं—को नु को नामैष शक्तिमान् पुरुषविशेषः? मुनिः—सर्वज्ञः सर्वमतीतानागतादिभेदभिन्नं वस्तु जानाति हस्ततलन्यस्तनिस्तलस्थूलमुक्ताफलमिवानवरतमाकलयते यः सकलसुरासुरनरवृन्दवन्द्यपादारविन्दो भगवानर्हन्निति । ततः ससन्तोषं सैन्यलोकेन विसृष्टो मुनिः स्वस्थानं ययौ । एवमादि नगराभिप्रायप्रकटनाद्यनुचितं साधुजनायोग्यं सदा सर्वकालं भाषासमितः सन् न भाषते, किन्तु यथा तेन संगतसाधुना भाषितं तथा भाषेतेति ॥ ६१७ ॥ १० ॥ अथैषणासमितावुदाहरणमाह;—वसुदेवः—सहजनिजसौभाग्यवशभग्नसुभगंमन्यमनुजाभिमानो, दशमदशार्हः, अन्धकवृष्णिनाममहाराजाङ्गजः, तत्कालहरिवंशप्रसूतिपितामहीभूतः, वासुदेवपिता, पूर्वजन्मन्याहरणमेषणायामेषणानामिकायां समितौ । तदेव दर्शयति;—'मगह'त्ति मगधविषये नन्दिग्रामे गौतमो नाम धिग्जातिर्ब्राह्मणः, चक्रचरः कुलालचक्रवद् यो भिक्षार्थी सन् ग्रामादौ चरति स चक्रचरो भिक्षाचर इत्यर्थः, समभूत् ॥ ६१८ ॥ ११ ॥ तस्य च गौतमचक्रचरस्य धारणी नाम भार्या आसीत् । एवं कुटुंबधर्मे प्रवर्त्तमाने कियति कालेऽतिक्रान्ते सति गर्भस्तस्या धारण्याः कुतोऽपि गत्यन्तरादभूत् समुद्भूतः । स च स्वभावादनुपचितसमीहितसिद्धिहेतुपुण्यस्कन्धो वर्त्तते । अत एव धिग्जातिर्गौतमनामा मृतः परासुतामापन्नः । इत्याह—'छम्मासे गब्भ'त्ति षण्मासगर्भे षड् मासा यस्य स तथा तस्मिन् गर्भे सति—तस्य गर्भेऽवतीर्णस्य षष्ठे मासे पिता मृत इत्यर्थः । 'धिज्जाइणि'त्ति जननी जाते उदरान्निर्गते तत्र गर्भे मृतेति ॥ ६१९ ॥ १२ ॥ ततो मातुलेन प्रतीतरूपेण संवर्द्धनं वृद्धिमानीतोऽसौ प्रतिष्ठितनन्दिषेणनामा । तत्रैव मातुलगृहे 'कम्मकरण'त्ति कृषिपाशुपाल्यादिकर्म कर्त्तु-

मारब्धः । निश्चिंतस्तस्य संवृत्तो मातुलः । एवं व्रजति काले वितारणा च विप्रतारणा पुनर्लोकेन परव्यसनसुस्थितेन कर्त्तु-
मारब्धा तस्य । कथमित्याह—नास्ति न विद्यते तवात्र गृहे दूरं वृद्धिं गतेऽपि किञ्चिदाभाव्यम् । गृहकर्मसु मन्दादरे
जाते ब्रवीति प्रतिपादयति मातुलो लब्धवृत्तान्तस्तमिह ग्रामे स्वभावत एव परगृहतप्तिकारके उच्छृंखलमुखे ॥ ६२० ॥
॥ १३ मा शृणु लोकस्य वचनानि त्वं, परगृहभञ्जनप्रियत्वाल्लोकस्य । यतो दुहितरस्तिस्रः सन्ति मम गृहे । तासां या
ज्येष्ठतरा सर्वज्येष्ठा तां प्राप्तयौवनां तव दास्यामि । एवं मातुलेनोक्तः 'करे'त्ति कर्त्तुं कर्म प्रकृतः प्रवृत्तवान् । कालेन
प्राप्तश्च वीवाह इति ॥ ६२१ ॥ १४ ॥ सा ज्येष्ठा दुहिता तत्र विवाहे पित्रा समुपस्थापिते तं नन्दिषेणं तुच्छौष्ठच्छदमुख-
तया समुद्घाटदशनं चिपिटनाशिकमतिगभीरनेत्ररन्ध्रममनोहरस्वरमतिलम्बोदरसंक्षिप्तवक्षःप्रदेशं विकटपादपातमलिगव-
लव्यालकालकायं साक्षादपुण्यराशिमिव निभाल्य नेच्छति परिणेतुम्; भणितवती च यदि मामनेन परिणाययिष्यथ तदा
नूनं मया मर्त्तव्यमिति । ततोऽसौ विखिन्नो मन्दादरश्च गृहकर्मसु संवृत्तः । मातुलो ब्रवीति—यदि नामानया दुहित्रा
नाभिलषितस्त्वं तथापि द्वितीयां दुहितरं दास्यामि । सापि च दुहिता तथैव प्रथमदुहितृवत् तं नेच्छति । 'तइयत्ती'
इति, अतस्तृतीया प्रतिपन्ना, इत्येवं प्रथमदुहितृद्वयवत् सापि नेच्छति तृतीया ॥ ६२२ ॥ १५ ॥ ततो निर्विण्णोऽसौ
गृहवासाद् नन्दिवर्द्धनाचार्याणां सकाशे निष्क्रान्तः प्रतिपन्नव्रतः सम्पन्नः । ततोऽसौ पूर्वभवविहितानां दुष्कृतानामुदग्रं
तपो विना नान्यो विनाशहेतुः समस्तीति मन्यमानो जातः षष्ठक्षमकः । षष्ठं नाम षष्ठभक्तं तपः । तच्च किल भक्तपञ्च-
कपरिहारेण षष्ठं भक्तमुपादेयतया यत्र तपसीत्यन्वर्थप्रधानतया उपवासद्वयं, तत् क्षमते सहते यः स तथा । तथा, स्वसा-

मर्थ्यालोचनेन गृह्णाति चाभिग्रहमिमं तु वक्ष्यमाणं पुनः ॥ ६२३ ॥ १६ ॥ तमेव दर्शयति;—बालग्लानादीनां शिशुसरो-गगृद्धप्राघूर्णकाचार्योपाध्यायतपस्विशैक्षादिभेदभाजां साधूनां वैयावृत्त्यमन्नपानदानाद्युपष्टम्भलक्षणं मया तु मयैव केवलेन कर्त्तव्यं, न पुनरन्यः कश्चिदिच्छाकारविषयः कर्त्तव्यः केनापीति । एवं गृहीताभिग्रहो निधिलाभादपि समधिकं सन्तोषमुद्वहं ममभिग्रहं करोति तीव्रश्रद्धः समुद्घटिताततितीव्राभिलाषः । जातश्चतुर्वर्णश्रीश्रमणसंघमध्ये ख्यातयशाः समुत्पन्नश्लोकः तदा तस्य शक्रगुणोत्कीर्त्तिः—शक्रेण सौधर्मप्रभुणा गुणानां वैयावृत्त्यादीनां कीर्त्तनमकारीति ॥ ६२४ ॥ १७ ॥ ततोऽ-श्रद्दधानस्य शक्रकृतगुणोत्कीर्त्तनं कस्यचिद्देवस्येहागमोऽवतरणलक्षणो जज्ञे । स च करोति द्वे श्रमणरूपे । तयोरेको ग्लानः सन् अटव्यां तिष्ठतीति विकुर्व्यातिगतो यत्रासौ नन्दिषेणः साधुस्तत्राश्रये प्रविष्टो द्वितीयः साधुः ॥ ६२५ ॥१८॥ ब्रवीति स उपाश्रयागतः—ग्लानः पतितोऽटव्यामेकः साधुः समस्ति । वैयावृत्त्यं तूक्तलक्षणं श्रद्धत्ते रुचिविषयीकरोति यस्तु कश्चित्, तुशब्दौ पादपूरणार्थौ, स उत्तिष्ठतु उद्यमं करोतु क्षिप्रमिदानीमेव । श्रुतं च तद्वचनं नन्दिषेणेन मुनिना ॥ ६२६ ॥ १९ ॥ कीदृशेनेत्याह—षष्ठोपवास उक्तलक्षणः, पार्यते तीरं नयते येन स तथा तमानीतं स्वयमेव सर्वसम्प-त्करीभिक्षाविशेषलब्धं कवलं ग्रासरूपं, विभक्तिलोपः प्राकृतत्वात्, प्रथमत एव ग्रहीतुकामेन । तद्देववचो यदा श्रुतमात्रं श्रुतिपथावतारि सम्पन्नम्, तदा रभसोत्थितश्च रभसादुत्थित एव सन् ब्रवीति भण त्वं केन वस्तुना कार्यं प्रयोजनमिति ॥ ६२७ ॥ २० ॥ पानकद्रव्यम्, इति प्राग्वत्, तत्र सन्निवेशे यन्नास्ति द्राक्षापानकादि, ब्रवीति तेन कार्यम् । इतिः पूर्ववत् । ततो निर्गत उपाश्रयाद् नन्दिषेणः पानकगवेषणार्थम् । तत्र च हिण्डमाने तृष्णाबुभुक्षाक्षामकुक्षौ करोत्यनेषणां

पानकाशुद्धिलक्षणां स देवः । नापि च नैव प्रेरयति स साधुस्तम् ॥ ६२८ ॥ २१ ॥ इत्येवमेकवारां द्वितीयां च वारामुपदिष्टपानकार्थं हिण्डितस्तत्र सन्निवेशे । न च लब्धं तत् । 'लद्ध'त्ति लब्धं च तृतीयवारे । वारशब्दस्येह पुल्लिंगत्वादेवं निर्देशः । ततो 'अणुकंप'त्ति अनुकम्पया दयया त्वरमाणो गतश्च स नन्दिषेणसाधुस्तत्सकाशं तस्यैव समीपं पुनरिति ॥ ६२९ ॥ २२ ॥ गतं सन्तं तं खरपरुषनिष्ठुरैर्वाक्यैराक्रोशति शपते स ग्लानको ग्लान एवानुकम्पनीयतां गतो रुष्टो दर्शितभ्रकुटीभङ्गादिकोपविकारः । कथमित्याह—हे मन्दभाग्य तुच्छीभूतपुण्यस्कन्ध ! फूत्कृत अत्यन्तासारतया तुषादिवत्फूत्कारयोग्य ! तुष्यसि सन्तुष्टो भवसि त्वं नाममात्रेण नाम्नैव केवलेन वैयावृत्त्यकरोऽहमित्येवंरूपेण ॥ ६३० ॥ २३ ॥ 'साहुवगारित्ति अहं नामड्ढो' इति साधूपकार्यहमित्येवंरूपनाम्नाऽऽढ्यः, तथा समुद्दिश्य भोजनं कृत्वा आगत इति, एतस्यां भवतैवावलोक्यमानायामवस्थायां त्वमास्ते भक्तलोभवान् सन्निति ॥ ६३१ ॥ २४ ॥ अमृतमिव पीयूषमिव मन्यमानस्तां परुषां गिरं तु परुषामपि गिरं "जो सहइ उ गामकंटए अक्कोसवहारतज्जणाउ य । भयभेरवसद्दसप्पहासे समसुहदुक्खसहे य जे सभिक्खू" इत्यादिसूत्रवासितान्तःकरणत्वात् स नन्दिषेणः ससंभ्रातः ससंभ्रमः सन् चलनगतः क्षमयति, यथा—क्षमस्व ममैकमपराधं न पुनरेवं करिष्ये, धावति च तं साधुं स्वमललिप्तं स्वकीयविष्ठामूत्रलक्षणमलोपदिग्धमिति ॥ ६३२ ॥ २५ ॥ बभाण चोत्तिष्ठत यूयमितः स्थानाद् व्रजाम इति । तथा करिष्यामि वसतिकामध्यप्राप्तं सन्तं भवन्तं 'जहा हु'त्ति यथा चिरेण शीघ्रमेव 'होहिह'त्ति भविष्यथ नीरोगा यूयम् । ततो ब्रवीति—ग्लानो न तरामि गन्तुमितः स्थानात् क्वचिदपि । 'जे' इति वाक्यालंकारार्थः ॥ ६३३ ॥ २६ ॥ नन्दिषेणः प्राह—आरोह समारूढो भव पृष्ठौ

मदीयायाम् । आरूढस्ततः सः । प्रहारं च मूत्रपुरीषलक्षणं पुनः परमाशुचिमत्यन्तमशुचिरूपम्, अत एव दुर्गन्धं मृतकुथितशृगालमार्जारादिकडेवरादपि विरुद्धगन्धं मुञ्चति पृष्टिक्लेशकरमत्यन्तासाधारणस्पर्शत्वेन पृष्ठप्रदेशापकारि ॥ ६३४ ॥ ॥ २७ ॥ ब्रवीति गिरं धिग् मुण्डिन्! त्वं, वेगविघातो मूत्रपुरीषप्रवृत्तिनिरोधः कृतस्त्वया, इत्यस्माद् दुःखापितो दुःखवान् कृतोऽहमित्येवं नानारूपमाक्रोशति पदे पदे । सोऽपि भगवान् यत्कुरुते तदाह ॥ ६३५ ॥ २८ ॥ न गणयति न मन्यते तां परुषगिरं, न च गर्हतेऽपि तं परुषवचनवक्तारं दुरभिगन्धं विलीनगन्धमपि सन्तम् । तर्हि किं कुरुते इत्याह —चन्दनमिव मन्यमानस्तत्पुरीषादि, मिथ्या मे दुष्कृतं यदत्र प्रमादादनुचितमाचरितमिति भणति ॥ ६३६ ॥ २९ ॥ तथा चिन्तयति मीमांसते—किं करोमि अन्नपानदानादिरूपं कृत्यं, कथं तु केन नाम प्रकारेण समाधिर्भवेदस्य साधोः । इत्येवं बहुविधप्रकारं भोजनभङ्गएषणाविघातनिष्ठुराक्रोशादिप्रकारवद्, यथा भवति । नापि नैव तीर्णः शकितो यदा क्षोभयितुम् ॥ ६३७ ॥ ३० ॥ तदाऽभिष्टुत्य—अहो! सुलब्धं ते जन्म, सफलं जीवितव्यमित्यादिभिर्वचनैस्तं प्रशंस्य गतस्नको देवः । आगतश्चेतरः स्वोपाश्रयम् । आलोचिते यथावस्थितस्वरूपे निवेदिते सति गुरुभिर्धन्य इति भणित्वा, तथेति समुच्चये, समनुशिष्टः स प्रशंसित इति ॥ ६३८ ॥ ३१ ॥ अथ प्रस्तुतयोजनामाह;—यथा तेन नन्दिषेणसाधुना एषणा पानकशुद्धिरूपा नो नैव भिक्षा विनाशिता इत्येवमेषणायां यतितव्यं सर्वेण सदा साधुना अदीनभावतोऽक्षीणपरिणामात् सूत्रयोगेन सूत्रानुसारेणेत्यर्थः ॥ ६३९ ॥ ३२ ॥

ततोऽसौ नन्दिषेणाख्यः साधुः साधितसाधिमा । अखण्डाभिग्रहो मृत्यौ कालेन समुपस्थिते ॥ १ ॥ चकारानशनं

भव्या भावयामास भावनाः । अवश्यवेद्यदुष्कर्मविपाकादित्यचिन्तयत् ॥ २ ॥ मन्ये नान्यस्य कस्यापि दुर्भगत्वं तथाऽ-
भवत् । यथा ममेति संमूढो निदानमकरोदिदम् ॥ ३ ॥ यद्यस्ति तपसो मेऽस्य फलमग्रभवे ततः । समस्तसुभगस्तोमशे-
खराकारधारकः ॥ ४ ॥ भवेयमिति संक्लेशादनुत्तीर्णो मृतश्च सन् । जातो वैमानिको देवः स्थितो भूरिमनेहसम् ॥ ५ ॥
तत्रासावायुषो हानौ च्युत्वाऽस्मिन्नेव भारते । नगरे सौर्यपुराभिख्ये समाख्यामुत्तमां गते ॥ ६ ॥ समृद्धलोकसंवाससुन्दरे
मन्दरोपमैः । देवागारैर्वराकारै राजमाने पदे पदे ॥ ७ ॥ अनेककुलकोटीभिः संकुले नकुलाकृतौ । विपक्षदन्दशूकानामु-
ग्रवैरविषात्मनाम् ॥ ८ ॥ हरिवंशशिरोरत्नतुल्यस्य वसुधाभुजः । अन्धकवृष्णेः प्रवरपत्न्यामुत्पन्नवानसौ ॥ ९ ॥ गर्भत्वेन
तिथौ शुद्धे दोहदे च विनोदिते । पर्यन्ते नवमासानां सा तं देवी व्यजीजनत् ॥ १० ॥ समुद्रविजयादीनां देवताकारधा-
रिणाम् । दशानामन्तिमं सूनुं सौभाग्यमणिरोहणम् ॥११॥ विहितश्चोत्सवश्चोच्चैर्यादवानन्ददायकः । समयेऽदायि नामास्य
वसुदेव इलाभुजा ॥ १२ ॥ वृद्धः कलाकलापेन लेभे यौवनमुत्तमम् । अत्रान्तरे पिता राज्यं दत्त्वा प्रथमसूनवे ॥ १३ ॥
व्रतं गृहीत्वा संसिद्धः सोऽपि राज्यं यथास्थिति । चक्रे शक्र इव स्वर्गे बन्धुवृन्दादिनन्दितः ॥ १४ ॥ यदा यदा कुमा-
रोऽसौ वसुदेवो गृहाद्बहिः । बम्भ्रमीति तदा तस्य सौभाग्यगुणविह्वलाः ॥ १५ ॥ पुरनार्योऽनिवार्येण कौतुकेन कुलस्थि-
तिम् । व्यतीत्याक्षिप्तमनसस्तमेवैकं विलोकितुम् ॥ १६ ॥ स्वगृहोपरिभागस्था गृहद्वारगतास्तथा । वर्त्तन्ते नो निवर्त्तन्ते
समीपस्थे गुरावपि ॥ १७ ॥ जातमत्यन्तमुन्मत्तं तत्पुरं परितस्ततः । पुरप्रधाना राजानं संभूयेदं व्यजिज्ञपन् ॥ १८ ॥
देवोऽयं शीलजलधिः कुमारोऽबालचेष्टितः । प्राणभङ्गेऽपि कुरुते चेष्टां नैव मलीमसाम् ॥ १९ ॥ सौभाग्यातिशयादस्य

परे युवतयः पुरे । दर्शने निस्त्रपीभूता विचेष्टन्ते सविक्रियाः ॥ २० ॥ ततो राजगृहस्यास्य मध्य एव यथा स्थितिः । संभवेदस्य दैवेन स प्रकारो विचिन्त्यताम् ॥ २१ ॥ उक्तः कुमारो राज्ञाऽथ यथावत् स गृहस्थितः । सौकुमार्यात् क्रियाः मर्त्याः कर्त्तुमर्हसि नो बहिः ॥ २२ ॥ ततो विनीतरूपत्वात् स राजन्यगिरं मुदा । मेने पञ्जरसंक्रान्तकीरवत् स्थातुमुद्यतः ॥ २३ ॥ शिवादेव्याः कदाचिच्च सोऽद्राक्षीद् गन्धपेषिकाम् । बृहत्सौरभसंभारगन्धभाजनसङ्गताम् ॥ २४ ॥ स्वज्येष्ठभ्रातृजायायाः सत्केयमिति केलितः । गन्धमुष्टिं बलात्तस्या जग्राह ग्रहवानिव ॥ २५ ॥ तयासौ बभणे किञ्चिज्जातरोपातिरेकया । यत एवमनर्थाढ्यस्तत एव निरुध्यसे ॥ २६ ॥ तच्छ्रुत्वा कर्णकटुकं वचस्तस्याः शनैरसौ । पप्रच्छ भद्रे! वृत्तान्तः कीदृशोऽयं निवेद्यताम् ॥ २७ ॥ तयाऽप्यूचे पुरस्त्रीणामसमंजसमर्गलम् । त्वत्तो जातमिति स्वामी त्वां गृहान्तर्न्यवीविशत् ॥ २८ ॥ निर्विण्णोऽसौ ततश्चित्ते चिरमेवमचिन्तयत् । निष्कलंकप्रवृत्तेर्मे सम्पन्नः कथमीदृशः ॥ २९ ॥ पौरलोकादसद्वादो गच्छामि तदहं दिशम् । एकां काञ्चित्समाश्रित्य यत्रायं मां न पश्यति ॥ ३० ॥ अस्तंगते जगद्बन्धौ भास्करे तिमिरे भरे । विजृम्भमाणे सज्जाक्षे जाते चोलूकमण्डले ॥ ३१ ॥ पद्माकरेषु संकोचभावभाक्षु निशामुखे । स्थगिते नगरद्वारे निःसंचारेषु चाध्वसु ॥ ३२ ॥ एकाक्यलक्षितः सर्वैर्निर्जगाम पुरोदरात् । तद्द्वारि मृतकं दग्ध्वा वस्त्रखण्डे लिलेख सः ॥ ३३ ॥ अंगारकज्जलेनैवं यथा भ्राता कनिष्ठकः । समुद्रविजयादीनां राज्ञां विश्रुततेजसाम् ॥ ३४ ॥ जनापवाददुःखेन शल्यादपि गरीयसा । पीडितो ज्वलनज्वालापातमित्थमिहाकरोत् ॥ ३५ ॥ नगरप्रतोलिद्वारे वंशखण्डावलम्बितम् । तन्मुमोच त्वरायद्भिः पादैस्तस्मादपाक्रमत् ॥ ३६ ॥ शरीरवर्णभाषादिभेदकारिभिरौषधैः । संयोजिताः पुरा तेन

गुटिकास्तिष्ठता गृहे ॥ ३७ ॥ तासां प्रभावतोऽलक्ष्यो वसुदेवोऽयमित्यभूत् । कदाचित् केनचित् क्वापि प्रच्छादितनिजाकृतिः ॥ ३८ ॥ सम्यङ्मार्ग्गमजानानः प्रवृत्तो गन्तुमिच्छया । लब्धमार्गश्चिरेणैष ददृशे रथसंस्थया ॥ ३९ ॥ एकया तारतारुण्यराजा कथमपि स्त्रिया । पित्रा गृहं निजं भर्त्तृगेहतो नीयमानया ॥ ४० ॥ अभाणि च तया तात! रथमारोप्यतामयम् । तथाकृते सहैवायं जगाम ग्राममग्रिमम् ॥ ४१ ॥ ततो भुक्तश्च तत्रायं सन्ध्याकाले समागते । तद्ग्राममध्यभागस्थे ययौ यक्षस्य मन्दिरे ॥ ४२ ॥ शुश्राव च जनाद् वार्त्ता तद्वासरसमुद्भवाम् । यथा सौर्यपुरे वह्नावद्य पातं व्यधाल्लघुः ॥ ४३ ॥ अन्धकवृष्णिपुत्राणां, प्रारब्धा यादवास्ततः । सान्तःपुरा महाक्रन्दं कर्त्तुं वत्सनिमित्तकम् ॥ ४४ ॥ किमर्थमित्थं वृत्तोऽसि कर्त्तुं मूढजनोचितम् । स्वप्नेऽपि विप्रियं वत्स! व्यधात्तव न कश्चन ॥ ४५ ॥ प्रतिवासरमुच्चोच्चदर्शितप्रियचेष्टितः । सर्वोऽप्येष जनो वत्स! तवासीद्गुणवत्सलः ॥ ४६ ॥ एवमाक्रन्द्य सुचिरं कृताः प्रेतक्रियाः पुरम् । प्रतिजग्मुः सशोकेन चेतसा मलिनैर्मुखैः ॥ ४७ ॥ ततश्चिन्तितमेतेन नूनं मद्विषया स्पृहा । मुक्ता सौर्यपुरस्थेन जनेनेत्थं निचेष्टता ॥ ४८ ॥ अतः स्वच्छन्दचारेण विहर्त्तुमुचितं मम । तथैव कर्त्तुमारब्धस्ततः सौभाग्यनीरधिः ॥ ४९ ॥ ततो विजयसैन्याख्ये नगरे बहिरवस्थितः । दृष्टस्तत्रत्यलोकेन के वाऽकस्मादिहागताः ॥ ५० ॥ यूयमेवं तथा पृष्टस्तेनाप्येवमकथ्यत । ब्राह्मणस्य सुतो विद्यासङ्ग्रहस्य कृतेऽधुना ॥ ५१ ॥ इहागतोऽहमुक्तस्तैस्तं प्रति प्रीतमानसैः । अस्यां वाप्यां कुरु स्नानं मुञ्च खेदं च देहतः ॥ ५२ ॥ तथा च विहितं तेन ततः पौरजनैः सह । छायां तरोरशोकस्य बहलां शीतलां श्रितः ॥ ५३ ॥ ततोऽसौ पुरलोकेन जगदे शृणु सम्प्रति । यदत्र नगरे वृत्तं विजयाख्यो नराधिपः ॥ ५४ ॥ दुर्वारवैरि-

मातङ्गमदमर्दनकेसरी । अस्यास्ति सुजया देवी तस्यास्तद्गर्भसम्भवे ॥ ५५ ॥ द्वे पुत्र्यौ स्तस्तयोरेका श्यामाख्या विजया परा । गान्धर्वे नृत्यमार्गे च परां निष्ठामुपागते ॥ ५६ ॥ वितीर्णस्तोपतः पित्रा स्वयंवरविधिस्तयोः । लक्ष्मीभाजनमित्येवं लक्ष्यसे त्वं विचक्षणः ॥ ५७ ॥ यद्यस्ति गीते नृत्ये च कौशलं ते ततो व्रज । यतस्ताभ्यां प्रतिज्ञातं सर्वलोकपुरस्सरम् ॥ ५८ ॥ गीतनृत्ये प्रकृष्टो यः स नौ भर्त्ता भविष्यति । समादिष्टा वयं राज्ञा, रूपस्वी तरुणः पुमान् ॥ ५९ ॥ ब्राह्मणः क्षत्रियो वापि गीतनृत्यविशारदः । द्रुतं कश्चित्समानेयस्तेनोक्तं काचिदस्ति मे ॥ ६० ॥ शिक्षा प्रस्तुतविद्यायां दर्शितो भूभुजस्ततः । सस्नेहया दृशा तेन दृष्टः पूजां च लम्भितः ॥ ६१ ॥ तत्रैव राजभवने स्थितश्चाभ्यासवासरे । गन्धर्वनृत्ययोर्दृष्टे ते कन्ये पुण्यदर्शने ॥६२॥ उत्फुल्ललोचनाम्भोजे कुम्भिकुम्भपयोधरे । स्वःसिन्धुसैकताकारपृथुलश्रोणिमण्डले ॥ ६३ ॥ उन्मत्तकोकिलालापे कोमलस्वरभाषिते । गन्धर्वनृत्यशास्त्रेषु निपुणे अपि तेन ते ॥ ६४ ॥ किञ्चिद्विशेषमानीते राज्ञा संस्तुष्टचेतसा । प्रशस्ते वासरे पाणिं तेनासौ ग्राहितस्तयोः ॥ ६५ ॥ राज्यस्यार्द्धं तथा दत्तं तत्संगमपरायणः । विन्ध्यशैलगजो यद्वत् स्वच्छन्दः संचरन्नसौ ॥ ६६ ॥ यावदास्तेऽन्यदा ताभ्यां पत्नीभ्यां समपृच्छ्यत । चेद् ब्राह्मणकुलोत्पन्नो भवान् किमिति कौशलम् ॥ ६७ ॥ साङ्गाहिकासु सञ्जातं कलासु सकलासु ते । प्ररूढे प्रणये तेन सद्भावः कथितस्तयोः ॥ ६८ ॥ आपन्नसत्त्वा सम्पन्ना श्यामा पुत्रमसूत च । अक्रूर इति तन्नाम स्थापितं तत्र तिष्ठतः ॥ ६९ ॥ जनानां प्रत्यभिज्ञानं वसुदेवोऽयमित्यभूत् । ततस्तस्मादपक्रान्तो वसुधां बहुविस्मयाम् ॥ ७० ॥ आहिण्डमानः प्रोद्दण्डचेष्टितः परिणीतवान् । कन्यां विजयसेनाद्या यौवनोदग्रविग्रहाः ॥ ७१ ॥ कालेन कौशलाभिख्यं देशमागतवानसौ ।

तत्राकाशस्थया देव्या बभाषे सोमया यथा ॥ ७२ ॥ रोहिणीनामिका कन्या वितीर्णा ते स्वयंवरा । त्रिविष्णुपणवं तत्र विवाहे त्वं च वादयेः ॥ ७३ ॥ तत्तेनानुमतं सर्वं गतो रिष्टाभिधं पुरम् । रोहिणी कन्यका लाभसस्पृहैर्नरनायकैः ॥७४॥ कृतावासैर्बहिर्देशे विहितोत्तुंगमण्डपैः । जरासंधादिभिः सर्वैं राजमानं समंततः ॥ ७५ ॥ आतोद्यवादकैः सार्द्धं देशे चैकत्र संस्थितः । शृणोत्युद्घोषणां राज्ञा सन्ध्याकाले प्रवर्त्तिताम् ॥ ७६ ॥ कल्ये रुधिरराजस्य मित्रादेवीतनूद्भवा । पुत्री या रोहिणी नाम भविताऽस्याः स्वयंवरः ॥ ७७ ॥ विवाहप्रगुणैः सर्वैस्ततो भूत्वा नराधिपैः । विवाहमण्डपः सर्वैर्भूषणीयः सभूषणैः ॥ ७८ ॥ द्वितीये दिवसे सूर्ये पूर्वाव्योममधिष्ठिते । तदाताम्रकरालेपात् कुंकुमेनेव रञ्जितम् ॥ ७९ ॥ ततो गृहीतश्रृङ्गाराः कल्पपादपसन्निभाः । तालसिंहादिभिश्चिह्नै राजन्तो राजलाञ्छनैः ॥ ८० ॥ रभसोल्लासितातोद्यशब्दपूर्णनभोन्तराः । उद्दण्डधवलच्छत्रच्छायाछिन्नातपास्तथा ॥ ८१ ॥ हस्त्यश्वरथयानानि यथायोग्यमधिष्ठिताः । सन्दधानाश्च सम्पूर्णां स्वशोभां बलवाहनैः ॥ ८२ ॥ प्राप्ताः स्वयंवरस्थाने सन्निविष्टा यथास्थिति । हेमाद्रिशिखरोत्तुङ्गविष्टरस्था यदा स्थिताः ॥ ८३ ॥ जरासंधादयः सर्वे राजानश्चलचामराः । तदा स्वयंवरभुवं रोहिणी सर्वतो वृता ॥ ८४ ॥ चेटिकाचक्रवालेन वृद्धैरान्तःपुरैर्नरैः । छत्रछन्नशिरोदेशा चलत्पाण्डुरचामरा ॥ ८५ ॥ स्फुरत्सौरभसंभारगृहीतवरमालिका । विहितोदग्रश्रृङ्गारा साक्षाल्लक्ष्मीरिवाययौ ॥ ८६ ॥ क्रमेण दर्शयामास लेखिका नाम भूपतीन् । अम्बधात्री स्थितानग्रे पुरंदरसमाकृतीन् ॥ ८७ ॥ यथा वत्से! जरासंधः सिन्धुप्रान्तमहीपतिः । राजासौ निखिलक्ष्मेशशिरःपुष्पार्चितक्रमः ॥ ८८ ॥ उग्रसेनसुतः शूरसेनाविषयनायकः । एष कंसाभिधः पुत्रि! प्रतापाद् मित्रवत् स्थितः ॥ ८९ ॥ अन्धकवृष्णेश्च सुता

एते नीतिपयोधयः । समुद्रविजयं पूर्वं विधाय विधिना स्थिताः ॥ ९० ॥ कुरूणामधिपः पाण्डुरेष राजा सनन्दनः । अयं च दमघोषाख्यश्चेदिराजो निभाल्यताम् ॥ ९१ ॥ पांचालविषयस्वामी द्रुपदोऽयं नराधिपः । एवमन्येऽपि भूपालाः क्रमशो दर्शितास्तया ॥ ९२ ॥ अरोचितेषु सर्वेषु व्यतिक्रान्तेषु च क्रमात् । मलिनच्छायेषु जातेषु रात्रौ दीपोज्झितेष्विव ॥ ९३ ॥ राजमार्गेषु, पणवशब्दसम्बोधिता सती । वसुदेवं प्रपेदे सा प्रातः श्रीरिव पङ्कजम् ॥ ९४ ॥ विनिद्रपारिजातादिकुसुमग्रथितां स्रजम् । कण्ठदेशे मुमोचास्य सर्वाङ्गेषु दृशं तथा ॥ ९५ ॥ यदा शिरसि तस्यैषा निचिक्षेपाक्षतान् किल । तदा प्रलयकालान्तकल्लोला इव पार्थिवाः ॥ ९६ ॥ सर्वेऽपि चुक्रुधुर्भीमकोलाहलपरायणाः । अन्योऽन्यं प्रश्नयामासुः को वृतः कन्ययाऽनया? ॥ ९७ ॥ उक्तं कैश्चिद् विलक्ष्यैतान् राज्ञः पणववादकः । कश्चिदज्ञातजात्यादिगुणग्रामो निराकृतिः ॥ ९८ ॥ रुधिरो दन्तवक्त्रेन प्रोचे प्रोच्चगिरा यथा । नो चेत्कुलेन ते कार्यं किममी निकलान्वयाः ॥ ९९ ॥ मीलिताः पार्थिवाः सर्वे, रुधिरः प्रत्यभाषत । दत्तः स्वयंवरोऽमुष्या वृतः स्वरुचितस्ततः ॥ १०० ॥ ततः को नाम दोषोऽस्य परदारेषु चाधुना । न कश्चित् कुलजातेन व्यवहारः कर्त्तुमिष्यते ॥ १०१ ॥ दमघोषेण भणितमज्ञातकुलसंस्थितेः । एतस्येयमयोग्योच्चैर्दीयतां क्षत्रजन्मनः ॥ १०२ ॥ विदुरेण कुलीनोऽयं नाम कश्चन सम्भवेत् । इत्यूचे वंशमस्याथ विज्ञातं कुरुतादरात् ॥ १०३ ॥ ततश्च वसुदेवेन भाषितं कः कुलस्य मे । प्रस्तावः कथने वाद एवमस्मिन्नुपस्थिते ॥ १०४ ॥ कुलं बाहुबलेनैव प्रकटं मे भविष्यति । सगर्वं तद्वचः श्रुत्वा जरासंधोऽभ्यधादिदम् ॥ १०५ ॥ समक्षनाभं रुधिरं रे रे गृह्णीत सत्वरम् । येन पाणविकोऽप्येष आनीतः पदमीदृशम् ॥ १०६ ॥ तदादेशवशात् सर्वे

यावत् क्षोभमुपागताः । तावद् रुधिरराजोऽपि रोहिणीवसुदेववान् ॥ १०७ ॥ समकं रत्नाभेन प्रविष्टो रिष्टनामके । निजे पुरे कृतश्चाथ सन्नाहः समरोचितः ॥ १०८ ॥ विद्याधरप्रभुः पूर्वं वसुदेववशीकृतः । सारथिस्तत्क्षणे जातो लब्ध प्रौढवलस्ततः ॥ १०९ ॥ निर्गतो नगरादेको लग्नं युद्धं परस्परम् । शितोग्रशरसंघातपातच्छिन्नदिगन्तरम् ॥ ११० ॥ तस्यानुमार्गश्चलितो रत्नाभसमन्वितः । रुधिरोऽत्र क्षणं युद्ध्वा निर्जितः प्राविशत् पुरम् ॥ १११ ॥ विद्याधराधिपतिना सारथित्वमुपेयुषा । सहितः केवलं तस्थौ वसुदेवो रणाङ्गणे ॥ ११२ ॥ तरुणैणपसंकाशमक्षोभं पुरतः स्थितम् । विलोक्य भूभुजो जाता विस्मयाकुलमानसाः ॥ ११३ ॥ ततो विमृश्य गदितं पाण्डुना कीर्त्तिपाण्डुना । न राजधर्म एषोऽयं यदेको बहवो वयम् ॥ ११४ ॥ जरासंधो बभाणाथ कश्चनैकोऽत्र युध्यताम् । एतेन सह यो जेता भविता तस्य रोहिणी ॥११५॥ शत्रुञ्जयस्ततः प्राप्तः प्रोज्झन् वाणभरं पुनः । वसुदेवेन विहितः क्षणाच्छिन्नरथध्वजः ॥ ११६ ॥ यमजिह्वातितीव्रेण क्षुरप्रेण कचस्पृशा । एवं कालमुखोऽनेन मुण्डमौलिकृतो नृपः ॥ ११७ ॥ एवमन्येऽपि राजानो हतविप्रहताः कृताः । तदा समुद्रविजयः प्रोत्थितो रोषरोषितः ॥ ११८ ॥ लग्नो मोक्तुं शितान् शरान् स्वजीवितगतस्पृहः । वसुदेवश्च विदितभ्रातृकः प्रहरत्यमुम् ॥ ११९ ॥ न सर्वथा परं छिन्ते आयुधानि ध्वजानि च । निरायुधविलक्ष्यत्वमानीतं वीक्ष्य तं नृपम् ॥ १२०॥ निजनामाङ्कितो मुक्तो लिखितः पूर्वमेव यः । पादवन्दनसंसूचापरमः पुरतः शरः ॥ १२१ ॥ गृहीत्वा वाचयित्वाथ लब्धार्थः ससहोदरः । मुमोच चापं सञ्जातप्रसन्नहृदयः क्षणात् ॥ १२२ ॥ वसुदेवो रथं मुक्त्वा यावदायाति संमुखम् । तावदास्यप्लुताक्षेण रथादुत्तीर्य भूभुजा ॥ १२३ ॥ पादयोर्निपतन्नेष सर्वाङ्गालिङ्गितः कृतः । ततो मुक्तमहाक्रन्दौ प्रवृत्तौ

वसुदेवोदा-
हरणम्–

तौ प्ररोदितुम् ॥ १२४ ॥ अक्षोभ्यः स्तिमितोऽन्येऽपि सोदराः स्वजनाश्च ये । लब्धप्रस्तुतवृत्तान्ता ज्येष्ठं संजग्मिरे मुदा ॥ १२५ ॥ जरासंधादयो जाताः ससन्तोषा यथोचितः । रोहिण्या जगृहे भर्त्ता रुधिरश्चाभिनन्दितः ॥ १२६ ॥ कृतार्थोऽस्मि सुता यस्य हरिवंशशिरोमणिम् । अवृणीत कृता चास्य पूजा दर्शितसम्भ्रमैः ॥ १२७ ॥ यथोचितेन वित्तेन विधिना राजभिस्तकैः । शोभने दिवसे प्राप्ते पाणिग्रहविधिः कृतः ॥ १२८ ॥ विभवव्ययेन महता रुधिरेण धराधिपाः । जग्मुः सम्पूजिताः स्थानं स्वं स्वं प्रीतिभरोद्धुराः ॥ १२९ ॥ द्वात्रिंशतं ददौ कोटीर्हिरण्यस्य नराधिपः । जामातुश्चातुरङ्गं च बलं ददौ मदोत्कटम् ॥ १३० ॥ समुद्रविजयेनोक्तो रुधिरः स्वपुरं प्रति । कुमारं नेतुमिच्छामः सोत्कण्ठा बान्धवा यतः॥१३१॥ आस्तां तावदिहैवैष कालं कश्चन मन्मुदे । प्रस्थानसमये राज्ञा कुमारः प्रत्यपद्यत ॥ १३२ ॥ अलं ते हिण्डितव्येन नाम दृष्टः कथंचन । नष्टो भविष्यसि पुनः, पादप्रणतमस्तकः ॥ १३३ ॥ बभाण बान्धवान् सर्वान् मिलितानानकदुन्दुभिः । क्षमणीयोऽपराधो मे यदुद्वेगः पुराकृतः ॥ १३४ ॥ जातः परं तथा कार्यं यथा शोको भविष्यति । भवतां स्वप्नकालेऽपि मय्येवार्पितचेतसाम् ॥ १३५ ॥ समुद्रविजयप्रमुखा यादवाः सह बान्धवैः । प्रतिजग्मुर्निजं स्थानं तत्रैव स्थितवानसौ ॥ १३६ ॥ अन्यदा रोहिणी पृष्टा तेन कस्मादहं त्वया । विमुच्य क्षितिपालानशेषानवगीतो वृतस्त्वया ॥ १३७ ॥ देवता रोहिणी नाम प्रसन्ना मम वर्त्तते । तया निवेदितं भद्रे! यः स्वयंवरमण्डपे ॥१३८॥ पणवं वादयेत् तस्य भार्यात्वेन भविष्यसि । तच्छ्रद्धाकर्णनाज्जाततोषया त्वं पतिर्वृतः ॥ १३९ ॥ उदग्रभोगः संतस्थे यावत्तत्रान्यदा निशि । रोहिणी चतुरः स्वप्नानद्राक्षीद्रात्रे व्यलोकत ॥ १४० ॥ गजाद्यन्यतमान् कालेनाभ्यसूत सुतं वरम् । रामोऽयमिति नामास्य कीर्त्तितं परमो-

त्सवे ॥ १४१ ॥ ततः कालेन वैताढ्ये भूमौ चाप्सरसां समाः । कन्या बहललावण्या बह्वीः परिणिनाय सः ॥ १४२ ॥ शुश्राव श्रवणापुरं यादवसम्बन्धी समायातः कदाचन । नगर्यां मृत्तिकावत्यां देवकीं देवकात्मजाम् ॥ १४३ ॥ पूजितस्तेन पपृच्छे देवनन्दकारिचेष्टां कृतस्पृहः । तां प्रति प्रगुणो यावदास्ते तावत्समागतः ॥ १४४ ॥ नारदः केलिकिलत्वेन तस्यामेष गतः पुरि । देवकीमूलकीगतम् । रूपं तेन च तुष्टेन सप्रपञ्चं प्रशंसितम् ॥ १४५ ॥ ततः देवकराजेन पुत्रीचित्तमागम्यमागम्य च गुणान् बहून् ॥ १४६ ॥ तथा प्रोचे यथैतस्याश्चुक्षोभ स्मरसागरः । ततो देवकराजेन पुत्रीचित्तं विजानता ॥ १४७ ॥ वसुदेवः समाहूतः प्राप्तः कंससमन्वितः । शुभे दिने समाहूते देवकीं परिणीतवान् ॥ १४८ ॥ दत्तं भाराग्रशो हेम नानामाणिक्यराशयः । कोटिर्गवां च गोपेन नन्देन कृतरक्षणा ॥ १४९ ॥ सूचितः सप्तभिः स्वप्नैः पद्मनाभः सुतोऽभवत् । श्रीवत्सालंकृतोरस्कस्तमालदलसन्निभः ॥ १५० ॥ तस्मिन् सुते परं प्राप्ते यौवनं घातिते सति । तेन कंसे तथारूपाद् वृत्तान्ताद् बहुविस्तरात् ॥ १५१ ॥ जरासंधेऽधिकं क्रुद्धे कंसस्य श्वशुरे सति । त्यक्त्वा सौर्यपुरीं भीता यादवाः पश्चिमां गताः ॥१५२॥ अनेककुलकोटीभिः सहितो लवणोदधेः । नेतारं याचयामास हरिस्तत्रोपवासवान्॥१५३॥ निवासस्थण्डिलं तत्र पुरन्दरनिरूपिताम् । पुरीं निर्मापयामास धनदः सर्वकाञ्चनाम् ॥ १५४ ॥ वसुदेवान्वयः स्फीतिं पुत्रपौत्रादिभिस्तथा । गतो यथा स वंशस्य पितामहपदं ययौ ॥ १५५ ॥ विशुद्धपालितप्राच्यभवाभिग्रहतः फलम् । सम्प्रसस्य सुभगलोकचक्रशिरोमणेः ॥ १५६ ॥ प्रसङ्गागतमेतच्च नन्दिषेणभवान्तरम् । यदुक्तं वसुदेवस्य चरितोद्धारतो मया ॥ १५७ ॥ **इति नन्दिषेणचरितं समाप्तम् ॥**

अथ चतुर्थोदाहरणमाह;—धिग्जातिर्ब्राह्मणः सोमिलार्य्यः सोमिलनामा मुनिः क्वापि गुरुकुले वसति स्म । स च स्वभावादेयादानादिसमितावादानभाण्डमात्रनिक्षेपणानामिकायां समितावुपयुक्तः सदैव कृतप्रयत्नः समभवद् । एवं काले व्रजति कदाचिद्गुरुणा सन्ध्यासमये भणितो यथा—भद्र ! प्रातर्ग्रामगमनमुपस्थितमास्ते । तेन च गुरुगमनार्थं गुरोर्ग्रामस्य गमननिमित्तमुद्ग्राहणा पात्रवस्त्रादिप्रगुणीकरणरूपा कृता । तु शब्दः समुच्चये, भिन्नक्रमश्च । ततो गमने च प्राप्ते कुतोऽपि निमित्तदोषाद् गुरोर्निवर्त्तनमभूत् ॥ ६४० ॥ ३३ ॥ तथा मुञ्च सम्यक् प्रत्युपेक्ष्य प्रमार्ज्य च यथास्थानमुपकरणमिति प्रेरणा गुरुणा मधुरया गिरा कृता । तेन चाकस्मादेव कियत्संपन्नाऽक्षमापरिणामेन किमत्रोपकरणनिक्षेपस्थाने सर्प्पस्तिष्ठतीत्येवं प्रतिभणितो गुरुः । ततो मुहूर्त्तात् संविग्नो भावयति चित्तेन सम्पन्नतीव्रपश्चात्तापः । कथमित्याह—'हा' इति खेदे, अयुक्तमनुचितं गुरून् प्रति भणितं मया, अविकल्पकरणीयादेशत्वाद् गुरूणाम्, इत्येवं संविग्नः सन् सुरया गुरोरधिष्ठायिकया देवतयाऽनुगृहीतः ॥ ६४१ ॥ ३४ ॥ कथमित्याह—आदानभाण्डमात्रनिक्षेपस्थानस्थितस्य सर्प्पस्य यद्दर्शनं तेन । ततः सुष्ठुतरं तद्दर्शनात् तीव्रश्रद्धासम्पन्नो दण्डकग्रहनिक्षेपे दण्डकानां विचारभूम्यादेरागतहस्ताद्ग्रहे निक्षेपे चाभिग्रहो मयैवेदं कर्त्तव्यमिति प्रतिज्ञावान् संजातः सर्वगच्छे ॥ ६४२ ॥ ३५ ॥ ततः 'अन्नोन्नागम'त्ति अन्येषां च साधूनां स्वगच्छयुतानां चागमस्तत्र गच्छे नित्यं समभूत् । स चाभ्युत्थानादियोगपरितुष्टः—अभ्युत्थानपादप्रमार्जनदण्डकग्रहतत्स्थाननिक्षेपासनप्रदानादिना योगेन साधुसमाचाररूपेण परितुष्टः पीतपीयूष इव परां प्रीतिमागतः सन् यत्नेनादरेणाधस्तादुपरि च दण्डनिक्षेपस्थानस्य या प्रमार्जना तस्यां समुद्युक्तो जातः । यश्चात्राधस्तादुपरीति व्यत्ययेनानयोः पदयोरुप-

न्यासः कृतः, स च्छन्दोभङ्गभयात्, अन्यथोपर्यधस्तादिति वक्तुमुचितम् । यथोक्तमन्यत्र "उवरिं हेट्ठा य पमज्जिऊण लट्ठिं ठवेज्ज सट्ठाणे" इति ॥ ६४३ ॥ ३६ ॥ ततो यावज्जीवमेवं यथैकस्यां वेलायां ग्लान्येऽपि ग्लानभावलक्षणेऽपरिपतित भावः कथञ्चित् क्रियाया अभावेऽपि अत्रुटितपरिणाम आराधकोऽस्याः समितेस्त्रिकरणशुद्धेन भावेन । एतदाराधकश्च सन् शेषाणामप्याराधको, भावाद् भावान्तरप्रसूतिर्नियमात् सम्पद्यत इति ॥ ६४४ ॥ ३७ ॥ अथ पञ्चमसमित्युदाहरणमाह;—धर्मरुचिर्नाम्ना क्षुल्लकः चरमसमित्या उच्चारप्रस्रवणखेलसिंघाणजल्लपरिष्ठापनिकाभिधानया सम्पन्नः क्वचिद्गच्छे समभूत् । स च कथमप्यनाभोगादेः कारणाद् न नैव सन्ध्याकाले प्रेक्षितस्थण्डिलः—उच्चारप्रस्रवणयोग्यानि स्थण्डिलानि न प्रत्युपेक्षितवान्, नापि प्रमार्जितवानित्यर्थः। ततो न नैव कायिकां प्रस्रवणलक्षणं कर्त्तुमभिलषन्नपि व्युत्सृजति मुञ्चति, रात्रौ स्थण्डिलजीवरक्षादृढबद्धकक्षत्वात् ॥ ६४५ ॥ ३८ ॥ जाता च देहपीडा, प्रस्रवणनिरोधात् । ततोऽनुकम्पा देवताया उत्पन्ना—'मा अयं महानुभाव इत एव देहपीडालक्षणाद् व्यसनाद् मरणं प्रापत्' इत्यध्यवसायात् तया देवतयाऽकाले प्रभातं तथा कृतं यथा जातः समुद्द्योतः सूर्यबिम्बोदय इव ॥ ६४६ ॥ ३९ ॥ ततो व्युत्सर्जनं प्रस्रवणस्य प्रत्युपेक्षितप्रमार्ज्जितस्थण्डिलेन सता कृतं तेन । तत उद्द्योतसंहारे सद्य एवान्धकारं समजायत । हन्त किमिदमिति विमर्शप्रधानस्य चास्य देवे उपयोगः सञ्जातो, ज्ञानं च निश्चयो देवविषयो जातस्ततो मिथ्यादुष्कृतं दत्तमहो प्रमत्तोऽस्मि येन कृत्रिमेतरयोः प्रभातयोर्विशेषो न ज्ञात इति ॥ ६४७ ॥ ४० ॥ अथात्रैव समितौ दृष्टान्तान्तरमभिधातुमाह;—अन्योऽपि च पूर्वनिरूपितधर्मरुच्यपेक्षया धर्मरुचिर्नाम क्षमको मासोपवासक्षमणवान् दृष्टान्तो वक्तव्यः । स च

कदाचित् पारणके प्रवृत्ते कटुकतुम्बकं लब्धवान् । तत्र भोक्तव्ये गुरुवारणा गुरुणा निवारणा कृता । कीदृशे सतीत्याह —'नाय'त्ति भोक्तुमयोग्यतयावगते सति, तथा आलोचनायां तुम्बकस्वरूपप्रकाशनायां कृतायां भणितो गुरुणा यथा प्रतिष्ठापर्यतदिति ॥ ६४८ ॥ ४१ ॥

तत आपाकस्थण्डिले इष्टकादिपाकस्थाने तत्परिष्ठापनार्थं गतेन पिपीलिकानां तत्तुम्बकगन्धलुब्धानां मरणमुपलभ्य तद्देशे आपाकस्थण्डिलप्रदेशे एव करुणया समुद्घाटिताततितीव्रकीटिकाविषयदयापरिणामलक्षणया 'सिद्धविकटन' इति सिद्धान् साक्षीकृत्य दत्तायामालोचनायां तत् तुम्बकं भुक्त्वा मृतो महासत्त्वः सुगतिगामी च सम्पन्न इति गाथाक्षरार्थः । विस्तरार्थः पुनः कथानकादवसेयस्तच्चेदम् ;—अत्थि इहेव जंबुदीवे दाहिणभरहमज्झखंडम्मि । अब्भंलिहपायारा चंपा नामेण पवरपुरी ॥ १ ॥ धवलुत्तुंगसुरालयसहस्ससोभंतमज्झभागाए । तीए पुरीए भविंसु विस्सुया माहणा तिण्णि ॥ २ ॥ सोमे य सोमदत्ते तहावरे सोमभूइ इयनामे । एगोदरा परोप्परपरूढदढपणयसम्पन्ना ॥ ३ ॥ सवे पभूयविभवा सव्वेवि य फुरियफारजसपसरा । सवे विसालभवणा सवे केणइ अपरिभूया ॥ ४ ॥ तेसिं ताओ हिययप्पियाओ चित्ताणुवत्तणपराओ । पियमहुरभासिणीओ नियकुलकम्माणुसीलाओ ॥ ५ ॥ सुकुमालपाणिपायाओ पुन्नसव्वंगियाओ चंगाओ । ते ताहिं समं विसए निसेवमाणा दिणे नेंति ॥ ६ ॥ अह एगया गयाणं समवायं ताण एरिसुल्लावा । जाया जह अम्हाणं समत्थि जा सत्तिमो पुरिसो ॥ ७ ॥ भोत्तुं दाउं परिभाइउं च जोग्गा सिरी अइविसाला । ता तिसुवि गिहेसु कमेण पइदिणं भोयणं काउं ॥ ८ ॥ जुज्जइ समवायपराणमन्नहा किं तु वंधुभावस्स । होज्जा फलं जमेवं सत्थेसु मुणीसिणो वेंति

॥ ९ ॥ संभोजनं संलपनं संप्रश्नोऽथ समागमः । एतानि ज्ञातिकार्याणि न विरुन्ध कदाचन ॥ १० ॥ अन्नोन्नस्स पडिस्सु-
यमेवं ते काउं पइदिणं लग्गा । तह चेव भुंजिउं निच्चमेव वट्टंतविस्संभा ॥ ११ ॥ कइयावि तत्थ सूरी सूरोव्व असेसभव-
कमलाण । नामेण धम्मघोसो नवघणघणगहिरनिग्घोसो ॥ १२ ॥ बहुपरिवारो सुबहुस्सुओ य दुच्चरचरित्तसंजुत्तो । विह-
रंतो संपत्तो कमेण चंपाए णयरीए ॥ १३ ॥ ईसाणकोणपरिसंठियम्मि रम्मे सुभूमिभागम्मि । उज्जाणम्मि निवेसो
गहिओ समउदियविहीए ॥ १४ ॥ धम्माणुरागरत्तो पुरीजणो तस्स वंदणनिमित्तं । हरिसाओ निग्गओ खुहियजलहि
कल्लोलसारिच्छो ॥ १५ ॥ निसुओ धम्मो गुरुणा कण्णामयपूरमणहररवेण । ससमयपरसमयवियाणगेण एवं कहिज्जंतो
॥ १६ ॥ यथा । निसुणंतु खणं परिरंभिऊण भवा! मणं समाहिम्मि । उवएसलेसमणवज्जकज्जमेवं भणिज्जंतं ॥ १७ ॥
दुलहं ता मणुयत्ते पत्ते खेत्तारियत्तमेत्तो य । निम्मलकुलजाइसमग्गरोगयारूवसामग्गी ॥ १८ ॥ तत्थवि महद्दहट्ठियकु-
म्मस्स मयंकमंडलालोओ । धम्मंतरेण दुलहो जह तह जीवाण जिणधम्मो ॥ १९ ॥ पत्तोवि पमत्तेहिं सत्तेहिं पत्तयावि-
उत्तेहिं । चिंतारयणंव महोयहिम्मि हारिज्जए एसो ॥ २० ॥ ता पाविऊण एयं मुक्खपमाएण कुसलपुरिसेण । एयथिरत्त-
निमित्तं निसेवणिज्जाइं एयाइं ॥ २१ ॥ जिणसासणाणुरागो निच्चमचागो सुसाहुसंगस्स । सम्मं च सुयब्भासो तह तह
भवभावणुल्लासो ॥ २२ ॥ मरुपहपहिओ कप्पद्दुमंव पोयंव जलहिजलपडिओ । चिंतारयणंव चिरं दालिद्दोवद्दवाभिहओ
॥ २३ ॥ संपइ रे जीव! तुमं धम्मं सव्वण्णुणाहपण्णत्तं । पत्तो कहिंचि णूणं ता तं संपुन्नपुन्नो सि ॥ २४ ॥ सुलहं सव्वंपि
जए रे जीव सुरेसरत्तणाईयं । निव्वइसुहाण साहणमणहो दुलहो य जिणधम्मो ॥ २५ ॥ तम्हा इणमेव पुरो काउं हाउं

च गाउभरियाइं । जुत्तं पवत्तिउं ते जेण खणो दुलहो एस ॥ २६ ॥ एवमणुसासणिज्जो अप्पा निच्चंपि भवविरत्तेण । चित्तेणं जेण न जाउ जिणमयं हाउमुच्छहइ ॥ २७ ॥ कमलुज्जलसीलसिरीसुगंधिणो बंधुणो य भुवणस्स । णिच्चं निसेव-णिज्जा मुणिणो गुणिणो पयत्तेण ॥ २८ ॥ दढमारूढगुणोवि हु जीवो इह साहुसंगपरिहीणो । पाउणइ गुणविणासं जएज्ज ता तेसिं संगकए ॥ २९ ॥ सिद्धंतधारगाणं विसुद्धसीलंगसंगसुभगाण । दूरठियाणं पि मणे करेज्ज सुमुणीण संभरणं ॥ ३० ॥ मंतविवज्जियमोमज्जणंव निज्जीवदेहकिरियव्व । सुयबहुमाणविहीणं सुण्णं मन्नेज्जऽणुट्ठाणं ॥ ३१ ॥ तत्थ पढमं पढिज्जा सुत्तं तत्तो सुणेज्ज तस्सत्थं । सुत्तविहीणं पुण सुयमपक्कफलसंसणसरिच्छं ॥ ३२ ॥ सुत्तं पढियंपि बहुं अपरिण्णा-यत्थमेत्थमक्खायं । सुक्कस्स इक्खुणो भक्खणंव ण खमं सकज्जस्स ॥ ३३ ॥ भणियाणायरणवओ समयण्णू पण्णवंति णाणंपि । भारकरं चियदूभगमहिलाहरणंव बहुयंपि ॥ ३४ ॥ ता भववाहिचिगिच्छासत्थं सुत्थियपसत्थपरमत्थं । जिण-वयणमणुदिणं चिय पढिज्ज निसुणेज्जऽणुट्ठिज्जा ॥ ३५ ॥ भाविज्ज भवसरूवं जह इह सरयब्भविब्भमं सव्वं । जीयं जोव्व-णपियसंगमाइखणदिट्ठनट्ठंति ॥ ३६ ॥ उद्धणपवणपणोल्लियमहल्लहल्लंतजलणजालम्मि । गेहम्मिव मन्नेज्जा खणंपि न खमो भवे वासो ॥ ३७ ॥ जह दुज्जणजणसंगो भंगफलो तह दुहावसाणो य । संसारे तह तियसत्तणाइसोक्खाण परिणामो ॥ ३८ ॥ एकोऽत्थ समत्थ समत्थपसत्थवत्थुवित्थारफुरियमाहप्पो । पमुहावसाणसुंदरपरिणामो णवरि जिणधम्मो ॥ ३९ ॥ तेण अलद्धं लद्धुं लद्धं परिपालिउं इमं तुब्भे । परिपालियं च परमं वुड्ढिं नेउं पयट्टेज्जा ॥ ४० ॥ धण्णा भवदुक्खाणं तिक्खाणमसंसलम्क्खसंखाणं । एयं विरेयणोसहमुवएसं केइ पावंति ॥ ४१ ॥ पडिबोहमागयाऽणेग तत्थ पाणी गया य

सगिहेसु । एवं वोहिज्जंते काले कइयावि धम्मरुई ॥ ४२ ॥ सच्चं चिय धम्मरुई अणगारो मासखमणपारणए । पढमाए पोरिसीए सज्झायमझीणमणवित्ती ॥ ४३ ॥ वीयाए ज्झाण जोगं तइयाए काउं पत्तगुग्गाहं । इरियासमिइपरिगओ अंतो चंपाए पविसेइ ॥ ४४ ॥ तम्मि दिणे णागसिरीए वारओ भोयणस्स णिम्मवणे । कहवि पमाया तीए उवक्खडं तुंवगं कडुयं ॥ ४५ ॥ वहुनेहं तह वहुतित्तमहुररसदव्वसंजुयं ताहे । संजायं विसरूवं कत्तोवि कुजोगदोसाओ ॥ ४६ ॥ गंधाउ तीए नायं तओ विलक्खा मणम्मि चिंतेइ । धी धी मम माहप्पं कुडुंबमज्झे जमुवलद्धं ॥ ४७ ॥ जइ नाम सेसयाओ कहिंचि एयं वियाणइस्संति । तो मम निंदाखिंसाओ उवरमिस्संति न कयाइ ॥ ४८ ॥ तो बाढं गोवेत्ता ठवेमि गेहस्स एगदेसम्मि । इय चिंतिय तं ठवियं तह चेव लहुं तओ अन्नं ॥ ४९ ॥ आणित्तु साउरसमायरेण महया सुसंभियं विहियं । ण्हायासुइवत्थाए तीए जेमाविया विप्पा ॥ ५० ॥ पच्छा पुण सयमवि ताओ महाणीओ कमेण भुत्ताओ । सव्वो जणो स भुत्तो नियकम्मपरायणो जाओ ॥ ५१ ॥ एत्थंतरम्मि साहू धम्मरुई उच्चनीयमज्झाइं । गेहाइं परिभमंतो नागसिरीगेहमणुपत्तो ॥ ५२ ॥ सा दूरा दट्ठूणं गेहे पविसंतमुग्गयपमोया । तत्तुंबगेडणकए ससंभमा आसणाउ लहुं ॥ ५३ ॥ उट्ठित्ता भत्तघरं पविसइ तं कडुयतुंबगं लाउं । धम्मरुइसाहुणो सयलमेव निसिरइ पडिग्गहगे ॥ ५४ ॥ पज्जत्तं मह जायं तिकट्टु गेहाओ ताओ निक्खमइ । जेणेवुज्जाणं सूरिणो य तेणेव पडिएइ ॥ ५५ ॥ तेसिं सूरीणमदूरदेसट्ठियओ पडिक्कमइ इरियं । वियडेइ भत्तपाणं दंसेइ य करयले काउं ॥ ५६ ॥ तस्सुग्गगंधपरवसघाणो मुणिणायगो विचिंतेइ । नूणं विसन्नमेयं न अन्नहा एरिसो गंधो ॥ ५७ ॥ गेण्हित्तु करयले बिंदुमेगमित्तो निभालए जाव । ता तं तहच्चिय जओ धम्म-

मई भाणिओ एवं ॥ ५८ ॥ जइ तं भुंजसि एयं तओ अकालेवि मरणमुवलभसि । ता गच्छ थंडिलं सुद्धमेयमेत्थं परिट्ठ-
वसु ॥ ५९ ॥ अन्नं गवेम फासुयमहेसणिज्जं विसुद्धमाहारं । एवं भणिए गुरुणा धम्मरुई निग्गओ ताहे ॥ ६० ॥ अवि-
ग्गमणो दसदोसवज्जिए थंडिलम्मि गंतूणं । कयसयलदिसालोओ पइक्खणुल्लसियपरिणामो ॥ ६१ ॥ जा तं परिट्ठवेई
तग्गंधाओ वणंतरगयाओ । मिलिया पिवीलियाओ मरिउं च खणेण लग्गाओ ॥ ६२ ॥ मा मज्झं पमायाओ एयासिं
एत्तियाण विणियाओ । होउ, वरं ता भोत्तुं सयमेव इमं समुचियंति ॥ ६३ ॥ ठविउं सिद्धे सक्खित्तणेण अवराह वियडणं
कुणइ । उच्चरियवओ परिसुद्धभावणो तमुवभुंजित्ता ॥ ६४ ॥ तवेयणापरद्धो पंचनमोकारसारपरिणामो । मरिउं जाओ
सव्वट्ठसिद्धणामे वरविमाणे ॥ ६५ ॥ गुरुणावि चिराउ अणागयम्मि तम्मी मुणीण परिकहियं । गच्छह धम्मरुइस्सालहह
पउत्तिं समंताओ ॥ ६६ ॥ मग्गंतेहिं लद्धो थंडिलभूमीए तेहिं मुयजीवो । आगम्म सूरिमूले निवेइयं जह गओ कालं
॥ ६७ ॥ पुच्छगए उवओगं मुणिवइणो तक्खणेण गच्छंति । उवलद्धो नागसिरीकडुतुंबगदाणवुत्तंतो ॥ ६८ ॥ एवंविहो
पमाओ चेइयजइघायगो समत्थाणं । णोवेक्खिउं समुचिओ समाणदोसप्पसंगाओ ॥ ६९ ॥ एवं मणे विमंसिय सव्वो
सद्दाविओ समणसंघो । कहिओ जहेस साहू धम्मरुई अज्ज कालगओ ॥ ७० ॥ एयारिसेण विहिणा नागसिरीए न सुंदरं
विहियं । जं एस भावसाहू तीए विणिवाइओ एवं ॥ ७१ ॥ निब्भग्गाणं दोहग्गियाण लोयाण मत्थयमणित्तं । नरगाइ-
याण दुक्खाण खाणिभावं च सा पत्ता ॥ ७२ ॥ ता एसो इह दोसो नागसिरीए न जुजए छन्नो । काऊणेवं भणिया
मुणिणो नयरीए मज्झम्मि ॥ ७३ ॥ तियचच्चराइठाणेसु दूरमुग्घोसणं वहुजणाण । पच्चक्खं कुणह जहा नागसिरीए

इमं चरियं ॥ ७४ ॥ भो भो कस्सवि दट्ठुं एसा जुज्जइ न यावि आलविउं । जं तद्दंसणकारी तत्तुल्लोच्चिय मुणेयव्वो ॥ ७५ ॥ तो ते मुणिणो वयणं गुरूण इय मुणिय नयरमज्झम्मि । ठाणे ठाणे एयं करेंति उग्घोसणं पयडं ॥ ७६ ॥ विन्नायवइयरेहिं निच्छूढा सा गिहाओ विप्पेहिं । नयरीए परिभमंती तियचच्चरमाईठाणेसु ॥ ७७ ॥ निंदिज्जंती खिंसिज्जंती हीलं परं उवलभंती । कालं गमेइ कत्थइ ठाणे गासं अपावंती ॥ ७८ ॥ सोलसवाहिपरिगया जीवित्तु मरित्तु छट्ठपुढवीए । उववन्ना उक्कोसगट्ठिईए उवट्टिउं मच्छो ॥ ७९ ॥ जाया जलंतजलणेण तहय सत्थेण तिक्खरूवेण । सव्वंगं दाहकरेण सव्वजम्मेसु हम्मंती ॥ ८० ॥ सव्वासु नरगपुढवीसु णेगवाराओ पाविउं जम्मं । तह अन्नेसुवि अइकुच्छणिज्जरूवेसु ठाणेसु ॥ ८१ ॥ किं वहुणा गोसालो पन्नत्तीए जहेव पन्नत्तो । भवदुक्खभायणं तह इमावि वच्चा निरवसेसं ॥ ८२ ॥ कालाओ अणंताओ इहेव दीवे पुरीए चंपाए । सागरदत्तस्स गिहम्मि सत्थवाहस्स भद्दाए ॥ ८३ ॥ भज्जाए उववण्णा धूया कुच्छिंसि मासनवगस्स । अंतम्मि पसूया मंखणंव सुकुमालकरचरणा ॥ ८४ ॥ विहियं नामं सुकुमालियत्ति पत्ता कमेण तारुन्नं । वम्महमहल्लभल्लेक्कभवणमइभूरिलावण्णं ॥ ८५ ॥ चेडीचक्कपरिवुडा अहन्नया ण्हायविहियसिंगारा । नियगेहस्सुवरितले निहालिया कीलमाणी सा ॥ ८६ ॥ जिणदत्तसत्थवाहेण तीए रूवम्मि जोव्वणगुणे य । विम्हयमुवागओ माणसम्मि एवं विचिंतेइ ॥ ८७ ॥ एयं मोत्तूणं सागरस्स भद्दाए अंगजायस्स । मम पुत्तस्स ण णूणं अण्णा भज्जा समुचियत्ति ॥ ८८ ॥ पुट्ठो समीववत्ती जणो जहा कस्स एस वरधूया । महिलाणं सयलाणं जा देहसिरिं समुप्फुसइ ॥ ८९ ॥ कहियं सागरदत्तस्स सत्थवाहस्स तो गिहं गंतुं । ण्हाओ कयसिंगारो नियपरियणपरिवुडो संतो ॥ ९० ॥ जेणेव गिहं

सागरदत्तस्स समुज्जुओ तओ गंतुं । दट्ठुं गिहमिज्जंतं तं सो सहसा समुट्ठेइ ॥ ९१ ॥ पुच्छइ सुहासणत्थं आगमणपओ-
यणं स तो भणइ । सुकुमालियाभिहाणा जा तुह धूया वरेउं तं ॥ ९२ ॥ नियनंदणस्स सागरनामस्स कए समाणरूवस्स।
अम्हे समागया इह समलावण्णाइगुणनिहिणो ॥ ९३ ॥ ता जइ जुत्तं पत्तं च भाइ ता किज्जउ इमं एवं । पत्थावविहडि-
याणं कज्जाण पुणो गई नत्थि ॥ ९४ ॥ भणिए जिणदत्तेणं सागरदत्तो तओ इमं भणइ । अम्हाण गिहंगणमागयाण
होज्जइ किमदेयं ॥ ९५ ॥ परमेक्का मे धूया उंबरपुप्फाउ दुल्लहा एसा । ण खणंपि तीए विरहं सहामि मणणयणदइयाए
॥ ९६ ॥ ता जइ तुह सागरओ मम गिहजामाउओ सुओ होइ । तो धूयं सुकुमालियमहं पइच्छामि नो इहरा ॥ ९७ ॥
गेहागएण भणिओ जणगेण स सागरो जहा वच्छ ! । जइ घरजामाया होसि लहसि सुकुमालियं धूयं ॥९८॥ तीए दढा-
णुराओ सयं तं सवहा पवज्जेइ । तो जिणदत्तो सवायरेण परमूसवं कुणइ ॥ ९९ ॥ सिवियाए पुरिससहसोचियाए आरु-
हिय सागरो ताहे । सागरदत्तस्स गिहं हरिसुल्लसिरो समणुपत्तो ॥ १०० ॥ तेणावि गोरवाओ महाविभूईए विहियस-
क्कारो । पडिवन्नो वीवाहं च कारिओ दारियाए समं ॥ १०१ ॥ जम्मि समयम्मि तीसे करफासो तस्स ईसि संजाओ ।
तप्पभिइं सिरसूलं सदाहजरमस्स उब्भूयं ॥ १०२ ॥ जह दारुणेण फणिणा अहवा जह विच्छुएण डक्कस्स । जह मुम्मु-
रामिसित्तस्स तह दुक्खं तक्खणं जायं ॥ १०३ ॥ लज्जाविलंघिओ तक्खणम्मि तुण्हिक्कओ ठिओ कहवि । पत्तम्मि सय-
णकाले सेज्जातलसंठियस्सेसा ॥ १०४ ॥ पक्खुहियरागजलही सव्वंगपसाहिया सणियसणियं । पासम्मि नुवन्ना अच्छरव्व
सग्गाओ ओइण्णा ॥ १०५ ॥ अह पुणरवि तीए अंगफासमुवलद्धुमागयविसाओ । चिंतेइ को खणो मज्झ होज्ज एईए

सो ताउ गेहाओ ॥१०७॥
विरहकरो ॥ १०६ ॥ तत्तो सुहपासुत्तं तं मोत्तुं उट्ठिऊण सेज्जाओ । मरणाउ विमुक्को वायसोव्व सो ताउ गेहाओ ॥१०७॥
दूरं पलाइओ सावि तक्खणं विहियनिद्दपामोक्खा । सागरमपासमाणी पवइया सव्वओ नियइ ॥ १०८ ॥ वासघरस्स
दुवारं विहालियं पासई मलक्खमणा । करयलपल्हत्थमुही विच्छायतणू विचिंतेइ ॥ १०९ ॥ न मए कओ अविणओ ण
यावि एएण बंधवजणेण । ता कत्तो मम दोहग्गदोसओ दूरगो जाओ ॥ ११० ॥ एवं झियायमाणा रुयमाणा विस्सरं
विलवमाणा । मुम्मुरगयव्व कहकहवि रयणिसेसं परिगमेइ ॥ १११ ॥ रयणीए पभायाए चेडिं सद्दाविउं भणइ जणणी ।
गच्छ वहूवरमुहधोवणियं खिप्पं उवणमेहि ॥ ११२ ॥ सोमालियासमीवे वासघरे सावि गच्छई जाव । पेच्छइ विलक्ख-
दिट्ठिं मणम्मि तं किंचि चिंततिं ॥ ११३ ॥ पुट्ठा कीस झियायसि तुमेवमिण्हिं भणाइ सा भद्द! । सो सागरओ सुत्तं मं
मोत्तुं कत्थइ गओत्ति ॥ ११४ ॥ सा उवलद्धवइयरा जणयाणं साहए जहावुत्तं । तो कोवमिसमिसंतो तज्जणओ सागर-
स्सुवरिं ॥ ११५ ॥ गच्छइ जिणदत्तगिहं भणाइ हंभो! किमेवमुचियंति । पुत्तस्स, जो अदोसं सहसा सोमालियं मुयइ
॥ ११६ ॥ नेयं कुलाणुरूवं न पत्तकालं न चेव जुत्तंपि । सुकुलीणाण जणाणं जं विहियं सागरेणज्ज ॥ ११७ ॥ एवं बहू-
वलंभे अइनिप्पिहमाणसो चिरं दाउं । जा चिट्ठइ एगंते ता सागरमाह इय जणगो ॥ ११८ ॥ दुट्ठ तए पुत्त! कयं घर-
जामाउयपयं पवज्जित्ता । सागरदत्तस्स गिहाउ निग्गओ जमिहमायाओ ॥ ११९ ॥ भणइ तओ सागरओ पियरमहं गिरि-
सिराउ पडणं व । सलिलपवेसं व विसस्स भक्खणं वा करिस्सामि ॥ १२० ॥ ण उणो सागरदत्तस्स मंदिरे इह भवे पवि-
स्सामि । सुकुमालियत्ति णामेण चेव सा ताय! विक्खाया ॥ १२१ ॥ जं तक्करफासेवि हु दाहजरो दारुणो महं जाओ ।

कुरुनरिओ निसुणइ तं सागरभासियं सव्वं ॥ १२२ ॥ मयमवि सागरदत्तो तत्तो लज्जापरो बहुं जाओ । नियधूयाए दोह ग्गमरगलं एरिसं सोउं ॥ १२३ ॥ जिणदत्तगिहाओ निक्खमेइ गेहे नियम्मि गंतूण । सुकुमालियं नियंके निवेसिउं एरिसं भणइ ॥ १२४ ॥ अविणयपरेण किं ते सागरएणं वरेण कज्जंति? । तस्स मए दायव्वा मणप्पिया जस्स तं होसि ॥ १२५॥ कन्नामओवमेहिं खणं समासासिउं स वयणेहिं । सट्ठाणम्मि विसज्जेइ अन्नया गेहउवरितले ॥ १२६ ॥ अवलोयंतो आसा- मुहाइं पासइ स रायमग्गम्मि । एगं दमगं परिसडियवसणमहखंडघडहत्थं ॥ १२७ ॥ सद्दाविउं नियगेहे तं भासइ किं करे जहा एयं । असणाइणोवलंभेह कुणह तह परमनेवच्छं ॥ १२८ ॥ जं पुण तं नेवच्छं जो खंडघडो य तस्स एगंते । ठाविंति ते, महग्घाभरणालंकारओ विहिओ ॥ १२९ ॥ दिन्ना तस्स सगउरवमेसा भज्जत्तणेण दमगस्स । राओ कडवयारे वासघरे तं पवेसंति ॥ १३० ॥ सुकुमालियाए सेज्जातलम्मि जा चवललोयणो संतो । पासम्मि नुवन्नो तीए देहसंफास- दोसाओ ॥ १३१ ॥ सयंगुप्पन्नजरो ता चिंतइ नूण मज्झ मरणकए । उवणीया एसा निन्निमित्तवेरेण एएण ॥ १३२ ॥ जाव न पच्चासन्नो मच्चू मे होइ अंगफासाओ । एईए जलणजलणोवमाए दोहग्गभरियाए ॥ १३३ ॥ लहुमेवावक्कमणं जुज्जइ णेवत्थमप्पणो मोत्तुं । खंडघडगं च मोत्तुं सुत्तं तं दूरमोसरिओ ॥ १३४ ॥ पडिबुद्धा जा तंपिय न पेच्छइ ताव इय चिंतेइ । एसोवि गओ दोहग्गदोसओ तणुगयाओ ममं ॥ १३५ ॥ उवलद्धवइयरेणं पिउणा संभासिया पभायम्मि । पुत्ति! न कस्सइदोसो सकम्ममवरज्झए नवरं ॥ १३६ ॥ ता जह इय कम्मखओ संपज्जइ तह जएह दाणम्मि । समणाण माहणाणं दीणाणाहाइयाण तहा ॥ १३७ ॥ सा पिउणाणुण्णाया सूरुदयाओ निरंकुसा संती । जा तस्सत्थमणखणो

ता देइ निरंतरं दाणं ॥ १३८ ॥ एवं कालम्मि गए केवइए सुवया वहुसुयाओ । अइनिम्मलसीलकरेणुसुदिढआलाणखंभाओ ॥ १३९ ॥ तत्थ समोसरियाओ गोवालियनामिगाओ अज्जाओ । समए विहरंतीणं तासिं संघाडिगा एगा॥१४०॥ तीए गिहम्मि पविट्ठा सम्मं पडिलाभिउं सवहुमाणं । पडिया पाएसु कयंजली य विन्नविउमारद्धा ॥ १४१ ॥ अहममणामा जाया सागरगस्सा पइव्वया संती । तह अन्नस्सवि देज्जा जम्मदमगस्सवि, तओ मे ॥ १४२ ॥ काउं पसायमोसहमन्नं वा मंतमाइ तं कुणह । जस्साणुभावओ हं सुभगा होहामि नियपइणो ॥ १४३ ॥ तव्वयणाणंतरमेव ताओ कन्नेपिहित्तु पभणंति । भद्दे! अयाणुगाओ एयस्स तहा अणुचियाओ ॥ १४४ ॥ अम्हाणं कोसल्लं समत्थि सत्थेसु धम्मविसएसु । ता जइ भणसि कहिज्जइ तुज्झं जिणदेसिओ धम्मो ॥ १४५ ॥ कहिओ सवित्थरो सो सम्मं संवोहमागया ताहे । जाया सुसाविया तह पिउणोऽणुन्नाए पव्वइया ॥ १४६ ॥ इरियासमियाईओ समिईओ पंच तिन्नि गुत्तीओ । मणगुत्तिमाइयाओ जणणिव्व पवज्जए तत्तो ॥ १४७ ॥ अइगुत्तवंभचेरा खंता दंता तहा समुवसंता । सीलंगाण सहस्से अट्ठारस दुद्धरे धरइ ॥ १४८ ॥ आसन्नयाओ गोवालियाओ अज्जाओ वंदिउं भणइ । तुब्भेहिं अणुन्नाया इच्छामि सुभूमिभागस्स ॥ १४९ ॥ उज्जाणस्स अदूरे च्छट्ठंछट्ठेण निच्चरूवेण । तवकम्मणा परिगया सूराभिमुही पयावेउं ॥ १५० ॥ तो अज्जाओ ताओ भासंति न जुज्जए इमं अज्जे! । अम्हं काउं गामाइयाण वाहिं जमुस्सग्गो ॥ १५१ ॥ अंतो उवस्सयस्सा वइपरिखित्तस्स पाउयतणूण । समपायतलाणं समुचियम्ह आयावणं काउं ॥ १५२ ॥ तं वयणमवगणेउं जहिच्छमायावणं तओ काउं । पारद्धा अह कइयाइ देवदत्तेत्ति णामेणं ॥ १५३ ॥ वेसा पंचनिसेवगपुरिसोवगया सुभूमिभागस्स । उज्जाणस्स

मंता लच्छीविच्छुमिक्खेइ ॥ १५४ ॥ तीसे तेसुं पंचसु जणेसु सिरिसेहरं रयइ एगो । एगो चंपइ पाए एगो छत्तं सिरे धरइ ॥ १५५ ॥ एगो चमरुक्खेवं करेइ उच्छंगियं कुणइ एगो । तं सोहग्गपगरिसं पत्तं दट्ठुं विचिंतेइ ॥ १५६ ॥ दुहगाए मज्झ एगोवि मागरो सायरो ण संजाओ । एईए पुण एवं पंच इमे सायरा जाया ॥ १५७ ॥ ता एईए सुलद्धो जम्मो जीयं च सफलं जायं । नियसोहग्गमडप्फरवसाउ इच्छाए जा चरइ ॥ १५८ ॥ जइ मे तवस्स नियमस्स अस्स फलमत्थि तो अहं होज्जा । नियसोहग्गोनामियनिस्सेसमहेलियावग्गा ॥ १५९ ॥ एवं विहियनियाणा किंची सोहग्गमेत्थमवत्ती । लग्गा सरीरवत्थाइयाण पक्खालणविहीए ॥ १६० ॥ भणिया गणिणीइ न सबहेव तुह सुंदरं इमं काउं । एवं चरित्तभंगो तुह चेव तहा पराणं पि ॥ १६१ ॥ अन्नं च दारुणफलो एसो जम्मंतरम्मि तुह होही । ता धम्मसीलसुकुलुग्गवाए तुह जुज्जए नेयं ॥ १६२ ॥ एवं अणेगवारे पण्णत्ता चोयणं असहमाणा । नियउवगरण समेया भिन्नम्मि उवस्सयम्मि ठिया ॥ १६३ ॥ पासत्थाईण पमत्तयाण साहूण जाणि ठाणाणि । ते सेविउं पवत्ता ण उण अहछंदठाणाणि ॥ १६४ ॥ नामाणि वहूणि तहाविहेण विहिणा विहारमायरिउं । पक्खपमाणमणसणं काउं चरिमम्मि कालम्मि ॥१६५॥ उववण्णा ईसाणे गणियादेवित्तणेण पल्लाइं । णव तीए परममाउं कालेण तओ चइत्ताणं ॥ १६६ ॥ एत्थेव जंबुदीवे भरहे पंचालजणवए सुपुरे । कंपिल्ले नरवइणो दुवयस्स पियाए देवीए ॥ १६७ ॥ चुलणित्तिणामिगाए कुच्छीए दारिगा समुप्पण्णा । धट्ठज्जुणजुवरण्णो कणिट्ठिया सोदरा भगिणी ॥ १६८ ॥ दुवयस्स अंगजाया एसा धूया जओ तओ नामं । समयम्मि पगत्थे दोवइत्ति संठावियं तीसे ॥ १६९ ॥ सा चंदकलव्वसिए पक्खम्मि पइक्खणं पवड्ढंती । पत्ता तारुण्णमण-

ण्णतुल्लमह पेच्छिउं जणगो ॥ १७० ॥ परिभावेइ ण रूवेण जोव्वणेण व समाऽपरा एत्थ । इत्थी समत्थियाए तुलिय सुर-रमणिरूवाए ॥ १७१ ॥ उचिओ सयंवरो काउमेवमेसा परं सुही होइ । तो नियअंकम्मि निवेसिऊण सो दोवइं भणइ ॥ १७२ ॥ वच्छे ! सयंवरविहीए वरसु जो रोयए वरो तुज्झ । तत्तो बारवईए कण्हस्साकारणनिमित्तं ॥ १७३ ॥ निय-परियणजुत्तस्सा दूयं तप्पढमयाए पेसेइ । तइया तस्स दसारा समुद्दविजयाइया दस ओ ॥ १७४ ॥ पंच महावीरा मुस-लपाणिपमुहा तहुग्गसेणाई । सोलस रायसहस्सा अद्धट्ठ कुमारकोडीओ ॥ १७५ ॥ पज्जुण्णमाइयाओ संबाईयाण सट्ठिं सहसाणि । दुद्दंतकुमाराणं सव्वत्थऽनिवारियगईणं ॥ १७६ ॥ सहसाणि एक्कवीसं वीराणं वीरसेणपमुहाणं । महसेणाइब-लीणं छप्पन्नं तह सहस्साणि ॥ १७७ ॥ अन्ने तलवरईसरमाडंवियपभिईओऽणेगगुणा । गंतुं कयंजली सो दूओ पणमित्तु इय भणइ ॥ १७८ ॥ कंपिल्लपुरे रण्णो धूया दुवयस्स दोवईनामा । दिन्नो सयंवरो से पिउणा ता तस्स पत्थणया ॥१७९॥ काले विलंबहीणं कंपिल्लपुरस्स बाहिदेसम्मि । नियनियरिद्धिसमेया सपरीवारा समोसरह ॥ १८० ॥ हत्थिणपुरम्मि रण्णो पंडुस्स सनंदणस्स एमेव । दूयं दुइज्जयं पेसवेइ तइयं च चंपाए ॥ १८१ ॥ कण्हस्स अंगरण्णो, चउत्थयं पंचसोयरस-यस्स । सोत्तिमईए पुरीए रन्नो सिसुपालनामस्स ॥ १८२ ॥ पंचमयं दमदंतस्स राइणो हत्थिसीसनयरम्मि । छट्ठं महुराए पुरीए राइणो धरभिहाणम्मि ॥ १८३ ॥ सत्तमयं रायगिहे सहदेवसनामगस्स भूवइणो । अट्ठमयं कोडिण्णे पुरम्मि भेस-गनिवसुयस्स ॥ १८४ ॥ नवमं कीयगरण्णो विराडदेसे सभाउयसयस्स। सेसाण भूमिपालाण सेसनयरेसु दसमं तु ॥१८५॥ तस्साहवणेण सगउरवेण ते तूरमाणमणपसरा । समगं कंपिल्लपुरे गंगातीरे विसालम्मि ॥ १८६ ॥ कयसिबिरसं निवेसा

सुरयनिम्मवियनिवासठाणेसु । पक्खुभियजलहिकल्लोलतुलसत्ताठिया सव्वे ॥ १८७ ॥ उत्तुंगथंभसंभारभासमाणं करावए राया । तीए सयंवरमंडवमुद्दंडपडागसयसहियं ॥ १८८ ॥ रयणमय भूरितोरणमइरम्मयसालिभंजियाकलियं । बहुमत्तवारणं वारणाण दसणेहिं निम्मवियं ॥ १८९ ॥ अह वासरे पसत्थे दोवइकण्णं समं समीहंता । रूढक्कमेण सव्वे नराहिवा तत्थ उवविट्ठा ॥ १९० ॥ सावि य ण्हाया कयसिंगारा गिहचेइएऽभिवंदित्ता । पुव्वुत्तरोहिणीकन्नगव्व अह तत्थ संपत्ता ॥ १९१ ॥ सक्खं अपासमाणा कस्स वि सा राइणो वयणकमलं । ता दप्पणतलसंकंतमेवमालोइउं लग्गा ॥ १९२ ॥ जं जं पेच्छइ सो सो न रोयए जा गया निविट्ठाण । पंचण्ह पंडवाणं पुरओ दिट्ठेसु तेसु कमा ॥ १९३ ॥ नो अग्गओ न पच्छावि गंतुमेसा सहावओ झत्ति । पुव्वनियाणवसाओ तेसिं खंधे खिवइ मालं ॥ १९४ ॥ तो जायपमोयभरा वसुदेवाई नराहिवा सव्वे । उच्छालियतुमुलरवा भणंति अवो! सुवरियंति ॥ १९५ ॥ धन्नो दुवओ धन्ना य चुलणिया जेसिमंगजाया । नरपवरा भत्तारा समगं चिय पंचसंपन्ना ॥१९६॥ विहिए पाणिग्गहणे सुवण्णकोडीओ अट्ठ दुवयनिवो । रुप्पस्स तहा वियरइ धूयाए दोवईए तया ॥ १९७ ॥ विहिउत्तमसक्कारा तो तेण विसज्जिया पुहइवाला । विम्हियहियया सव्वे नियनियठाणेसु संपत्ता ॥ १९८ ॥ पंचहिं सुएहिं वहुयाइ दोवईए वहुं विरायंतो । एत्तो नियम्मि नयरे दुवएण विसज्जिओ पंडू ॥ १९९ ॥ ते पंच पंडवा दोवईए देवीइ वारगवसेण । भोगे उदाररूवे दिणाणि भुंजंतगा निंति ॥ २०० ॥ कइयावि पंडुराया जुहिट्ठिराईहिं पंचहिं सुएहिं । कुंतीए दोवईए परिगओ चिट्ठइ निसन्नो ॥ २०१ ॥ अंतेउरस्स अंतो ता रणकंदप्पिओ कुओ वि तहिं । नारयमुणी समायाओ दंसणेणं अइपसन्नो ॥ २०२ ॥ अंतो अइकलुसमणो वाहिं मज्झत्थयं परं

पत्तो । कालमिगचम्मवत्थो वरदंडकमंडलूहत्थो ॥ २०३ ॥ जन्नोवइयगणित्तियजुत्तो नवमुंजमेहलाणुगओ । वीणागंधव्वपरो सदक्खिणं कलहमिच्छंतो ॥ २०४ ॥ दट्ठु तमेज्जमाणं पंडू ससुओ सकुंतदेवीए । अब्भुट्ठिओ पयक्खिणसारं वंदइ नमंसइ य ॥ २०५ ॥ दिण्णम्मि आसणे उदगबिंदुपरिफोसियाए भिसियाए । दब्भतणोवरी पच्चत्थुयाए आसीणओ संतो ॥ २०६ ॥ अंतेउरपरिवाराओ कोसलवत्तं स पुच्छए जाव । ता दिट्ठा नियपडिवत्तिपरंमुहा दोवई देवी ॥ २०७ ॥ एसो मिच्छद्दिट्ठी असंजओ वा ण कप्पए मज्झ । एयस्स पणामाई काउं इय सा ठिया एवं ॥ २०८ ॥ सो तं तहट्ठियं पासिऊण रोसाउरो विचिंतेइ । पंचण्ह पंडवाणं लाभा दप्पुद्धरा पावा ॥ २०९ ॥ सुबहूण सवत्तीणं मज्झे तह कहवि पक्खिवेयव्वा । ईसामहल्लसल्लेण सल्लिया जह दुहं हियइ ॥ २१० ॥ तत्तो समुप्पइत्ता धाईसंडम्मि भारहेवासे । नयरीए अमरकंकाए पउमनामस्स नरवइणो ॥ २११ ॥ गंतुं पासे तेणं पणामियं गेण्हए तओ अग्घं । अंतोअंतेउरसंठिएण सो पुच्छिओ तेण ॥ २१२ ॥ जारिसयं मह एयं किं अन्नस्सावि कस्सई अत्थि । तारिसयं अंतेउरमीसि हसंतो स ओ भणइ ॥ २१३ ॥ जह कूयदद्दुरो जम्मओ वि अनिहालिओदहिजलोहो । मन्नइ अन्नं नो किंपि अत्थिएत्तो महं नयरं ॥ २१४ ॥ एवं तुमंपि अंतेउराइं अन्नाण भूमिनाहाण । अनिहालंतो मन्नसि मज्झंतेउरसमं न परं ॥ २१५ ॥ जंबुद्दीवे भारहवासे नयरम्मि हत्थिणागम्मि । पंडुस्स राइणो पंडवाण पचण्ह जा जाया ॥ २१६ ॥ नामेण दोवईए पायंगुट्ठंपि नो इमं भवइ । तह तियसासुरखेयरनारीओ सुंदराओवि ॥ २१७॥ जं दुल्लहं च दूरे य जंच जं जं परेसिमायत्तं । तम्मि जणो रायपरो पाएण न इयररूवम्मि ॥ २१८ ॥ इय से तव्वयणायण्णणेण जलणोव्व पवलपवणेण । उच्छालिओ सुतिव्वो मयणो कयनिब्भरु-

म्माहो ॥ २१९ ॥ तो पुव्वसंगयामरपणिहाणपरो स अट्ठमं कुणइ । तप्पज्जंते सयमेव भणइ स सुरो पउमनाहं ॥ २२० ॥
उचियं जं ते काउं तं भासह तो भणाइ सो एवं । जंबुद्दीवाओ भारहाओ हत्थिणपुराउ तहा ॥ २२१ ॥ पंचण्हं पंडवाणं
घरणिं दुवयस्स अंगसंभूयं । भुवणंगणापहाणं इच्छामी दोवईदेविं ॥ २२२ ॥ इहमाणीयं तो भणइ एस एयं कयाइ नो
होइ । जं पंचपंडवे वज्जिऊण सा अन्नमभिलसइ ॥ २२३ ॥ तुह पुण पियसंपायणहेउं तं इण्हिमेत्थ आणामो । सुत्तं जुहि-
ट्ठिरेणं मद्धिं राओ स अवहरइ ॥ २२४ ॥ आणेइ पउमनाहस्स मंदिरे तं असोगवणियाए । ठावेइ साहिउं जहवुत्तं निय-
ठाणमणुसरइ ॥ २२५ ॥ सा तक्खणं पवुद्धा जा नियइ पलोयए ण तं भवणं । णो उववणं विलक्खा चिंतइ हीही किमे-
यंति ॥ २२६ ॥ देवेण दाणवेण व कस्सइ भूमीवइस्स गेहम्मि । अहमाणीया कहमन्नहा खणा एरिसं जायं ॥ २२७ ॥
पउमोवि निवो ण्हाओ कयसिंगारो सहोवरोहेण । जेणेव दोवई जाइ जाव ता तं निहालेइ ॥ २२८ ॥ ओहयमणसंकप्पं
भणिया सा तेण कूरसि किमेवं? । तं पुव्वसंगएणं सूरेण मम हेउमाणीया ॥ २२९ ॥ ता भद्दे! रमसु ममं एसो सव्वो वि ते
परिवारो । तो भणइ दोवई मम कण्हो पियभाउगो अत्थि ॥ २३० ॥ बारवईए पुरीए सो जइ मासाण छण्हमारेण । न
कुणेइ मज्झ तत्तिं तो तं जं भणसि तं काहं ॥ २३१ ॥ तेणावि य पडिवन्नं कन्नंतेउरगयं तयं कुणइ । अंबिलपग्गहिएणं
छट्ठेणगया अमुक्केण ॥ २३२ ॥ तवकम्मणा परिगया सा धीरा तत्थ ठाइउं लग्गा । एत्तो मुहुत्तमेत्ता जुहिट्ठिलो जाव
जागरिओ ॥२३३॥ ताव न पेच्छइ सेज्जायलम्मि देविं ससंभमो ताहे । मग्गणगवेसणं सवओवि तो काउमारद्धो ॥२३४॥
अलहंतेण पभाए निवेइओ रयणिवइयरो अन्नो । नियकिंकरविणिओगेण तेण सव्वम्मि तम्मि पुरे ॥ २३५ ॥ आघोसणा-

पुरस्सरमुत्तं जो दोवइं लहइ देविं । तस्स पसायं सुमहंतमहमकाले करिस्सामि ॥ २३६ ॥ जाव कहिंवि न लद्धा पुरेसु गामेसु वा तओ कुंती । भणिया कण्हसमीवे वारवईए तुमं गच्छ ॥ २३७ ॥ कण्हस्स एयमट्ठं साहेसु निवेण पंडुणा भणिया । गयखंधगया चलिया कण्हाभिमुहं लहुं एसा ॥ २३८ ॥ वारवईए पुरीए पत्ता बहुगउरवेण पडिवन्ना । कण्हेण पुच्छिया भणसु किमिहमागमणकज्जंति ॥ २३९ ॥ पुत्त ! निसाए जुहिट्ठिरपासे सेज्जायले सुहपसुत्ता । केणावि दोवई अवहरित्तु नीया कहंचित्ति ॥ २४० ॥ ता जह तीए पउत्ती लब्भइ तह ज्झत्ति कुणसु तं जुत्तं । तत्तो को अन्नो एरिसम्मि कज्जे सहो अत्थि ॥ २४१ ॥ इय भणिए कुंतीए तक्खणसंजायपोरिसुक्करिसो । पायालाओ सुरलोगओ व सलिलालयाओ वा ॥ २४२ ॥ जह उवलभामि तह मे जइयव्वं मेवमग्गओ तीसे । कुणइ पइण्णं अम्मो ! चिट्ठह वीसत्थया तुब्भे ॥ २४३ ॥ सक्कारयित्तु सम्माणयित्तु तं गयउरे विसज्जेइ । गहिया गवेसणा सव्वओवि नो जाव उवलभइ ॥ २४४ ॥ तो नारओ कयावि हु समागओ वासुदेवभवणम्मि । अग्घप्पयाणपुव्वं तेणवि बहुगउरवपरेण ॥ २४५ ॥ पुट्ठो सुहासणत्थो हरिणा नियगेहकुसलपसिणपरो । दिट्ठा सुया व कत्थइ भयवं ! तुमए रइहराओ ॥ २४६ ॥ अवहरिऊणं नीया देवी दुवयंगया सुहपसुत्ता । राओ समं जुहिट्ठिररण्णा केणवि अणज्जंती ॥ २४७ ॥ ता ईसिहसिरवयणेण तेण भणियं न एरिसेसु ममं । अहिगारो अत्थि परं तुहोवरोहा भणामि जहा ॥ २४८ ॥ सा अन्ना वा किमु होज्ज एत्थ मे निच्छओ न कोइत्ति । दिट्ठा तीए सरिच्छा एगा नारी विवन्नमुहवन्ना । भूमीनिहित्तनयणा पासेवि गयं अपेच्छंती ॥ २४९ ॥ परममरकंकनयरीए पउमनाहस्स भवणम्मि ॥ २५० ॥ भणियं हरिणा ताहे तुमए उट्ठाविओ कली एस । आगासगामिविज्जं सरिउं सो

दंसणीहूओ ॥ २५१ ॥ तो दूयपेसणेणं निवेइयं पंडुणो गयउरम्मि । जह दोवईए लद्धा कुसलसरीराए मे वत्ता॥२५२॥
तो पंचवि नियपुत्ता चउरंगबलाणुगा तडम्मि जहा । पुव्वसमुद्दस्सा ओयरंति तह तं लहुं कुणसु ॥ २५३ ॥ कण्होवि पड-
हद्दंदुहिमद्दाऊरियदिसिंतरा भोगो । सयनियपरियणजुओ पुरीए सहसा विणिक्खंतो ॥ २५४ ॥ पुव्वजलहिस्स वेलाउलम्मि
पंचहिं मुणीहिं पंडुस्स । जाओ समागमो सिबिरसनिवेसं तहिं कुणइ ॥ २५५ ॥ सो तत्थ कुणइ पोसहसालं तवमट्ठमं
गमलेइ । सुत्थियदेवं चित्ते काउं जा चिट्ठइ तयंते ॥२५६॥ ता सो लवणाहिवई हरिणो पच्चक्खदंसणीहूओ । भणइ मए
कायव्वं तं तुज्झ निवेयसु तयंति ॥ २५७ ॥ कण्हो पभणइ देवी संहरिया पउमनाहभूवइणा । गेहम्मि अमरककाए दोवई
तीए कूवकए ॥२५८॥ पंचण्ह पंडवाणं छट्ठस्स ममं रहा जहा जंति । लवणोदहिजलमज्झे तहा पहं लहु ममं देसु ॥२५९॥
पडिभणियं तेण जहा किमेत्तिएणं समेण ते कज्जं । एत्थवि ठियस्स जह सा हत्थगया होइ तह काहं ॥ २६० ॥ तं पउम-
नाहगयं सपुरं च सपरियणं च सबलं च । लवणोदहि सलिलगयं काहं जइ मं तुमं भणसि ॥ २६१ ॥ कित्तियमेत्ता सत्ती
तस्स नराहिवपमुस्स, मे काउं । जुत्तं तीए परिक्खणमाणेमि तओ सयं चेव ॥ २६२ ॥ इय हरिवयणायन्नणपरेण सलिलं
विहाडिउं तेण । दिण्णो पहो रहाणं कण्हं तो जलहिसलिलस्स ॥ २६३ ॥ मज्झं मज्झेण विईवइत्तु पत्ता पुरिं अवरकंकं ।
अग्गुज्जाणम्मि रहे ठवित्तु विसंतगा जाया ॥ २६४ ॥ दारुयनामं सारहिमह कण्हो सद्दिउं इमं भणइ । गच्छं तुमं नगरंतो
भणाहि पउमं पुहविपालं ॥२६५॥ पाएण पायवीढं हणेत्तु कुंतग्गसंगयं लेहं । उवणेत्तु दोवईए कूवग्गाहा पईवंच ॥२६६॥
एठो य वासुदेवो समागओ दोवइं समप्पेसु । अन्नह संगामपरो भवसु लहुं नन्नहा मोक्खो ॥ २६७ ॥ किमिदं तए न

नायं जह दुवयसुयाए भाउगो कण्हो । रणकम्मसतिण्हो जस्स नत्थि भुवणेवि कोवि समो ॥ २६८ ॥ इय सो हरिणा भणिओ घेत्तुं सप्पणयमाणमह चलिओ । तं अमरकंकनयरिं पइ पत्तो रायभवणम्मि ॥ २६९ ॥ दूयजणोचियविणए विहिए भणियं जहेस मह विणओ । मम सामिणो पुण इमो पाएण तदासणं हणइ ॥ २७० ॥ कुंतग्गेण पणामइ लेहं तो पउमनाहनरवइणा । दंडिकिओ समाणो तमवद्दारेण नीणेइ ॥ २७१ ॥ भणइ य पच्चप्पिणणस्स हेउमेसा मए न आणीया । ता जइ रणेण कज्जं सज्जो एज्जामि कहसु तुमं ॥ २७२ ॥ परभूमिमागओ सो अहं सभूमीए संठिओ बलवं । एसो अप्पपरियरो अहमेत्थ पभूयपरिवारो ॥ २७३ ॥ इय चिंतिय चउरंगाए संगओ रणसहाए सेणाए । गयखंधगओ नयराओ रोसरत्तो स नीसरइ ॥ २७४ ॥ हरिणाओ ते पंचवि पंडुसुया भासिया किमिह कज्जं । ते भासंति जहज्जं अम्हे व इमे व नो होज्जा ॥ २७५ ॥ णाणाविहेहिं आउहसएहिं संपन्नविहियरहगब्भा । आओहणं पवन्ना सन्ना य खणेण संजाया ॥ २७६ ॥ वहुपउमनाहसेणामुच्चंतविचित्तसत्थनिवहेण । छिन्नज्झयसत्तमउडा सरछिद्दतणू पराहुत्ता ॥ २७७ ॥ विहिया हरिपासगया भणंति अवो ! महाबलो एस । वज्जरइ हरी तुब्भे जइ निच्छियभासगा होउं ॥ २७८ ॥ अज्ज वयं न उ पउमो होमो इय जुद्धमणुसरंता तो। दुज्जयविजियविपक्खा सियकित्तिपयं परं हुंता ॥ २७९ ॥ पेच्छह अज्ज न पउमो अहमेव भवामि भासिउं एवं । वयणपवणेण पूरइ पंचजण्णं महासंखं ॥ २८० ॥ तो तस्स रवेण हओ सुत्तो मत्तोव्व तक्खणा जाओ । तस्स वलस्स तिभागो तत्तो धणुदंडमामुसइ ॥ २८१ ॥ तस्स पणुच्चाटंकार सद्दबहिरीकओ दुइज्जोवि । भागो जाव असत्थोदिट्ठो पउमो तओ नट्ठो ॥ २८२ ॥ तियनयरीए पविट्ठो दारपिहाणं च निट्ठरं विहियं । विहिया रोह-

गमना नयरी कण्हो महल्डो ॥ २८३ ॥ पागारपरिसरे गंतुमोयरेऊण नारसिंहतणू । सज्जो विउव्वई पायदद्दरं तह करेइ नहा ॥ २८४ ॥ दलदलियसुरालयसिहरभारभज्जंतमेइणीवीढा । खुब्भंततुंगपासायमंडला सा पुरी जाया ॥ २८५ ॥ कयपाण मंनओ ने किंचिदुवायं परं अपासंतो । दुवयसुयाए समीवे गंतुं दीणाणणो भणइ ॥ २८६ ॥ तुह कुवियाए फलमिमं दिट्ठं एत्तो मए उ किं कज्जं । सा भणइ ममं घेत्तुं कण्हस्स पुणो समप्पेसु ॥ २८७ ॥ सप्पुरिसाण अमरिसो पणामपज्जंतओ जओ होइ । एवं कयम्मि जीयं रज्जं च अगंजियं होही ॥ २८८ ॥ ण्हायनिवेसियसुइवत्थ जुवलओ दोवइं पुरो काउं । गंतु पाए अभिवंदिऊण एवं खमावेइ ॥ २८९ ॥ दिट्ठो परक्कमो तुम्हमेवमच्चब्भुओ पुणो नाहं । एवं कयाइ काहं खमणिज्जो मेऽवराहोऽयं ॥ २९० ॥ निज्झाडियगव्वं सव्वहेव काउं स पउमनरनाहं । नियनयरीए विसज्जइ सयं रहारूढओ घेत्तुं ॥ २९१ ॥ दुवयसुयं पंडुसुया जेणेव उवेइ तं समुप्पइय । नियनयरिं पइ चलिओ स अप्पछट्ठो छहिं रहेहिं ॥ २९२ ॥ जम्मि समयम्मि संखो हरिणा मुहवायपूरिओ विहिओ । चंपापुरीए तब्भरहअद्धराया कविलनामा ॥ २९३ ॥ आसि तहा मुणिसुव्वय नामा अरिहा समोसढो वाहिं । धम्मं तदंतिए सो सुणेइ तह संखसद्दं च ॥ २९४ ॥ ताहे विलक्खाओ सो चिंतेइ दुइज्जओ हरी किमिह । उप्पन्नो जं नन्नो इयरस्सिइ पंचजन्नाओ ॥ २९५ ॥ भणियं जिणेण नेयं भूयं न भविस्सई नया भवइ । जिणचक्किहराईया जमेगखेत्ते दुवे होंति ॥ २९६ ॥ जंबुदीवगभारहवासाओ हत्थिणागनयराओ । सुणहा पंडुस्स सुयाण भारिया एत्थ पंचण्हं ॥ २९७ ॥ आणीया पुव्वावज्जिएण देवेण पउमनाहकए । तो वारवइ-

---

१ ग. 'निज्झाडियगव्व' ।

पुरीओ समन्निओ पंडुतणएहिं ॥ २९८ ॥ कण्हो तीए गवेसणहेउं नयरीए अमरकंकाए । सिग्घं समागओ तेण समगमिह समरपारंभे ॥ २९९ ॥ लग्गे पवाइओ पंचजन्ननामा इमो महासंखो । तव्वयणसवणओ दंसणत्थमह सो समुट्ठेइ ॥ ३०० ॥ वुत्तो जिणेणमह सुवएण नेयं कयाइ संभवइ । जं दुन्नि जिणा चक्की हरी बला वा इह मिलंति ॥३०१॥ तहवि तुहं हरिणो तस्स छत्तझयचिंधदंसणं होही । तक्खणमेव गयगओ पत्तो वेलाउले नियइ ॥ ३०२ ॥ लवणोदहिमज्झगयस्स तस्स दट्ठुण ताइं बहुहरिसो । चिंतइ नियतुल्लपहाणपुरिसदंसणमिमं जायं ॥ ३०३ ॥ मुहपवणपूरियं तो करेइ सो पंचजन्नमियरोवि । एवं चिय सद्दायन्नणेण ते दोवि किल मिलिया ॥ ३०४ ॥ कविलेण पउमनाहो महावराहोत्ति कट्टु निव्विसओ । आणत्तो तप्पुत्तो अहिसित्तो तस्स रज्जम्मि ॥ ३०५ ॥ ते लवणजलहिमइलंघिऊण दोलक्खजोयणविसालं । पत्ता महानईए गंगाए पवेसमग्गंपि ॥ ३०६ ॥ हरिणा ते पंडुसुया भणिया गंगं समुत्तरह तुब्भे । पासामि जाव सोत्थियसुरमुदहिपइं खणं एक्कं ॥ ३०७ ॥ णावाए गवेसणमायरेण काऊण ते तदारूढा । जा उत्तरंति ता तेसिमण्णमण्णं समुल्लावो ॥ ३०८ ॥ जाओ, महाबलो एस ताव कण्हो पहू समुत्तरिउं । गंगं न वत्ति कुणिमो परिक्खणं ठावणेण इहं ॥३०९॥ नावाए, तीरपत्ता सकोउगा जाव तत्थ चिट्ठंति । ताव हरी बाहाए घेत्तूण रहं ससारहियं ॥३१०॥ एगाए अन्नाए पारद्धो दुद्धरं तरिउं गंगं । ता जाव मज्झभागे नईए बाढं परिस्संतो ॥३११॥ गंगादेवी थाहं रएइ विस्संतओ तओ चलइ । तीरं पत्तेण निहालिऊण इय पंडवा भणिया ॥ ३१२ ॥ तुब्भे महाबला भो! जमकिच्छेणं णइं समुत्तिन्ना । अहमच्चंतकिलेसेण एयं तत्तीरमणुपत्तो ॥ ३१३ ॥ नावाए सामि! अम्हे गंगं उत्तिण्णगा परं तुम्हं । सामत्थपरिक्खणकोउगेण एसा इहं ठविया ॥ ३१४ ॥ जल-

नागश्रिया-
उत्तरजन्म-
(द्रौपदीच-
रितम्)—

॥ ३०७ ॥

गरुरायवियंभियकोवेण जणद्दणेण तो भणियं । दंसेह मज्झ परिक्खा कज्जइ घी ! तुम्ह चरियमिणं ॥ २१५ ॥ जइया स पउमनाहो संगामसिरम्मि निप्फुरो विहिओ । भग्गा य अमरकंका तया परिक्खा न मे विहिया ॥ २१६ ॥ अब्भुग्गलोह-दंडेण तेण तेसिं रहा मरोमेण । परमाणुनिविसेसा जहा तहा चुण्णिया जाया ॥ २१७ ॥ निव्विसया आणत्ता अह हरिणा नियमसिबिरसंजुत्ता । ते गंतूण गयउरे पंडुस्स सव्वमाहंसु ॥ २१८ ॥ तेणवि कुंती कण्हंतियम्मि तक्कालमेव पेसविया । भणिया जहा पसन्नो एसो होइत्ति तह जयसु ॥ २१९ ॥ सप्पणयं तह तह भासिओवि जइया न रोसमुज्झेइ । भणियं कुंतीए तया भरहद्धमिमं तुहायत्तं ॥ २२० ॥ ता कत्थ जंतु ते कहसु संपयं अप्पणा तुमं चेव । कोमलहियएणुत्तं दाहि-णजलहिम्मि तीरम्मि ॥ २२१ ॥ तो हत्थिणाउराओ सपरियणा तत्थ गंतु विरयंति । पंडुमहुराभिहाणं नगरिं कंचित्ति निरुवायं ॥ ३२२ ॥ ते विउलभोगभायणमेत्थवि जाया परूढरज्जभरा । अह दोवई कयावि हु पगब्भगब्भा समुब्भूया ॥ ३२३ ॥ मासाण नवण्हमइक्कमम्मि दारयमुदाररूवधरं । सुकुमालपाणिपायं निरोगतणुं पसूयत्ति ॥ ३२४ ॥ निव्वत्तवार माहस्स तस्स नामं इमेरिसं विहियं । जं पंचपंडवसुओ होइ इमो पंडुसेणोत्ति ॥ ३२५ ॥ कालम्मि कलाउ सुनिम्मलाउ बावत्तरिपि कलियाओ । जाओ भोगसमत्थो सो जुवरज्जम्मि अहिसित्तो ॥ ३२६ ॥ अह तत्थ कयाइवि जलहिगब्भगं-भीरमाणसा थेरा । भवकमलाण भाणू समोसढा असढपरिणामा ॥ ३२७ ॥ नयराओ जणो तह पंच पंडवा तेसिं वंदण-निमित्तं । नीहरिया परिकहिओ धम्मो पंचवि पवुद्धा ते ॥ ३२८ ॥ भालयलमिलियकरकमलजुगलया वज्जरंति पुच्छामो । दोवइं कुवयंगरुहं पुत्तं रज्जम्मि ठावेमो ॥ ३२९ ॥ जा ताव तुम्हपयपंकयस्स मूले वयं पवज्जामो । पुत्तारोवियरज्जा समगं

देवीए निक्खंता ॥ ३३० ॥ जाया समणा खंतिक्खमा य गुणरायरायहाणि समा । अज्जाए सुव्वयाए सिस्सिणिया दोवई जाया ॥ ३३१ ॥ मोक्खंगाइं कमेणं सव्वाइं अहिज्जियाइं अंगाइं । छट्ठट्ठमाइकट्ठं तवं अणुट्ठेउमारद्धा ॥ ३३२ ॥ ते थेरा भगवंता पुरंतरं विहरिया अह कयाई । भगवं अरिट्ठनेमी कुणइविहारं सुरट्ठाए ॥ ३३३ ॥ परिभावंति य पंचवि जइ नेमी कहंचि वंदिओ होइ । कयलक्खणा भवामो जम्मं च इमं सुलद्धंति ॥ ३३४ ॥ जाव सुरट्ठाभिमुहं चलिया थेरे अणन्न-चित्ता णं । पत्ता य हत्थिकप्पं नयरं सहसंवनामम्मि ॥ ३३५ ॥ उज्जाणम्मि ठियाणं मासक्खवणस्स पारणगदिवसे । तइयाए पोरिसीए नगरस्संतो अडंताणं ॥ ३३६ ॥ लहुयाण चउण्हं पंडवाण सवणेसु कहवि संपत्ता । वत्ता जहज्ज राओ उज्जंते निव्वुओ नेमी ॥ ३३७ ॥ तक्खणमेव नियत्ता जेणेव जुहिट्ठिलो मुणी तत्तो । साहिंति जहावत्तं भत्तं पाणं च उज्झंति ॥ ३३८ ॥ भाविंति अहो! विसमाणि कम्मुणा चेट्ठियाणि जेणम्हं । दूरपरक्कमसाराण वंछियत्थोन सिद्धोत्ति ॥ ३३९ ॥ किं जीविएण एत्तो जिणविरहकरालजलणदड्ढेण । कायव्वमओ गंतुं सेत्तुज्जे अणसणं कुणिमो ॥ ३४० ॥ गंतूण तत्थ दोमासियाए संलेहणाए संलिहिया । उप्पन्नाणुत्तरणाणदंसणा निव्वुया जाया ॥ ३४१ ॥ अज्जावि दोवई सिक्खिऊण सामाइयाणि अंगाणि । एक्कारस पज्जंते मासक्खवणेण कालगया ॥ ३४२ ॥ बंभम्मि देवलोए उववन्ना अयरदसगपरम-ठिई । तत्तो चुया समाणा महाविदेहम्मि सिज्झिहिही ॥ ३४३ ॥ एत्थ पसंगेणागयमेयं जम्मंतराणुगं चरिअं । भणियं नागसिरीए धम्मरुइच्चिय इहं पगओ ॥ ३४४ ॥ इति श्रीधर्मरुचिकथानकं सप्रसंगं समासम् ॥ ६४८ ॥ ४२ ॥

मनोगुप्तावुदाहरणमाह;—मनोगुप्तावुदाहर्त्तव्यायां कश्चित् साधुः। ध्याने धर्मध्यानलक्षणे शुक्लध्यानलक्षणे वा निश्च-

त्मतिको निविडनिबद्धमानस एवासीत् । तस्य च कदाचिच्छक्रप्रशंसा संवृत्ता, ततश्चाश्रद्दधानदेवागमः संवृत्तः । तत्रागमे मति ॥ ६४९ ॥ ४३ ॥ तेन देवेन दृष्ट उत्सर्गस्थितः कायोत्सर्गव्यवस्थितः स साधुः । विकुर्वितं च तुशब्दस्य समुच्चयार्थस्येह सम्बन्धाज्जननीजनकरूपम् । करुणं च प्रदर्शितकारुण्यं सम्प्रलसो व्यज्ञसोऽनेकधा तत्र कायोत्सर्गे व्यवस्थितः स साधुस्तैर्जननीजनकलोकैर्यथा वयं न जीवामो भवन्तमन्तरेण, वचनमात्रेणापि तावदनुगृहाणेत्यादि ॥ ६५० ॥ ॥ ४४ ॥ यदा एवमपि न किञ्चित् क्षुभितः, तदा पश्चात् तेन देवेन भार्यारूपं विकुर्वितम् । कीदृशमित्याह—अन्यप्रसक्तं परपुरुषनिबद्धं समस्तश्रृङ्गारं परिपूर्णगृहीतशरीरभूषं भूयः पुनरपि तं साधुमभिलपत् सद् अभिलापविषयीकुर्वदित्यर्थः । उत्सुकमतीव त्वरावदत्यन्तस्नेहयुतमिति ॥ ६५१ ॥ ४५ ॥ तथापि न मनोगुप्तेश्चलनं यदाऽस्य मनागपि संजातं, तदा निजं रूपमस्येति निजरूपः स चासौ देवश्च तेन वंदना मुनेर्विहिता । तथा स्तवनं यथा—सुलब्धं ते जन्म, कृतलक्षणः समाचारः, सुदृढा मनोनिरोधवृत्तिः; को हि नामान्य इहलोकपरलोकयोरेवं निःस्पृहत्ववृत्तिरिति । ततश्च साधोर्लोके प्रशंसा जाता, यथा—एवमस्य महात्मनो न नैव चित्तभेदः प्रादुरभूत् । तुः पूरणार्थः ॥ ६५२ ॥ ४६ ॥

अथ वाग्गुप्तावुदाहरणं यथा;—कश्चित्साधुः संज्ञापकस्थानं गच्छाम्यहं द्रष्टुमित्यध्यवसितः । तत्र संजानन्तीति संज्ञापकाः सम्यक्प्रत्यभिज्ञानवन्तः स्वजनास्तेषां स्थानं ग्रामनगरादिरूपमिति । मार्गे गच्छतश्चौरग्राहो वृत्तः । गृहीतः साधुः । विमुच्य भणति तं सेनापतिः—मा शाधि मामत्र स्थितं केषामपि मा कथयेस्त्वमिति ॥६५३॥४७॥ यावदसौ कश्चिद् मार्गमार्गं गच्छति तावच्चलिता यज्ञयात्रा विवाहप्रवृत्तजनसमूहरूपा । तत्र च संज्ञापकः स्वजनलोकस्तस्य मिलनं संज्ञापकमिलनं

'अंतरा चेव' अन्तराले एव गन्तव्यस्थानापेक्षयेति । कश्च स संज्ञापक इत्याशंक्याह—मातापितृभ्रात्रादिः प्रतीतरूप एव । परिभावितं च तेन—किं मम इतोऽग्रतो गमनेन, स्वजनदर्शनस्यात्रैव भूतत्वात् ? अतो निवर्त्तनमेव सङ्गतमिति सोऽपि निवृत्तः समं सार्द्धं तैरेव संज्ञापकैरिति ॥ ६५४ ॥ ४८ ॥ स्तेनैश्चौरैर्गृहीताश्च ते मुषिताश्च गृहीतमुषिताः सन्तो मुक्ताः संज्ञापकाः । ततस्ते स्तेना ब्रुवते । कथमित्याह—सोऽयं साधुर्योऽस्माभिः साम्प्रतमेव गृहीत्वा मुक्त इति, तत एतद्वचन-श्रवणानन्तरं ब्रवीति 'अम्मग'त्ति जननी तस्य साधोः सत्का ॥ ६५५ ॥ ४९ ॥ कथमित्याह—किं सत्यमेतद् यदयं युष्माभिर्गृहीत्वा मुक्तः ? चौराः प्राहुः—आमेवम् । 'आणेह वेइ तो छुरियं'ति आनयत क्षुरिकामिति ब्रवीति ततो माता; यद्यस्माच्छिनद्मि स्तनं (ग्रंथाग्रं—१००००) ननु निश्चितमेतद्गतदुग्धपायितया सापराधत्वात् पयोधरस्य । ततः किं तवायं भवतीति सेनापतिर्भणति ॥ ६५६ ॥ ५० ॥ ततो माता ब्रवीति—दुर्जन्मजातः—दुष्टेन जन्मना लब्धप्रादुर्भाव एष साधुः, यतो दृष्टा यूयं, तथापि नापि नैव शिष्टं कथितं यथा—मार्गे चौरसेनापतिरस्ति । अतः कथं केन प्रकारेण पुत्र इत्येषोऽथ मम वर्त्तते ? । यो हि पुत्रो भवति, न स मातापित्रादिव्यसनमुपस्थितमुपेक्षते, किन्तु यथाशक्ति निरुणद्ध्येव । ततः सेनापतिना सविस्मयचेतसा भणितं—कथं नापि नैव शिष्टं भोः साधो ! यथात्र मार्गे चौराः सन्ति ? इत्युक्तेन साधुना धर्मकथा प्रारब्धा, यथा—अस्मिन्ननादौ संसारे जीवानां भ्राम्यतां सताम् । को न बन्धुतया जातः पररूपतया तथा ? ॥ १ ॥ अत एव विवेकाढ्या न स्निह्यन्ति कदाचन । कुत्रापि द्वेषिणो वापि कषायविषनिग्रहात् ॥ २ ॥ तथा; बहु शृणोति कर्णाभ्यामक्षिभ्यां बहु पश्यति । न च दृष्टं श्रुतं भिक्षुः सर्वमाख्यातुमर्हति ॥ ३ ॥ इत्यादिभिः सुधा-

गंमन्त्रिभिर्वचनैः श्रुतैः । सद्यः सेनापतिर्बोधिं लब्धवान् दुःखनोदिनीम् ॥ ६५७ ॥ ५१ ॥ ततश्च आवृत्तः प्रत्यावृत्तः कुपरिणामात् । अत एवोपशान्तो मुक्ता मुत्कलीकृता साधुमाता ममापि त्वमसि मातेति । तथा सर्वं समर्पितं 'से'तस्य यद्विग्रहोचितमुपकरणं गृहीतमासीत् । उपसंहरन्नाह—वाग्गुप्तिरेवं प्रस्तुतसाधुवच्छेपसाधुभिः कर्त्तव्येति ॥ ६५८ ॥ ५२ ॥ अथ कायिकगुप्तावुदाहरणमुच्यते;—अध्वप्रपन्नको महाटवीमार्गप्रविष्टः कश्चिद् महासाधुः क्वचित्समये समभूत् । आवासिते गृहीतावासे मति सार्थे न लभते तत्र सार्थाधिष्ठितायां भुवि स्थंडिलं किञ्चिद्, यत्र साधुसामाचार्यबाधया स्थानादि निशातुं पार्यते ॥ ६५९ ॥ ५३ ॥ लब्धं चानेन कथमपि स्थण्डिलमेकः पादो यत्र प्रतिष्ठते । तत्र स्थण्डिले स्थितैकपादः सर्वां रात्रिं यावदासितः, तावत्तत्र पादः स्तब्धः सञ्जातस्तम्भोऽभूत् ॥ ६६० ॥ ५४ ॥ न च नैवास्थण्डिलभोगः साधुजनायोग्यभूमिभागपरिभोगलक्षणस्तेन साधुना कृतस्तत्र समये । कीदृशेन सतेत्याह—धीरपुरुषेण सात्त्विकेनेत्यर्थः । ततश्च शक्रप्रशंसा यथाऽहो! साधुरयं दुष्करकारको वर्त्तते, य इत्थमस्थण्डिलपरिहारेण व्यवस्थितः । तथाशक्रप्रशंसाऽसहिष्णोर्देवस्येहागमश्च संवृत्तः । तथेति समुच्चये । भेषणं हस्त्यादिरूपविकुर्वणेन प्रारब्धम्, तथापि तस्य महापुरुषस्याक्षोभः क्षोभाभावः सम्पन्नः, मम म्रियमाणस्यापि न काचित् कार्यक्षतिरस्तीत्यध्यवसायादिति ॥ ६६१ ॥ ५५ ॥ यदासौ भेषितोऽपि न क्षुभितस्तदा शीतमेव ग्रहः, पारवश्यसम्पादकत्वात्, तस्य संपादनं देवेन कृतम् । तत्र चाचलनमङ्गानां शीतनाशिनानाम् । ततो दुष्कृतं प्राग्भवोपात्तमित्थमुपस्थितमिति सम्यक् स्थातुं प्रवृत्तः । ततः सुरवन्दना कायप्रणामरूपा, तथा प्रशंसनमहो धन्योऽसि त्वं, तथाऽतीव लोकेनोत्कर्षः प्रमोदो व्यूढ इति ॥ ६६२ ॥ ५६ ॥ उपसंहरन्नाह;—

**एवंविहो उ भावो गुणठाणे हंदि चरणरूवम्मि । होति विसिट्ठखउवसमजोगओ भव्वसत्ताणं ॥६६३॥**

एवंविधस्त्वेवंविध एव व्यसनप्राप्तावपि गुप्तिसमित्यनुलंघनरूपो भावः परिणामो भवतीत्युत्तरेण योगः। क्व सतीत्याह— गुणस्थाने, हंदीति पूर्ववत्, चरणरूपे चारित्रलक्षणे भवति विशिष्टक्षयोपशमयोगतो विशिष्टो वज्राश्मवदत्यन्तनिबिडो यश्चारित्रमोहस्य क्षयोपशमः क्षयविशेषस्तद्योगात्, भव्यसत्त्वानां समासन्नीभूतनिर्वृतिगमनानाम्। ये हि निवृत्तचारित्रमोहात्मानो महासत्त्वा मुनयः स्युस्त एव प्राणप्रहाणेऽपि न समितिगुप्तिभङ्गभाजो भवन्तीति॥ ६६३ ॥ कुत एतदिति चेदुच्यते;—

**देहाऽसामत्थम्मिवि आसयसुद्धी ण ओघओ अन्ना । चरणम्मि सुपुरिसो ण हि तुच्छोवि अकज्जमायरति**

देहासामर्थ्येऽपि दुष्कालरोगवार्द्धकादिकारणैर्देहस्य विहितकृत्येष्वसमर्थतायामपि, किं पुनरितरत्रेत्यपिशब्दार्थः, आशयशुद्धिः परिणामनैर्मल्यरूपा न नैवौघतः सामान्येनान्या हीयमाना विपरीतरूपा वा सम्पद्यते । क्व सतीत्याह—चरणे सर्वसावद्यपरिहारलक्षणे । यच्चौघत इत्युक्तं, तत् तथाविधोत्कर्षवशाद् मेघकुमारादीनामिव मनाग् मालिन्यमपि कदाचित् संभाव्यत इति व्यभिचारपरिहारार्थम् । एतदेव समर्थमान आह—सुपुरुषः शान्तदान्तस्वभावः, स च विशेषतः "असत्सङ्गाद् दैन्यात् प्रखलचरितैर्वा बहुविधैरसद्भूतैर्भूतैर्यदि भवति भूतेरभवनिः। सहिष्णोः सद्बुद्धेः परहितरतस्योन्नतमतेः परा भूषा पुंसः स्वविधिविहितं वल्कलमपि" ॥ १ ॥ इत्यध्यवसायप्रधानः पुरुषविशेषः, न नैव हिर्यस्मात् तुच्छोऽपि शरीरविभवसहायादिबलविकलतया कृशीभूतोऽपि, किं पुनरितरः, अकार्यं कुलकलंकादिकारणं कृत्यविशेषमैहिकं पारत्रिकं च

ममाचरत्यासेवते । तथा च पठन्ति—"निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् । अद्यैव वा मरणमस्तु युगान्तरे वा न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ॥ १ ॥" सुपुरुषशिरोरत्नभूतश्च चारित्री, कथमस्यान्यथा भावशुद्धिः सम्पत्स्यते? इति ॥ ६६४ ॥

**दव्वादिया न पायं सोहणभावस्स होंति विग्घकरा । बज्झकिरियाओ तहा हवंति लोगेवि सिद्धमिणं ॥ ६६५ ॥**

द्रव्यादयो द्रव्यक्षेत्रकालभावाः कुतोऽपि वैगुण्याद् बाढमननुकूलभावापन्ना न नैव प्रायो बाहुल्येन शोभनः शान्तोदात्तपरिणतिरूपो भावो मनःपरिणतिर्यस्य चारित्रिणः स तथा तस्य, अथवा, शोभनश्चासौ भावश्चोक्तरूप एव तस्य, भवन्ति विघ्नकरा व्याघातहेतवः । प्रायोग्रहणं च मन्दमोहादिक्लिष्टकर्मक्षयोपशमवतः शोभनभावविघ्नसंभवेन मा भूत् सर्वत्र व्यभिचार इति । पठ्यते च "निमित्तमासाद्य यदेव किञ्चित् स्वधर्ममार्गं विसृजन्ति बालिशाः । तपःश्रुतज्ञानधना हि साधवो न यान्ति कृच्छ्रे परमेऽपि विक्रियाम् ॥ १ ॥" । इति । व्यवच्छेद्यमाह—बाह्यक्रियास्तु बहिर्व्यापाररूपाः कायिक्यादयः पुनस्तथा यादृशा द्रव्यादयो वर्त्तन्ते तादृशा एव भवन्ति । नहि द्रव्यादिषु प्रतिकूलभावमागतेषु सामान्यात् शिष्टानां दानादयो, यतीनां चैषणाशुद्ध्यादयोऽध्ययनादयश्च प्रवर्त्तन्ते । अत एवोक्तम्;—"कालस्स य परिहाणी संजमजोग्गाइं नत्थि खेत्ताइं । जयणाए वट्टियव्वं न हु जयणा भंजए अंगं ॥ १ ॥" अथैतदेवोपचिनोति—लोकेऽपि शिष्टजनलक्षणे, न केवलमस्माभिरुच्यत इत्यपिशब्दार्थः, सिद्धमिदं यथा न द्रव्यादयः शुद्धभावविघ्नकराः सम्पद्यन्ते ॥ ६६५ ॥ एतदेव गाथात्रितयेन भावयति;—

**दढयाकण्णुप्पलताडणंव सुहडस्स णिव्वुइं कुणइ । पहुआणाए संपत्थियस्स कंडंपि लग्गंतं ॥ ६६६ ॥**

**जह चेव सदेसम्मी तह परदेसेवि हंदि धीराणं। सत्तं न चलइ समुवत्थियम्मि कज्जम्मि पुरिसाणं॥६६७॥**
**कालोवि य दुब्भिक्खाइलक्खणो ण खलु दाणसूराण। भेदइ आसयरयणं अवि अहिगयरं विसोहेइ ६६८**

दयिताकर्णोत्पलताडनवद्—रतिकेलिकालकुपिताभीष्टकामिनीसाक्षेपकरमुक्तकर्णस्थानावतंसितामन्दमकरन्दामोदितमधुकरकुलावकम्पिसहस्रपत्रप्रहतिरिव सुभटस्य रणसंघट्टसमुद्घटितशौर्यप्रकर्षस्य पुंसो निर्वृतिं समीहितसमरसम्मर्दलाभलक्षणं करोति। कीदृशस्येत्याह—प्रभ्वाज्ञया तत्तत्प्रसादप्रदानप्रमोदसम्पादकनायकनिरूपितादेशलक्षणया सम्प्रस्थितस्य परबलविलोलनाय चलितस्य काण्डमपि, किं पुनरुज्ज्वलपुष्पमालादि, लगच्छरीरसंस्पर्शमागच्छत् सत्। समीहितसिद्धिरेव सर्वत्र निर्वृतिहेतुः स्यात्। समीहितश्च सुभटेन स्वस्वाम्यादेशात् समरसंघट्टे प्रवर्त्तमानेन काण्डादिप्रहार इति कथमसौ न तल्लाभे वृत्तिमान् स्यादिति ॥ ६६६ ॥ १ ॥ यथाचैवेति दृष्टान्तार्थः। स्वदेशे सौराष्ट्रादौ वर्त्तमानानां तथा परदेशेऽपि मगधादौ कुतोऽपि निमित्ताद् गतानां, हंदीत्युपप्रदर्शने धीराणां धैर्यव्रतभाजाम्। किमित्याह—सत्त्वमवैक्लव्यकरमध्यवसानकरं च जीवपरिणतिविशेषलक्षणम्, न नैव चलति क्षुभ्यति, समुपस्थिते तथाविधविरुद्धजनाध्यारोपितविविधबाधेऽपि कार्ये व्यवहारराजसेवादौ पुरुषाणां पुंसाम्। अयमभिप्रायः—यथा स्वदेशे पूर्वपुरुषपरंपरासमावर्जितजनविहितसाहाय्यभाजि न कार्ये क्वचिन्निपुणनीतिभाजां मरणावसानेऽपि सत्त्वहानिर्भवति, तथा विदेशेऽपि केनाप्यविज्ञातपूर्वापरसमाचाराणां नयनिष्ठुरप्रवृत्तीनां तथाविधव्यसनप्राप्तावपि न सत्त्वभ्रंशः सम्पद्यत इति ॥ ६६७ ॥ २ ॥ कालोऽपि

न सुभिक्षादिलक्षणः। इह दुःशब्द ईषदर्थः । ततो भिक्षुकलोकस्य भिक्षाणामीषल्लाभो यत्र तद्दुर्भिक्षम् । आदिशब्दाद् राजकराक्रान्त्यादिदोषदौःस्थ्यग्रहः। ततो दुर्भिक्षादयो लक्षणं यस्य स तथा, नैव दानशूराणाम्, इह त्रिधा शूरः—दानशूरः, सङ्ग्रामशूरः तपःशूरश्च। तत्र दानशूर उत्तराशाधिपतिः कुबेरादिः। सङ्ग्रामशूरो वासुदेवादिः। तपःशूरो दृढप्रहारादिः। तत इतरद्वयपरिहारेण दानशूराणाम्। भिनत्ति चालयत्याशयरत्नमौदार्यातिरेकलक्षणम्। अपिचेति समुच्चये। अधिकतरं तद्विशेषं शोधयति समुत्कर्षयति । यथा कस्यचित् समुत्कटमन्मथस्य भोगार्हदिव्यकामिनीसम्प्राप्तौ तद्विकाराः सुदूरमनिवाराः समुज्जृम्भन्ते, तथा दानशूराणां समंततः समुपस्थितयाचकलोकं कालमवलोक्य सविशेषदानपरायणता जायत इति ॥ ६६८ ॥ ३ ॥ इत्थं द्रव्यादयो लोकेऽपि शोभनभावविघ्नकरा न भवन्तीति प्रसाध्य प्रस्तुते योजयन्नाह;—

एवं चिय भवरसत्ति चरित्तिणो णहि महाणुभावस्स। सुहसामायारिगओ भावो परियत्तइ कयाइ ॥ ६६९ ॥

एवमेव काण्डलगनादाविव सुभटानां भव्यस्योक्तनिरुक्तस्य, किं पुनः सुभटादीनां स्वकार्यसिद्ध्यर्थमुपस्थितानामित्यपिशब्दार्थः, चारित्रिणः सम्पन्नचारित्रमोहदृढक्षयोपशमस्य न हि नैव महानुभावस्य प्रशस्तसामर्थ्यस्य शुभसामाचारीगतः प्रत्युपेक्षणाप्रमार्जनादिविषयो भाव उत्साहलक्षणः परिवर्त्तते विपरिणमते कदाचिद् दुर्भिक्षादावपि, तस्यात्यन्तशुभसामाचारीप्रियत्वेनान्यत्र प्रतिबन्धाभावात् ॥ ६६९ ॥ तथा;—

भोयणरसण्णुणोऽणुवहयस्स णोऽसाउभोइणोवि तहा। साउम्मि पक्खवाओ किरियावि ण जायइ कयाइ

भोजनरसज्ञस्य शर्करासंमिश्रहविःपूर्णादिभोजनास्वादविदः पुरुषस्यानुपहतस्य धातुक्षोभविकलस्य नो नैव अस्वादुभोजिनोऽपि तथाविधकष्टप्रघट्टकवशाच्चिरपर्युषितवल्लचणकादिभोजनवतोऽपि, तथेति दृष्टान्तान्तरसमुच्चयार्थः, स्वादुनि उक्तरूपे एव भोजने पक्षपातो लौल्यातिरेकाद् निरंतरं बहुमानः क्रिया वा कथञ्चित् पुनरपि तत्प्राप्तिहेतुश्चेष्टा न जायते कदाचित्, किन्तु जायत एव ॥ ६७० ॥

**एवं सज्झायाइसु तेसिमजोगे वि कहवि चरणवओ। णो पक्खवायकिरिया उ अण्णहा संपयट्टिंति॥६७१॥**

एवं स्वादुभोजने इव तद्रसविदः स्वाध्यायादिषु स्वाध्याये वाचनादिरूपे, आदिशब्दाद् ध्यानविनयमौनादिषु च साधुसमाचारेषु, तेषां स्वाध्यायादीनामयोगेऽपि अघटनेऽपि कथमपि द्रव्यादिव्यसनोपनिपातलक्षणेन केनापि प्रकारेण चरणवतो जीवस्य नो नैव पक्षपातक्रिये तु, पक्षपातश्च बहुमानः क्रिया च यथाशक्त्यनुष्ठानम्, अन्यथा विपरीतरूपतया सम्प्रवर्त्तेते ॥ ६७१ ॥ अथ प्रसंगत एव प्रस्तुतकालमधिकृत्याह;—

**तम्हा उ दुस्समाएवि चरित्तिणोऽसग्गहाइपरिहीणा। पण्णवणिज्जा सद्धा खंताइजुया य विण्णेया॥६७२॥**

यतश्चारित्रिणो द्रव्याद्यापद्यपि न भावः परिवर्त्तते, तस्मादेव दुःषमायामपि प्रस्तुतकाललक्षणायां सर्वतः प्रवृत्तनिरंकुशासमंजससमाचारायामपि, किं पुनः सुषमदुःषमा—दुःषमसुषमालक्षणयोरित्यपिशब्दार्थः, चारित्रिणो यथायोग्यं सामायिकच्छेदोपस्थापनीयचारित्रवन्तः साधवो विज्ञेया इत्युत्तरेण योगः। कीदृशाः सन्त इत्याह—असद्ग्रहादिपरिहीणा—

अगन् असुंदरो ग्रहः स्वविकल्पात् तथाविधागीतार्थप्रज्ञापकोपदेशाद्वा विपर्यस्तरूपतया कस्यचिच्छास्त्रार्थस्यावधारणमसद्ग्रहः, आदिशब्दात् तत्पूर्वकयोः प्रज्ञापनानुष्ठानयोर्ग्रहः, तैः परिहीणा विप्रमुक्ताः, अत एव प्रज्ञापनीयाः कुतोऽप्यनाभोगादसद्ग्रहादियोगेऽपि संविग्नैर्गीतार्थैश्च प्रज्ञापयितुं शक्याः । तथा, श्राद्धा उत्तरोत्तरानुष्ठानचिकीर्षापरिणामवन्तः क्षान्त्यादियुताः क्षमामार्दवादिसाधुधर्म्मसमन्विताः । चः समुच्चये । विज्ञेया बोद्धव्या इति ॥ ६७२ ॥

अथासद्ग्रहपरिहाणावेव चारित्रिणो भवन्तीति समर्थयन्नाह;—

**णाणम्मि दंसणम्मि य सइ चरणं जं तओ ण एयम्मि । णियमा णसग्गहाइ हवंति भववद्धणा घोरा ६७३**

ज्ञाने मतिज्ञानादिलक्षणे, दर्शने च जिनोक्ततत्त्वश्रद्धानलक्षणे सम्यक्त्वे सति विद्यमाने, चरणं चारित्रं यद्यस्मात् सम्पद्यते, ततः कारणाद् न नैवं तस्मिन् चरणे सति नियमादसद्ग्रहादय उक्तलक्षणा भवन्ति भववर्द्धनाः संसारवृद्धिहेतवः । अत एव घोरा नरकगर्त्तादिपातफलाः, तन्मूलबीजमिथ्यात्वह्रासेनैव चारित्रप्राप्तेरिति ॥ ६७३ ॥

आह—मा भूवन् चारित्रिणोऽसद्ग्रहादयश्चारित्रघातकाः परिणामाः, परं "मोक्षः सर्वोपरमः क्रियासु" इति वचनात् सर्वक्रियानिरोधे साधयितुमारब्धे किमर्थं स्वाध्यायादिषु क्रियाविशेषेषु यत्नः कर्त्तव्यतयोपदिष्ट इत्याशंक्याह;—

**सज्झायाइसु जत्तो चरणविसुद्धत्थमेव एयाणं । सत्तीए संपयट्टइ णउ लोइयवत्थुविसओ उ ॥ ६७४ ॥**

स्वाध्यायादिरूपलक्षणेषु यत्न आदरश्चरणविशुद्ध्यर्थमेव चारित्रसंशुद्धिनिमित्तमेवैतेषां चरित्रिणां शक्त्या सामर्थ्यानुरूपं

सम्प्रवर्त्तते । यथोक्तम्—“पढमं नाणं तओ दया एवं चिट्ठइ सव्वसंजए । अन्नाणी किं काही किंवा णाही छेयपावयं” न
तु नैव लौकिकानि सामान्यलोकोपयोगीनि यानि वस्तूनि हस्तिशिक्षाधनुर्वेदनृत्तगीतादीनि विषयो यस्य स तथा, तुः पुनरर्थः,
यत्नः सम्प्रवर्त्तेत इति । इदमुक्तं भवति—यः स्वाध्यायादिषु चरित्रिणां चतुष्कालाद्याराधनया यत्नः प्रवर्त्तते पापश्रुताव-
ज्ञातीकरणे न स मोक्षाक्षेपैकहेतोश्चारित्रस्य संशुद्धिनिमित्तमेव । अत एवोक्तम्—“पैशाचिकमाख्यानं श्रुत्वा गोपायनं च
कुलवध्वाः । संयमयोगैरात्मा निरन्तरं व्यावृतः कार्यः ॥ १ ॥ इति” ॥ ६७४ ॥ अस्यां च सत्यां यत्स्यात्तद्दर्शयति;—

**तत्तो उ पइदिणं चिय सण्णाणविवड्ढणाए एएसिं । कल्लाणपरंपरओ गुरुलाघवभावणाणाओ ॥ ६७५ ॥**

ततश्चरणशुद्धेःस्वाध्यायादिसंयोगापादितायाः सकाशात् प्रतिदिनमेव संज्ञानविवर्द्धनया संज्ञानस्य मार्गानुसारिणो
रागादिवध्यपटहभूतस्य सुरलोकसौधाध्यारोहसोपानसमस्य श्रुतज्ञानलक्षणस्य या विवर्द्धना विशिष्टा वृद्धिस्तया, एतेषां
चरित्रवतां किमित्याह—कल्याणपरंपरको भद्रभावपरम्परारूपः सम्पद्यते । कुत इत्याह—गुरुलाघवभावज्ञानाद् गुरुर्भू-
यान् लघुश्च तद्विपरीतो गुरुलघू तयोर्भावो गुरुलाघवं तेन गुणदोषावपेक्ष्य भावानामुत्सर्गापवादप्रवृत्तिरूपाणां यज्ज्ञा-
नमवबोधस्तस्मात् । इदमुक्तं भवति—ते हि शुद्धचारित्रतया प्रतिदिनं संज्ञानवृद्धौ सत्यां सर्वप्रवृत्तिषु गुणानां दोषाणां
यथासंभवं गुरुत्वं लघुत्वं चावलोकमाना गुणगौरवपक्षाश्रयेणैव प्रवर्त्तन्ते । ततोऽस्खलितप्रसरां कल्याणपरम्परामवाप्य
परमपदभाजो जायन्त इति ॥ ६७५ ॥ अथासद्ग्रहफलं विभणिषुराह;—

**एयमिह अयाणंता असग्गहा तुच्छबज्झजोगम्मि । णिरया पहाणजोगं चयंति गुरुकम्मदोसेण ॥६७६॥**

स्वाध्याया-
दिक्रिया-
यामादर-
करणोपदे-
शपुष्टिः—

एतदुक्ताशयमिह धर्मप्रवृत्तिष्वजानन्तोऽनवबुध्यमाना असद्ग्रहा मिथ्याभिनिवेशवन्तः केचित् स्वबुद्धिकल्पनया धर्ममाचरन्तोऽपि तुच्छबाह्ययोगे—तुच्छोऽत्यल्पकर्मनिर्जरो बाह्यो यथावत्परमगुरुवचनोपयोगशून्यतया शरीरव्यापारमात्ररूपो यो योगोऽनुष्ठानं तत्र, निरता अत्यन्तबद्धादराः प्रधानयोगं गुरुकुलवासादिरूपं त्यजन्ति मुञ्चन्ति । केनेत्याह—गुरुकर्मदोषेण गुरोर्मिथ्यात्वमोहादेः कर्म्मणो विपाकप्राप्तस्य यो दोषस्तेन ॥ ६७६ ॥

अत्र च त्यक्ते बाह्ये योगे यादृशः स्यात्तद्दर्शयति;—

मुद्धुंछाइसु जत्तो गुरुकुलचागाइणेह विण्णेओ । सवरसरक्खपिच्छत्थघायपायाछिवणतुल्लो ॥ ६७७ ॥

शुद्धो द्विचत्वारिंशद्दोषविकलः स चासावुञ्छश्च भिक्षावृत्तिरूपः, आदिशब्दाच्चित्रद्रव्याद्यभिग्रहासेवनाग्रहः । ततः शुद्धोञ्छादिषु साधुसमाचारेषु यत्न आदरः क्रियमाणः केषाञ्चिदलब्धसिद्धान्तहृदयानां गुरुकुलत्यागादिना गुरोः "पडिरूवो तेयस्सी" इत्यादिगाथाद्वयोक्तलक्षणस्य कुलं परिवारो गुरुकुलं तस्य त्यागः प्रोज्झनम्, आदिशब्दात्सूत्रार्थपौरुषीयथाज्येष्ठादिविनयवैयावृत्यादिपरिहारग्रहः, तेनोपलक्षित इह धर्मविचारे विज्ञेयः । कीदृश इत्याह—शबरस्य म्लेच्छरूपस्य कस्यचित् सरजस्कानां शैवानां पिच्छार्थं मयूरपिच्छनिमित्तं यो घातो मारणं तत्र यत्पादाच्छुपनं चरणसंस्पर्शपरिहाररूपं तत्तुल्य इति । अयमभिप्रायः—कश्चिद्धर्मार्थी सम्यगपरिणतजिनवचनो गुरुकुलवासे तथाविधां भिक्षाशुद्धिमपश्यन् "आयरयामहणो कालो विममो सपक्खिओ दोसो । आइतिगभंगगेणवि गहणं भणियं पकप्पम्मि ॥ १ ॥" इति पञ्चकल्पभाष्यमश्रद्दधानः शुद्धोञ्छार्थी गुरुकुलवासपरित्यागेन विहारमवलम्बते । स च विहारः प्रस्तुतशबरपादाच्छुपनतुल्यो बहु-

कृतम्, परमुत्तरणमविद्धस्यैवं सम्यक् शूलायां संवृत्तमिति ॥ ८०५ ॥ विस्मये सर्वलोकस्य देवतया कथना कृता, यथा—कृतमिदं चौर्यमेतेन, परं भावतः पश्चात्तापलक्षणात् क्षपितं चौर्यजन्यं कर्म । ततः संवेगाद् व्रतग्रहणं कृतम् तेन तदनु चौरर्षिः सुप्रसिद्ध इति ॥ ८०६ ॥ अत्रैव दृष्टान्तान्तरमाह;—

**एवं विसिट्ठकालाभावम्मिवि मग्गगामिणो जह उ। पावेंति इच्छियपुरं तह सिद्धिं संपयं जीवा ॥८०७॥**

एवं—यथा भावविशेषाच्चौरोऽप्यचौरः संवृत्तस्तथा, विशिष्टकालाभावेऽपि निर्वाणलाभयोग्यसमयविरहेऽपि मार्गगामिनः सत्पथप्रवृत्ता यथा तु यथैव प्राप्नुवन्तीप्सितपुरं पाटलिपुत्रकादि तथा सिद्धिं निर्वृतिलक्षणां साम्प्रतं दुष्पमायां सन्मार्गप्रवृत्ताः सन्तो जीवा भावविशेषाद् अवाप्नुवन्ति, परं कालविलम्बेनेति ॥ ८०७ ॥

ननु निष्ठुरक्रियासाध्यो मोक्षः, कथं साम्प्रतकालयोग्या मृद्वी क्रिया तद्धेतुः स्यादित्याशंक्याह;—

**मउईएवि किरियाए कालेणारोगयं जह उविंति । तह चेव उ णिव्वाणं जीवा सिद्धंतकिरियाए ॥८०८॥**

मृद्ध्यापि साधारणयापि क्रियया घातचिकित्साक्रियया कालेन चिरतररूपेणारोगतां नीरोगभावं यथोपयान्ति प्रतिपद्यन्ते, तथा चैव तु तेनैव प्रकारेण निर्वाणमपवर्गं जीवाः सिद्धान्तक्रियया मूलगुणोत्तरगुणप्रतिपालनरूपया साधारणरूपयापीति ॥ ८०८ ॥ आह—निष्ठुरक्रियापरिपालनरूपं चारित्रं, न चासावद्य दुष्पमायां सम्पद्यते, तत्कथं निर्वाणमार्गरूपं चारित्रं भवद्भिः प्रतिज्ञायत इत्याशंक्याह;—

**दुप्पसहंतं चरणं भणियं जं भगवया इहं खेत्ते । आणाजुत्ताणमिणं ण होंति अहुणत्ति वामोहो ॥८०९॥**

दुःप्रसभान्तं दुष्षमापर्यन्तभागभाविदुःप्रसभनामकमुनिपुंगवपर्यवसानं गङ्गाप्रवाहवदव्यवच्छिन्नं चरणं भणितं
यद्यस्माद् भगवता इह क्षेत्रे । आज्ञायुक्तानां यथासामार्थ्यमाज्ञापरिपालनपरायणानामिदं चारित्रं न भवत्यधुनैष व्या-
मोहो वर्त्तते, यथाशक्त्याज्ञापरिपालनस्यैव चारित्ररूपत्वात्, तस्य च साम्प्रतमपि भावादिति ॥ ८०९ ॥

विपर्यये बाधकमाह;—

**आणाबज्झाणं पुण जिणसमयम्मिवि न जातु एयंति । तम्हा इमीए एत्थं जत्तेण पयट्टियव्वंति ॥८१०॥**

आज्ञाबाह्यानामुच्छृंखलप्रवृत्तीनां पुनर्जिनसमयेऽपि तीर्थकरविहारकालेऽपि न नैव जातु कदाचिद् एतच्चारित्रं सम्प-
न्नमिति । तस्माद् अस्यामाज्ञायां दुष्षमाकालेऽपि यत्नेन प्रवर्त्तितव्यमिति ॥ ८१० ॥ अत एवाह;—

**णेगंतेणं चिय लोयणायसारेण एत्थ होयव्वं । बहुमुंडादिवयणओ आणाजुत्तो इह पमाणं ॥ ८११ ॥**

न नैवैकान्तेन सर्वथैव लोक एव पार्श्वस्थादिरूपो यदृच्छाप्रवृत्तो ज्ञातं दृष्टान्तं तत् सारमवलम्बनीयतया यस्य स
तथा तेनात्र चारित्राराधने भवितव्यम् । कुत इत्याह—'बहुमुण्डादिवचनतः' "कलहकरा डमरकरा असमाहिकरा अनि-
व्वुइकरा य । होहिंति भरहवासे बहुमुण्डे अप्पसमणे य ॥ १ ॥" इति वचनात्; एतद्वचनपरिभावनेन पार्श्वस्थादीन्
दृष्टान्तीकृत्य नासमंजसे प्रवर्त्तनीयमित्यर्थः । तथाविधापवादप्राप्तौ तु गुरुलाघवालोचनपरेण गीतार्थेन साधुना कदाचित्

प्रवृत्तिसारेणापि भवितव्यमिति सूचनार्थमेकान्तेनेत्युपात्तम् । "वहुवित्थरमुस्सग्गं वहुविहमववाय मो वियाणित्ता । लंघेऊणन्नविहं वहुगुणजुत्तं करेज्जा सु ॥ १ ॥" अत एवाह—आज्ञावित्तकः—आज्ञैव वित्तं धनं सर्वस्वरूपं यस्य स तथा पुमानिह लोकोत्तराचारचिन्तायां प्रमाणीकर्त्तव्य इति ॥ ८११ ॥ ननु च 'आगम सुय आणा धारणा य जीए य पंचमए' इति वचनप्रामाण्याद् आचरितमपि प्रमाणमुक्तं, तत् किमुच्यते 'आज्ञावित्तक इह प्रमाणम्' इति हृदि व्यवस्थाप्याह;—

**आयरणावि हु आणाविरुद्धगा चेव होति नायं तु । इहरा तित्थगरासायणत्ति तल्लक्खणं चेयं ॥ ८१२ ॥**

आचरणापि तत्तदाचीर्णार्थरूपा हुर्यस्माद् 'दोसा जेण णिरुब्भंति जेण खिज्जंति पुव्वकमाइं' इत्यादिलक्षणाया आज्ञाया अविरुद्धिका चैवाविरोधवत्येव । तुशव्दोऽवधारणे भिन्नक्रमश्च । ततो भवत्येव ज्ञातमुदाहरणं कर्त्तव्येष्वर्थेषु प्रमाणमित्यर्थः । विपर्यये वाधकमाह— इतरथा आज्ञाविरोधेनाचरणे सति तीर्थकराशातना भगवदर्हद्वचनविलोपलक्षणा सम्पद्यते । इतिः प्राग्वत् । तल्लक्षणमाचरणालक्षणं चेदम् ॥ ८१२ ॥

**असढेण समाइन्नं जं कत्थति केणती असावज्जं । न निवारियमन्नेहिं य वहुमणुमयमेयमायरियं ॥८१३॥**

अशठेनाऽमायाविना सता समाचीर्णमाचरितं यद् भाद्रपदशुक्लचतुर्थीपर्युषणापर्ववत् कुत्रचित्काले क्षेत्रे वा केनचित् संविग्नगीतार्थत्वादिगुणभाजा कालिकाचार्यादिना सावद्यं मूलोत्तरगुणाराधनाऽविरोधि । तथा, न नैव निवारितमन्यैश्च तथाविधैरेव गीतार्थैः, अपितु वहु यथा भवत्येवं मतं वहुमतमेतद् आचरितमुच्यत इति ॥ ८१३ ॥

**किंच उदाहरणाइं वहुजणमहिगिच्च पुव्वसूरीहिं। एत्थं निदंसियाइं एयाइं इमम्मि कालम्मि ॥ ८१४ ॥**

किंचेत्यभ्युपाये, उदाहरणानि दृष्टान्ता वहुजनमधिकृत्य वहोरसंविग्नलोकस्य प्रवृत्तिमधिकृत्य पूर्वसूरिभिः प्राक्तनाचार्यैरत्र प्रवचने निदर्शितान्येतानि। अस्मिन् दुष्षमालक्षणे काले एतत्कालोपयोगीनीत्यर्थः ॥ ८१४ ॥

एतत्कालोपयोगिस्वप्नाष्टकप्रदर्शनम्—

उदाहरणान्येव विवक्षुस्तावत्तत्सम्वन्धमाह;—

**केणइ रन्ना दिट्ठा सुमिणा किल अट्ठ दुसमसुसमंते। भीई चरमोसरणे तेसिं फलं भगवया सिट्ठं ॥८१५॥**

केनचिदनिर्दिष्टनाम्ना राज्ञा उपलब्धा स्वप्ना निद्रायमाणावस्थायां मनोविज्ञानविकाररूपाः। किलेत्याप्तप्रवादसूचनार्थः। अष्टेतिसंख्या दुःषमसुषमान्तेऽस्यामवसर्पिण्यां चतुर्थारकपर्यवसाने। ततो जागरितस्य भीतिर्भयमुत्पन्नम् ततोऽपि च चरमसमवसरणे कार्तिकमासामावास्यायां तस्य पृच्छतः, तेषां स्वप्नानां फलं भगवता श्रीमन्महावीरेण शिष्टं कथितमिति ॥ ८१५ ॥ स्वप्नानेवाह;—

**गय[1] वाणर[2] तरु[3] धंखे[4] सिंहे[5] तह पउम[6] बीय[7] कलसे[8] य। पाएण दुस्समाए सुविणाणिट्ठ फला धम्मे ॥८१६॥**

गज[1]वानरा[2]स्तरवो[3] ध्वांक्षाः[4] सिंह[5]स्तथा पद्म[6]बीजा[7]नि कलशा[8]श्चेति। प्रायेण दुःषमायां स्वप्ना एतेऽनिष्टफला धर्मे अधर्मविषय इति। अत्र च गाथायां वचनव्यत्ययः प्राकृतत्वात् ॥ ८१६ ॥

एतानेव स्वप्नान् प्रत्येकं गाथानां द्वयेन द्वयेनोपदर्शयन् गाथाषोडशकमाह;—

चलयासाएसु गया चिट्ठंति पडंतएसुवि ण णिंति। णिंतावि तहा केई जह तप्पडणा विणस्संति ॥ ८१७॥
विरलतरा तह केई जह तप्पडणावि णो विणस्संति। एसो सुमिणो दिट्ठो फलमेत्थं सावगा णेया ॥८१८॥
बहुवाणरमज्झगया तव्वसहा असुइणो विलिंपंति। अप्पाणं अण्णेवि य तहाविहो लोगहसणं च ॥८१९॥
विरलाणमलिंपणया तदण्णखिंसा ण एयमसुइत्ति।सुविणोयं एयस्स उ विवाग मो णवरि आयरिया८२०
खीरतरुसुहछाया तेसिमहो सीहपोयगा बहुगा। चिट्ठंति संतरूवा लोगपसंसा तहाहिगमो ॥ ८२१ ॥
ते सिंखडा उ पायं सुणगा तरुवणलयत्ति पडिहासो। एसो सुमिणो दिट्ठो फलमेत्थं धम्मगच्छत्ति॥८२२॥
धंखा वावीय तडे विरला ते उण तिसाए अभिभूया। पुरओ मायासरदंसणेण तह संपयट्टंति ॥ ८२३ ॥
केणइ कहणा णिसेहे सद्दहणा पायसो गम विणासं। सुमिणो यं एयस्स उ विवाग मो मूढधम्मरया ८२४॥
सीहो वणमज्झम्मी अणेगसावयगणाउले विसमे। पंचत्तगओ चिट्ठइ णय तं कोई विणासेइ ॥८२५॥
तत्तो कीडगभक्खणपायं उप्पायदट्ठुमण्णेवि। सुमिणोत्ति इमस्सत्थो पवयणनिद्धंधसाईया ॥ ८२६॥
पउमागरा अपउमा गद्दभगजुयाय चत्ताणियरूवा। उक्कुरुडियाए पउमा तत्थवि विरला तहारूवा॥८२७॥

तेवि य जणपरिभूया सकज्जणिप्फायगा ण पाएण । सुमिणसरूवं वीणणमिमस्स धम्मम्मि पच्चत्ता ८२८॥
बीएसु करिसगो कोइ दुवियड्ढोत्ति जत्तओ किणइ । बीजेत्ति अबीजेवि य पइरइय तहा अखित्तेसु ॥८२९॥
अवणेइय तं मज्झे विरलं बीयं समागयंपीहं । सुमिणेत्ति इमस्सत्थो विण्णेओ गमण पत्ताई ॥ ८३० ॥
कलसा य दुहा एगे पासाओवरि सुहा अलंकरिया । अण्णे पुण भूमीए वाडाओ गालिसयकलिया॥८३१॥
कालेण दलणपागं समभंगुप्पाय दट्ठुमप्पाणं । सुमिणसरूवं राया अबंभसाहू य एसत्थो ॥ ८३२ ॥
कूवावाहाजीवण तरुफलवह गाविवच्छिधावणया । लोहिविवज्जयकलमल सप्पगरुडपूजपूजाओ ॥८३३॥

विविहोवद्दवबहुला चलंतसुहिसयणचित्तसंजोगा । चलपासायसमा खलु गिहवासा राय ! होहिंति ॥ १ ॥ सण्णायगु-णगणड्ढा परदुद्धरिसा गयब सड्ढावि । तेसु अइलुद्धगिद्धा विवेयकलियावि बाहिंति ॥ २ ॥ विसयाण कडुविवागं अणि-च्चयं जीयजोव्वणधणाण । जाणंतावि हु मोहा निक्खमिउं नो तरिहिंति ॥ ३॥ विहडंतम्मिवि विहवे पुणो दुरासाए मोहिया धणियं । वेरग्गविप्पमुका दुक्करकम्माइं काहिंति ॥ ४ ॥ निक्खमिऊण य अण्णे घरसयणधणेसु निच्चपडिबद्धा । नीया-वासविहारी दट्ठूण य तव्विवत्तीओ ॥ ५ ॥ पडिबंधदोसओ च्चिय मंतोसहिमूलकम्ममाईसु । सावज्जेसु पसत्ता पायं होहिंति चुयधम्मा ॥ ६ ॥ विरलाओ दूसमाएवि पडिबंधविवज्जिया जियकसाया । होहिंति सुद्धचरणा एसत्थो पढमसुविणस्स ॥७॥

'वड्डवानरेत्यादि' चलचित्ताण सहावा गुणतरुविहरेसु निच्चमथिराण। जइवानराण वसहा आयरियाई भविस्संति ॥१॥ आहाकम्मुवभोगो पडिबंधो गेहसयणसड्ढेसु । उवहिम्मि गाढमुच्छा परोप्परासंखडं असई ॥ २ ॥ संजमविरुद्धचेट्ठा सवा दवत्थयाइया अहवा । असुई तेणप्पाणं लिंपिस्संती तह परंपि ॥ ३ ॥ तहियं पवत्तयंता पक्खग्गाहेण वा विसंवाए । एवं ते ह्यामपयं परतित्थीणंपि होहिंति ॥ ४ ॥ काहिंति तहा खिंसं अन्नेसिं तप्पवित्तिविमुहाणं । पन्नविया भणिहंती न हु दोसो एत्थ सुणहित्थं ॥ ५ ॥ कलहेमो नीइकए दवत्थओ तित्थउन्नइनिमित्तं । आहाकम्मेण विणा नगउरवं गुरुजणे होइ ॥ ६ ॥ अक्खरसिक्खावणओ किसिआरंभो न होइ सड्ढाणं । वेज्जयवेज्जाईहिं सावयरक्खा तओ तेहिं ॥ ७ ॥ एवं तु अहाच्छंदा पायं होहिंति निग्गुणा गुरुणो । विरला उ सुद्धसीला वीययसुविणस्स एसत्थो ॥ ८ ॥

'खीरतरू' इत्यादि । इह खीरतरुसरिच्छा सुसावगा पवयणुन्नइपसत्ता । गुरुवच्छला सुभणिया उदारचित्ता महासत्ता ॥ १ ॥ तण्णिस्साछायासुं पसंतरूवा वसंति मुणिसीहा । उवसग्गपरीसहसज्झसुज्झिया सुट्ठु सोंडीरा ॥ २ ॥ लद्धपसंसा लोए अहो इमे एत्थ पुन्नजम्माणो । अक्खलिओऽहिगमो वत्थपत्तपाणासणाईण ॥ ३ ॥ सुद्धाणुट्ठाणवसा निवाणफलप्पसाहगा पुविं । ते दूसमाणुभावा होहिंति पमाइणो पायं ॥ ४ ॥ काहिंति संखडाई न उज्जमिस्संति चरणकरणेसु । तो ते अन्नेवि मुणी होहिंति अणाइया लोए ॥ ५ ॥ होहिंति य पाएणं दंसणवज्झव साहुपडिणीया । सड्ढावि दुवियड्ढा नडिया कुग्गाहमाईहिं ॥ ६ ॥ तो दाणधम्मवुद्धिं विहणंता अप्पणो परेसिं च । वट्टिस्संति न पायं उवग्गहे तदुचियाणंपि ॥ ७ ॥ णाणलवबद्धगवा उत्तरपडिउत्तरेहिं गुरुवग्गं । दुवयणकंटियाहिं तवहिंति परोक्खपच्चक्खं ॥ ८ ॥ एवं बब्बूल समा होहिंति

उवासगावि दुसमाए । पडिकूलाणवि तेसिं इयरे काहिंति अणुवित्तिं ॥ ९ ॥ गुणरहियअप्पसत्ता पायडदोसत्ति दीणयं पत्ता । जुत्तमजुत्तं तेसिं वहु मन्निस्संति ववहारं ॥ १० ॥ बहुकम्मरया एवं सुणगा होहिंति धम्मगच्छावि । थोवा पुव्वुत्तगुणा उभएवि य तइयसुविणत्थो ॥ ११ ॥

'धंखेत्यादि' । इह तुच्छणाणसलिला पयईए संकडा अगंभीरा । वाविव्व दुरवगाहा गुरुणो होहिंति णरनाह! ॥ १ ॥ धंखव्व तयासन्ने अमहिच्छा चलमणा अथिरदिट्ठी । समणोवासगजइणो सिढिलायारा चरिस्संति॥ २ ॥ तेसिं च केइ सविसेसधम्मतण्हालुया अविन्नाणा। कालाणुरूवकिरियंपि नियगुरुं निग्गुणं गणिउं ॥३॥ मायण्हियासमेसुं नियमइकप्पियगुणेसु विविहेसु । संजायभत्तिराया पासत्थाईसु गमिहिंति ॥ ४ ॥ मज्झत्थजाणगेहिं पण्णवियावि हु असद्दहाणे उ । ठाहिंति ते यपायं मरिहंति य धम्मजीएण ॥ ५ ॥ गुरुजणजणियावण्णा सड्ढावि कुतित्थियाइजोएण । दंसणजीयविउत्ता भमिहिंति भवन्नवे घोरे॥६॥ अप्पा विवेयकलिया वाविसमाणवि गुरूण आणाए। साहिस्संति सुधम्मं चउत्थसुविणप्फलं एयं ॥ ७ ॥

'सीहो' इत्यादि । अइसयणाणपरक्कमवित्तासियविविहकुमयमयनिवहो । कुग्गाहगयपणासी सीहसमो एस जिणधम्मो ॥ १ ॥ वहुविहलद्धिजुएहिं देविंदाईहिं वंदियपएहिं । साहूहिं परिग्गहिओ परिभूओ णेय केणावि ॥ २ ॥ कुमयवणसंडगुविले कुदेसणावल्लिभग्गमग्गम्मि । कुग्गाहगत्तपउरे भरहारण्णम्मि दुसमाए ॥ ३ ॥ सो मयसीहसरिच्छो होही वोच्छिन्नअइसयप्पसरो । तहवि हु पुव्वगुणेहिं न हु गम्मो खुद्दलोयस्स ॥ ४ ॥ होहिंति कीडयसमा सपांगडसेविणो[1] दुरायारा ।

1 ग घ सपाडगसेविणो ।

एत्थेव य जइगिहिणो पवयणनिद्धंधसा खुद्दा ॥ ५ ॥ छकायनिरणुकंपा कयविक्कयमंतविज्जयाईहिं । अत्थज्जणेक्करसिया लोयावज्जणपरा पावा ६ ॥ अन्नेवि आइसड्ढा अवन्नवाउज्जुया मुणिजणस्स । समइविगप्पियकिरिया तवस्सिणो जे अगीयत्था ॥ ७ ॥ एएहिं जणियछिद्दं दट्ठुं अन्नेवि तव्विघायत्थं । वट्टिस्संति गयभया पंचमसुविणस्स फलमेयं ॥ ८ ॥

'पउमागरा' इत्यादि । एत्थ य सहावविमलाणि सीलसुरभीणि अप्पसत्ताणि । सिरधारणोचियाइं तियसाणवि पउमकप्पाइं ॥ १ ॥ धम्मियजणपत्ताइं तयागरा उग्गभोगमाईणि । उत्तमकुलाणि अहवा सागेयपुराइनयराणि ॥ २ ॥ दूसमवसेण होही न धम्मपत्ताण तेसु उप्पत्ती । गद्दभगविब्भमाणं सवलसहावाण वा भावो ॥ ३ ॥ ताणिवि न नियं रूवं धरिहिंति जहुत्तलिंगमेत्तंपि । उक्कुरुडियासरिच्छं पंतकुला अहव पच्चंता ॥ ४ ॥ धम्मत्थिनरा तेसुं वक्कजडा मंदबुद्धिणो पायं। होहिंति अप्पछंदा गुरुलाघवणाणपरिहीणा ॥ ५ ॥ थेवा पसंतरूवा गुरुजणबहुमाणिणो असढसीला । मइमंतो सक्किरिया विरियणुरूवं जइस्संति ॥ ६ ॥ सुहसीलथूलमइणा जणेण पाएण तेवि परिभूया । साहिस्संति न सुगइं अणुसइगवाइदोसेहिं ॥ ७ ॥ एत्थम्मि अप्पतरगा सद्धम्माराहगा भविस्संति । छट्ठसुविणस्स एसो परूविओ तुम्ह भावत्थो ॥ ८ ॥

'वीएसु' इत्यादि । किसिकम्मसमो सुरनरभोगफलो सुद्धदाणधम्मुत्थ। करिसगसमा य पहुणो छित्ताइं सुद्धपत्ताइं ॥१॥ वीयाणि पुणो णायागयाओ आहारउवहिवसहीओ । उग्गमउप्पायणएसणाहिं णियमा विसुद्धाइं ॥ २ ॥ दुसमाए दायारो सवुद्धिबहुमाणिणो अगीया य । दुवियड्ढकरिसगा इव न सुद्धदाणे रमिस्संति ॥ ३ ॥ धरिहिंति पक्खवायं आहाकम्माइ दोसदुट्ठम्मि । पउरम्मि मणुन्नम्मि दाणम्मि अ वीयकप्पम्मि ॥ ४ ॥ वियरिस्संति तयं पुण छकायविराहणापसत्तेसु ।

निक्कारणपडिसेविसु ऊसरसरिसेसुं पत्तेसु ॥ ५ ॥ सुद्धंपि घयगुलाई काउं ओगाहिमाइरूवेण । दाहिंति तुच्छवीया मिच्छा-वच्छलतत्तिल्ला ॥ ६ ॥ अहव तिलभूमिगावीजुत्तहलाईणि पावहेऊणि । पायं दाहिंति जणा सारंभाऽबंभयारीणं ॥ ७ ॥ सुद्धविवेगा विरला जहागमं दाणधम्मववहारे । वट्टिस्संति सरूवं सत्तमसुविणस्स निद्दिट्ठं ॥ ८ ॥

'कलसा येत्यादि' । कम्ममलहरणपच्चलचलणजलाधारभूयनेवच्छा । दुसमद्धाए जइणो कलसव्व दुहा भविस्संति ॥१॥ एगे विसुद्धसंजमपासाओवरि सुहा जणाणंदा । उवसमपउमपिहाणा तवसिरिसिरिखंडचच्चिक्का ॥ २ ॥ विविहगुणकुसुम-मालालंकियमंगलभूइसत्तिल्ला । सुहगुरुआणाथालीसु संठिया णाणकंतिल्ला ॥ ३ ॥ अन्ने पमायमहियलखुत्तंगा भग्गसुद्ध-वयकन्ना । अयसोगालिविलित्ता पायडअइयारपंकंका ॥ ४ ॥ तेवि पुण कालदोसा उग्घाडमुहेवि भासकिरियाए । दट्ठूण उवरिमावि हु तेसिं दोसे पयासेंता ॥ ५ ॥ खावेंता नियग्गुणे कलहंता गरुयमच्छरामरिसा । टलिऊण संजमाओ आणा-थालीसु परिभट्ठा ॥ ६ ॥ पडिहिंति ताण उवरिं तुल्लगुणट्ठाणजोगओ पायं । दोग्गइ अबोहिरूवं भंगं च समं लहिस्संति ॥ ७ ॥ उप्पइऊणं विरला सुगइं जाहिंति जे उ चरणजुया । अट्ठमसुमिणस्स इमो भणिओ नरनाह ! गब्भत्थो ॥ ८ ॥ उप्पाय दट्ठुमप्पाणमेयवक्करस पुण इमो अत्थो । अप्पाणं थोवाणं उप्पाओ राइणा ···(णेओ?) ॥ ९ ॥

गाथाक्षरार्थस्तु भाष्यानुसारेण विज्ञेय इति ।

इत्थं लोकोत्तरे दुष्षमायां निगुणं बहुजनमाश्रित्य ज्ञातान्यभिहितानि । लोकेऽपि निजशैल्या कलियुगमाश्रित्य ज्ञाता-न्तराणि परैः प्रतिपादितानि दृश्यन्ते । 'कूपेत्यादि' कूपावाहाजीवनं कूपेनावाह उपजीविष्यते । तथा 'तरुफलवहंति' तरूणां

फलनिमित्तं वधच्छेदो भविष्यति । तथा 'गावित्रच्छिधावणया' इति गौः सुरभिर्वच्छिकां निजामेव धास्यति । 'लोहिवि-
वज्जयकलमल'त्ति लौही अयोमयी महाकटाही तस्यां सुगंधितैलपाकोचितायां विपर्ययेण व्यत्ययेन कलमलस्य दुर्गन्धि-
पिशितादेः पाको भविष्यति । तथा 'सप्पगरुडपूजपूजाउ'त्ति सर्पगरुडयोर्यथाक्रमं पूजा चापूजा चेति ॥ ८३३ ॥ तथा;—

**हत्थंगुलिदुगघट्टण गयगद्दभसगड वालसिलधरणं । एमाई आहरणा लोयम्मिवि कालदोसेणं ॥ ८३४ ॥**

'हस्ताङ्गुलिद्वयघट्टनेति' हस्तस्य मसिद्धरूपस्याङ्गुलिद्वयेन घट्टनं स्वरूपाच्चलनं भविष्यति । 'गयगद्दभसगड'त्ति गजवो-
ढव्यं शकटं गर्दभवोढव्यं भविष्यति । 'वालसिलधरणं'ति वालवद्धायाः शिलाया धरणं भविष्यति । एवमादीन्याहरणानि
लोकेऽपि कालदोषेण कलिकालापराधेन कथ्यन्त इति ॥ ८३४ ॥ अथैतेषामेव दार्ष्टान्तिकानर्थान् दर्शयन्नाह;—

**रण्णो दियाइगहणं पुत्तपिउव्वेग कन्निविक्किणणं । इड्ढीपरजणचाओ णिद्दयदाणं ण इयरेसिं ॥ ८३५ ॥**

राज्ञः कूपस्थानीयस्य द्विजादिग्रहणं ब्राह्मणक्षत्रियविट्शूद्रेभ्यः स्वयमेव भर्त्तव्येभ्य अवाहस्थानीयेभ्यः सकाशाज्जल-
तुल्यस्यार्थस्य ग्रहणमुपादानमिति प्रथमज्ञातार्थः । द्वितीयस्य तु 'पुत्रपित्रुद्वेग' इति पुत्रेण फलभूतेन तरुभूतस्य पितुर्गौर-
वार्हस्याप्युद्वेगो धनपत्रलेखनादिना जनयिष्यत इति । तृतीयस्य तु 'कन्याविक्रयण'मिति गोस्थानीयाभ्यां मातापितृभ्यां
वच्छिकातुल्यायाः कन्याया विक्रयणं विनियमनं करिष्यते, तैस्तैरुपायैस्तदुपजीवनमित्यर्थः । चतुर्थस्य तु 'ऋद्धिपरजन-
त्याग' इति ऋद्धेर्लक्ष्म्या उपार्जितायाः परेषु जनेष्विहलोकपरलोकावपेक्ष्यानुपकारिषु त्यागो वितरणं भविष्यतीति । पञ्च-

मस्य तु 'निर्दयदानं' निर्दयेभ्यो हिंसादिपापस्थानात् कुतोऽप्यनिवृत्तेभ्यो दानं पात्रबुद्ध्या स्वविभववितरणं, न नैवेतरेभ्यः सदयेभ्यो ब्रह्मचारिभ्यः साधुसाधुभ्य इति ॥ ८३५ ॥

**जुयघरकलह कुलेयरमेर अणुसुद्धधम्मपुढविठिई । वालुगवक्कारंभो एमाई आइसद्देण ॥ ८३६ ॥**

षष्ठस्य तु जुयेत्यादि । 'जुयहरकलह'त्ति युतगृहेण वधूवरकृतेन कुटुम्बस्य कलहो जनकच्छायाविध्वंसकारी भविष्यति । सप्तमस्य तु 'कुलेयरमेरा' इति । कुलेभ्य इक्ष्वाकुप्रभृतिभ्य इतराणि यानि विजातिकुलानि तेषु मर्यादा प्राप्स्यत इति । अष्टमस्य तु 'अणुशुद्धधर्मपृथ्वीस्थितिः' इति । अणुना बालतुल्येन शुद्धधर्मेण शिलातुल्यायाः पृथ्व्याः स्थितिरवस्थानं भविष्यति । वालुकायाः सकाशाद् वल्कारम्भस्त्वगुच्चाटनरूप इत्येवमाद्युदाहरणमादिशब्दाद् द्रष्टव्यम् । अस्य त्वयमर्थः —यथा वालुकायाः वल्कोच्चाटनमतिदुष्करं तथा राजसेवादिष्वर्थोपायेषु क्रियमाणेष्वप्यर्थलाभ इति ॥ ८३६ ॥



यथा चैतानि लौकिकज्ञातानि जातानि तथा दर्शयति;—

**कलिअवयारे किल णिज्जिएसु चउसुंपि पंडवेसु तहा । भाइवहाहकहाए जामिगजोगम्मि कलिणा उ८३७**

कलेः कलियुगस्य द्वात्रिंशत्सहस्राधिकवर्षचतुष्टयलक्षप्रमाणस्यावतारे प्रवेशे सम्पन्ने सति, किलेति परोक्तासप्रवादसूचनार्थः, निर्जितेषु चतुर्ष्वपि पांडवेषु भीमार्जुननकुलसहदेवलक्षणेषु; तथा, तत्प्रकारया भ्रातृवधस्य शतप्रमाणदुर्योधनादिपितृव्यपुत्रघातलक्षणस्य कथया यामिकयोगे प्रतिप्रहरमन्यान्यप्राहरिकव्यवस्थापनलक्षणे कलिना चतुर्थयुगलक्षणेन ।

॥ ३६८ ॥

तुः पूर्ववत् । तथाहि—पाण्डवा विहितसमस्तकौरवरूपकण्टकोद्धाराश्चिरकालपालितसमर्जितराज्याः पश्चिमे वयसि निजगोत्रक्षयलक्षणं महदस्माभिरकार्यमकारि । अतो हिमपथप्रवेशमन्तरेण नैतच्छुद्धिरस्तीति विमुच्य राज्यं पश्चापि हिमपथं प्रतिप्रस्थिताः क्वचिद्वनोद्देशे प्राप्ताः । संध्यासमये ततो युधिष्ठिरेण भीमादयश्चत्वारोऽपि प्रतिप्रहरं प्राहरिका निरूपिताः । सुप्तेषु युधिष्ठिरादिषु कलिः पुरुषरूपेणावतीर्य भीमप्रहरके तमधिक्षेप्तुमारब्धो यथा त्वं भ्रातृगुरुपितामहादीन् हत्वा धर्म्मार्थं प्रस्थितः । स च तद्वचोऽक्षाम्यंस्तेन सह योद्धुमारब्धः । यथा २ च भीमः क्रुध्यति तथा तथासौ वर्धते । एवममौ निर्जितः कलिना । शेषा अप्येवं स्वप्रहरकेष्वधिक्षिप्ता रुष्टा जिताश्चेति । ततः सावशेषायां निशायां युधिष्ठिरे उत्थिते आगतोऽसौ । निर्जितश्च क्षमाबलात्तेन कलिः । ततो निर्जिते स्थगिते सरावेण दर्शिते प्रभाते भीमादीनां तस्मिन् काले भणितं तेन—क्षमानिग्राह्योऽहं, ममावतारेण च कुलवैरमिदं भवतां संलग्नम् । तथा, एवमाद्यष्टोत्तरशतेन कूपावाहाजीवनादिना शिष्टा निजस्थितिस्तेन तेषामिति ॥ ८३७ ॥

एवं पाएण जणा कालणुभावा इहंपि सव्वेवि । णो सुंदरत्ति तम्हा आणासुद्धेसु पडिबंधो ॥ ८३८ ॥

एवमुक्तोदाहरणवत् प्रायेण वाहुल्येन जना लोकाः कालानुभावाद् वर्तमानकालसामर्थ्यादिहापि जैने मते सर्वेऽपि साधवः श्रावकाश्च नो नैव सुन्दराः शास्त्रोक्ताचारसारा वर्त्तन्ते । किंत्वनाभोगादिदोषाच्छास्त्रप्रतिकूलप्रवृत्तयः । इति पूर्ववत् । तस्मात् कारणादाज्ञाशुद्धेषु सम्यगधीतजिनागमाचारवशात् शुद्धिमागतेषु साधुषु श्रावकेषु प्रतिबन्धो बहुमानः कार्यः ॥ ८३८ ॥ तर्ह्यन्येषु किं कार्यमित्याह;—

इयरेसुंपि य पओसो णो कायव्वो भवट्ठिई एसा। णवरं विवज्जणिज्जा विहिणा सइ मग्गणिरएण ॥ ८३९ ॥

इतरेष्वपि जिनवचनप्रतिकूलाऽनुष्ठानेषु समुपस्थितदुर्गतिपातफलमोहाद्यशुभकर्मविपाकेषु लोकोत्तरभिन्नेषु जन्तुषु प्रद्वेषो मत्सरस्तद्दर्शने तत्कथायां वाऽक्षमारूपो नो नैव कर्तव्यः । तर्हि किं कर्तव्यमित्याशंक्याह—भवस्थितिरेषा, यतः कर्मगुरवोऽद्याप्यकल्याणिनो न जिनधर्माचरणं प्रति प्रह्वपरिणामा जायन्त इति चिन्तनीयं । तथा, नवरं केवलं विवर्ज्ज-नीया आलापसंलापविश्रम्भादिभिः परिहरणीया विधिना विविक्तग्रामनगरवसत्यादिवासरूपेण सदा सर्वकालं मार्गनिरतेन सम्यग्दर्शनादिमोक्षमार्गस्थितेन साधुना श्रावकेण च । अन्यथा तदालापसंभाषादिना संसर्गकरणे कुष्ठज्वररोगोपहतसं-सर्ग इव तत्तद्दोषसंचारादिहलोकपरलोकयोरनर्थावाप्तिरेव । अतएवोक्तम्;—"सीहगुहं वग्घगुहं उदयं च पलित्तयं च सो पविसे । असिवं ओमोयरियं दुस्सीलजणप्पिओ जो उ ॥ १ ॥" इति ॥ ८३९ ॥

ननु प्रमत्तपाखण्डिजनाकुलत्वात् प्रायो विहारक्षेत्राणामशक्यमालापादिवर्जनमित्याशंक्याह;—

अग्गीयादाइण्णे खेत्ते अणत्थ ठिइअभावम्मि । भावाणुवघायणुवत्तणाए ते सिं तु वसियव्वं ॥ ८४० ॥

'अगीताद्याकीर्णे' अगीतार्थैरादिशब्दाद् गीतार्थैरपि मंदधर्मैः पार्श्वस्थादिभिस्तीर्थान्तरीयैश्च भागवतादिभिराकीर्णे सम-न्ताद् व्याप्ते क्षेत्रे, अन्यत्रागीतार्थाद्यनाकीर्णक्षेत्रे दुर्भिक्षराजदौस्थ्याद्युपप्लववशेन स्थित्यभावे सति भावानुपघातेन सम्य-क्प्रज्ञापनारूपस्य शुद्धसमाचारपरिपालनरूपस्य च भावस्यानुपघातेन याऽनुवर्तना 'वायाए णमोकारो' इत्यादिरूपानुवृ-

पाखण्डि-
जनाकुले-
क्षेत्रेस्थिति-
दुष्कर-
त्वम्—

त्तिस्तया तेषां तु तेषामेव वसितव्यं तत्र क्षेत्रे । एवं हि तेऽनुवर्त्तिताः स्वात्मनि बहुमानवन्तः कृता भवन्ति, राजव्यसन-दुर्भिक्षादिषु साहाय्यकारिणश्चेति ॥ ८४० ॥ विपर्यये बाधकमाह;—

**इहरा सपरुवघाओ उच्छुभाईहिं अत्तणो लहुया । तेसिंपि पावबंधो दुगंपि एयं अणिट्ठंति ॥ ८४१ ॥**

इतरथा तेषामननुवर्तनया वासे क्रियमाणे स्वपरोपघातः सम्पद्यते । एनमेव दर्शयति । तत्रोत्क्षोभो हेरिकाचौर्याद्य-ध्यारोपरूपः । आदिशब्दात् कथञ्चित् कस्यचित् प्रमादाचरितस्योपलब्धस्य मत्सरातिरेकात् सुदूरविस्तारणं, तथाविधकु-लेष्वन्नपानादिव्यवच्छेदश्च गृह्यते । ततस्तैरात्मनः स्वस्य लघुताऽनादेयरूपता भवति । तेषामपि पापबंधो बोधिघातफलो, न केवलं स्वस्य तन्निमित्तभावेनेत्यपिशब्दार्थः । एवं च सति यत् स्यात् तद्दर्शयति—द्विकमप्येतत् पूर्वोक्तमनिष्टं दुर्गति-पातकारि जायते । इतिः पूर्ववत् ॥ ८४१ ॥

**ता दव्वओ य तेसिं अरत्तदुट्ठेण कज्जमासज्ज । अणुवत्तणत्थमेसिं कायव्वं किंपि णउ भावा ॥ ८४२ ॥**

यत एवमनुवर्तनायां दोषः, तत् तस्माद् द्रव्यतस्तु कायवाङ्मात्रप्रवृत्तिरूपादेव तेषामगीतार्थादीनाम्, अरक्तदुष्टेन रागद्वेषयोरन्तरालवर्त्तिना सता कार्यं निरुपवासलक्षणमाश्रित्यानुवर्त्तनार्थमनुकूलभावसम्पादननिमित्तम्, एषामगीतार्था-दीनां कर्त्तव्यं किमपि वचनसंभाषादि, न तु भावाद् बहुमानरूपात् । कलाध्ययनोक्तश्चेत्थमेतद्वन्दनाविषयोऽपवाद उप-लभ्यते । यथा—"परिवारपरिसपुरिसं खेत्तं कालं च आगमं णाउं । कारणजाए जाए जहारिहं जस्स जं जोग्गं ॥ १ ॥ परिवारो से सुविहिया परिसगओ साहई च वेरग्गं । माणी दारुणभावो निसंसपुरिसाहमो पुरिसो ॥ २ ॥ लोगपगओ

निवो वा अहवा रायाइदिक्खिओ होज्जा । खेत्तं विहिमाइ अभावियं व कालो अणागालो ॥ ३ ॥ विहिमाइत्ति—कांताराादि । दंसणणाणचरित्तं तवविणयं जत्थ जत्तियं पासे । जिणपण्णत्तं भत्तीए पूयए तत्थ तं भावं ॥ ४ ॥ तथा ॥ गच्छपरिरक्खणट्ठा अणागयं आउवायकुसलेण । एवं गणाहिवइणा सुहसीलगवेसणा कज्जा ॥ ५ ॥ उप्पन्नकारणम्मी कीकम्मं जो न कुज्ज दुविहंपि । पासत्थाईयाणं चउगुरुगा भारिया तस्स ॥६॥" इत्यादि ॥८४२॥ अत्रैव दृष्टान्तमभिधातुमाह;—

**एत्थं पुण आहरणं विण्णेयं णायसंगयं एयं । अगहिलगहिलो राया बुद्धीए अणट्ठरज्जोत्ति ॥ ८४३ ॥**

अत्रागीतार्थाद्यनुवृत्तौ पुनराहरणं विज्ञेयं न्यायसङ्गतं युक्तियुक्तमेतद् वक्ष्यमाणम् । तदेव दर्शयति—अग्रहिलग्रहिलोऽग्रहवान् ग्रहिलः संवृत्तः कश्चिद् राजा । बुद्ध्या बुद्धिनाम्ना मन्त्रिणा अनष्टराज्यः कृतः । इतिः पूर्ववत् ॥ ८४३ ॥

इदमेवोदाहरणं विशेषतो गाथाचतुष्टयेन भावयति;—

**पुहविपुरम्मि उ पुण्णो राया बुद्धी य तस्स मंतित्ति। कालण्णुणाण मासुवरि वुट्ठि दग गह सुवासं तो८४४**
**रायणिवेयण पडहग दगसंगह जत्तओ अहाथामं। वुट्ठि अपाणं खीणेपाणम्मी गह कमा पायं ॥८४५॥**
**सामंताईयाणवि ढुक्कं वासं दवं च रण्णोत्थि । तेसिं मंतण णिवगह बंधामो मंतिणाणं ति ॥८४६॥**
**सिट्ठे णत्थि उवाओ तं दग कित्तिमगहो य मिलणंति।तोसो रज्जम्मि ठिती सुवास सव्वं तओ भद्दं ॥८४७॥**

तत्र पृथ्वीपुरे नगरे पूर्णो नाम राजा बुद्धिश्च तस्य मन्त्री सचिव इति । अन्यदा कालज्ञस्य कस्यचित् ज्ञानमभूत् ।

यथैतन्मासोपरि वृष्टिर्भविष्यति । 'दगगहत्ति' तद्वृष्ट्युदकाच्च पीताद् ग्रह उन्मादः संपत्स्यते लोकानां । 'सुवासं तो' इति । ततः कियत्यपि काले गते सुवर्षं सुवृष्टिर्भविष्यति । तस्मिंश्च सुन्दरे सम्पन्ने सर्वं सुन्दरं भविष्यति । प्रज्ञप्तं तेन राजपुरतः ॥ ८४४ ॥ एवं कालज्ञेन कथिते राज्ञा निवेदना लोकस्य—'पडहगहत्ति' पटहकप्रदापनेन कृता । तत उदकस्य संग्रहो यत्नतो यथास्थाम यथासामर्थ्यं कृतः सर्वेणापि लोकेन । वृष्टिर्निरूपितमासोपरि संवृत्ता, अपानं तज्जलस्य । क्षीणे संगृहीते जले पाने प्रवृत्ते नव्यनीरस्य, ग्रह उन्मादरूपः क्रमात् प्रायो बाहुल्येन लोकस्य संवृत्तः ॥ ८४५ ॥ सामन्तादीनामपि प्रचुरतरगृहीतादूपितजलानां तज्जलक्षये ढुक्कमुपस्थितं वर्षं दूषितवृष्टिनीरं, तेऽपि तत्पीतवन्त इत्यर्थः । द्रंयं च पुराणपानीयस्यन्दसंग्रहो राज्ञोऽस्ति न पुनरन्यस्य कस्यचित् । ततो राजाऽग्रहिलतया यदा तेषां सामंतादीनां न कासुचिच्चेष्टासु मिलति, तदा तेषां मन्त्रणमभूत्—'निवगहत्ति' । यथाऽयं नृपोऽस्मासु सत्सु राज्यसुखभागी भवति, अस्मन्मताननुवर्त्तकस्तु कियच्चिरं राज्यं करिष्यतीति गृहीत्वा बध्नीम एनम् । एवं मन्त्रयमाणानां तेषां मन्त्रिणो बुद्धेर्ज्ञानमभूदिति ॥८४६॥ ततः शिष्टे (ग्रं०१२०००) मन्त्रिणा नृपस्य नास्त्यन्य उपाय एतदनुवर्त्तनमन्तरेण राज्यजीवितव्ययो रक्षणे इति तत्पुराणोदकमुदकं पिबता सता कृत्रिमग्रहश्च कृत्रिम एव ग्रहो दर्शितो, राज्ञा मिलनं कृतम् । ततस्तेषां मध्ये इत्येतेषां तोषः प्रमोदो राज्ये स्थितिर्निश्चलतारूपा जाता । कालेन सुवर्षमभूत् । सर्वं ततो भद्रं संवृत्तम् ॥ ८४७ ॥

एएणाहरणेणं आयाराया सुबुद्धिसचिवेण । दुसमाए कुग्गहोद्गपाणगहा रक्खियव्वोत्ति ॥ ८४८ ॥

एतेनाहरणेन आत्मा राजा वर्तते । स राजकल्प आत्मा सुबुद्धिसचिवेन शास्त्रानुसारिणी बुद्धिरेव सचिवस्तेन,

दुष्षमायां कुग्रह एव शास्त्रबाधितबोधलक्षणः उदकपानग्रहो जलपानोत्पन्नग्रहरूपस्तस्माद्रक्षितव्य इति॥८४८॥अत एवाह;—

**बहुकुग्गहम्मिवि जणे तदभोगणुवत्तणाए तह चेव । भावेण धम्मरज्जे जा सुहकालो सुवासंति ॥ ८४९ ॥**

बहवः प्रभूताः कुग्रहा विपरीतार्थाभिनिवेशरूपा यस्य स तथा तस्मिन्नपि जने लोके वर्त्तमानकालभाविनि, तदभोगेन तस्य कुग्रहजलस्यानुपजीवनेन याऽनुवर्त्तनोक्तरूपा तया, तथा चैव राजमन्त्रिदृष्टान्तेनैव, भावेन परिपूर्णसाधुधर्मसाधनेच्छारूपेण धर्मराज्ये सर्वसावद्यविरतिलक्षणे स्थापयित्वा आत्मा रक्षणीय इत्यनुवर्तते । यावच्छुभकालः सुषमादुःषमादिलक्षणः शुद्धसाधुधर्माराधनायोग्यः सुवर्षमिति सुवृष्टिकालतुल्यः समभ्येतीति ॥ ८४९ ॥ अस्यैव रक्षणीयोपायमाह;—

**आणाजोगेण य रक्खणा इहं ण पुण अण्णहा णियमा । ता एयम्मि पयत्तो कायव्वो सुपरिसुद्धम्मि ॥८५०॥**

आज्ञायोगेन पूर्वमेव निरूपितरूपाज्ञाराधनेनैव रक्षणा परिपालनाऽत्रात्मनि, न त्वन्यथा मणिमन्त्रौषधाद्युपयोगेन परमार्थमिथ्याचारपरिपालनेन वा नियमान्नियमेन, तथारक्षितस्याप्यकृताज्ञाराधनादिकस्य नरकादिदुर्गतिपातसम्भवेन परमार्थतोऽरक्षणमेव तस्य संपद्यत इति । तत्तस्मादेतस्मिन्नाज्ञायोगे प्रयत्न आदरः कर्तव्यः सुपरिशुद्धे उत्सर्गापवादतया सम्यग् निर्णीते इति ॥ ८५० ॥ अथ परिशुद्धाज्ञायोगोपायमाह;—

**तित्थे सुत्तत्थाणं गहणं विहिणा उ एत्थ तित्थमियं । ता एयम्मि पयत्तो कायव्वो सुपरिसुद्धम्मि ॥ ८५१ ॥**

१ सर्वेष्वप्यादर्शपुस्तकेष्वस्यां गाथायामस्मिन् पूर्वगाथोत्तरार्द्धतुल्ये उत्तरार्धे सत्यपि टीकानुरोधात् "उभयण्णू चेव गुरू विहीय विणयाइओ चित्तो" इत्युत्तरार्धपाठेन भवितव्यम् ।

तीर्थे वक्ष्यमाणलक्षणे सूत्रार्थग्रहणं विधिना तु विधिनैव वक्ष्यमाणेन । अत्र सूत्रावयवे तीर्थमिदमुच्यते । उभयज्ञश्चैव सूत्रार्थरूपज्ञातैव गुरुर्व्याख्याता साधुः, विधिश्च सूत्रार्थग्रहणे विनयादिकश्चित्रो नानारूपः । इह विनयः कायिकवाचिक-मानसभेदात्रिधा । आदिशब्दाद् वक्ष्यमाणमण्डलीप्रमार्जनादिग्रह इति ॥ ८५१ ॥ अथ गुरोरेव विशेपतः स्वरूपमाह;—

**उभयण्णूवि य किरियापरो दढं पवयणाणुरागी य। ससमयपण्णवओ परिणओ य पण्णो य अच्चत्थं८५२॥**

उभयज्ञोऽपि च गुरुः क्रियापरो मूलगुणोत्तरगुणाराधनायां वद्धकक्षो, दृढमत्यर्थं प्रवचनानुरागी च जिनवचनं प्रति-बहुमानत्वात् । तथा, स्वसमयप्रज्ञापकः स्वसमयस्य चरणकरणाद्यनुयोगभेदभिन्नस्य तैस्तैरुपायैः प्ररूपकः । परिणतश्च वयसा व्रतेन च । प्राज्ञश्च वहुवहुविधादिग्राहकवुद्धिमानऽत्यर्थमतीव । एवंविधेन हि गुरुणा प्रज्ञाप्यमानोऽर्थो न कदा-चिद्विपर्ययभाग्भवतीत्येवमेप विशेष्यत इति ॥ ८५२ ॥ अथ स्वसमयप्रज्ञापकलक्षणं विशेपत आह;—

**जो हेउवायपक्खम्मि हेउओ आगमे य आगमिओ। सो ससमयपन्नवओ सिद्धंतविराहगो अण्णो ८५३॥**

यः कश्चिद्धेतुवादपक्षे जीवकर्मादौ युक्तिमार्गसहे वस्तुनि हेतुवादप्रणयनप्रवीणः । यथा—"बोहसरूवनिमित्तं विसयप-रिच्छेयगं च जं नाणं । विवरीयसरूवाणि य भूयाणि जगप्पसिद्धाणि ॥ १ ॥ ता कह तेसिं धम्मो फलं च तं होज्ज जस्स पुण एयं । धम्मो फलं च होज्जा स एव आया मुणेयव्वो ॥ २ ॥" तथा । "जो तुल्लसाहणाणं फले विसेसो न सो विणा हेउं । कज्जत्तणओ गोयम! घडोव्व हेऊ य से कम्मं ॥ १ ॥" इत्यादि । आगमे च देवलोकपृथ्वीसंख्यादावर्थे आगममा-

स्वसमय-
प्रज्ञापक-
लक्षणम्-

त्रगम्ये आगमिकः—आगममात्रप्रज्ञापनाप्रवणः स्वसमयप्रज्ञापक उच्यते । व्यवच्छेद्यमाह—सिद्धान्तविराधको जिनवचनानुयोगविनाशकः, अन्यः प्रागुक्तविशेषणविकलः साधुः । तथा हि—युक्तिमार्गसहेष्वप्यर्थेष्वागमगम्यत्वमेव पुरस्कुर्वता तेन नास्तिकादिप्रणीतकुयुक्तिनिराकरणाभावाद् न श्रोतॄणां दृढा प्रतीतिः कर्तुं पार्यते । आगमगम्येषु तु युक्तिपथातीतेषु युक्तिमुद्ग्राहयन्नसम्पादितविवक्षितप्रतीतिर्निष्फलारम्भत्वेन स्वयमेव वैलक्ष्यं श्रोतुश्चानादेयस्वभावं प्राप्नुयात्, इति न सम्यक् सिद्धान्तस्तेनाराधितो भवति, विपरीतव्यवहारित्वात् तस्य ॥ ८५३ ॥ एवंविधगुरुसमाश्रयणे फलमाह;—

**[एत्तो[1] सुत्तविसुद्धी अत्थविसुद्धी य होइ णियमेणं । सुद्धाओ एयाओ णाणाईया पयट्टंति ॥ ८५४ ॥]**

इतोऽस्मादेव गुरोः सूत्रविशुद्धिर्व्यञ्जनस्वरपदमात्राबिन्द्वादिभिरविकलपाठनेन वचनरूपागमनिर्मलता, अर्थविशुद्धिश्च यथार्थव्याख्यानेनाविपर्यस्तार्थबोधरूपा भवति नियमेन निश्चयेन व्याकरणच्छन्दोज्योतिःशास्त्रादिसिद्धान्तव्याख्यानांगप्रवीणत्वात् तस्य । शुद्धाच्चास्मात् सूत्रादर्थाच्च ज्ञानादयो मोक्षमार्गभूता अविकलाः प्रवर्तन्ते ॥८५४॥ अत्रैव विशेषमाह;—

**सुत्ता अत्थे जत्तो अहिगयरो णवरि होइ कायव्वो । एत्तो उभयविसुद्धित्ति मूयगं केवलं सुत्तं ॥ ८५५ ॥**

सूत्राद् वचनस्वरूपादर्थे तद्व्याख्यारूपे यत्नोऽधिकतरः सुवहुर्भवति । 'नवरि'त्ति नवरं केवलं कर्त्तव्यः । इतोऽर्थशुद्धेरुभयविशुद्धिः सूत्रार्थनिर्मलतारूपा यत् सम्पद्यते । इत्यस्मात् कारणादधिकतरः प्रयत्नस्तत्र कर्त्तव्य इति । अत एवाह



१ इयमपि मूलगाथा नास्ति पुस्तकेषु । टीकानुसारेण त्वत्रोपनिबद्धा ।

मूककं मूकपुरुषतुल्यं कस्यचिदर्थस्यावाचकं केवलं व्याख्यानरहितं तत् सूत्रमिति न ततस्तात्त्विककार्यसिद्धिः, किं तु तद्व्याख्यानादेवेति ॥ ८५५ ॥ अथार्थरूपमेव व्याचष्टे;—

**अत्थो वक्खाणंति य एगट्ठा एत्थ पुण विही एसो । मंडलिमाई भणिओ परिसुद्धो पुव्वसूरीहिं ॥ ८५६ ॥**

अर्थो व्याख्यानमिति चैकार्थावेतौ शब्दौ । अत्र व्याख्याने पुनर्विधिर्नीतिरेष वक्ष्यमाणो मण्डल्यादिर्भणितः परिशुद्धः सकलदोषविकलः पूर्वसूरिभिर्भद्रबाहुस्वामिप्रभृतिभिः ॥ ८५६ ॥ तमेव विधिं दर्शयति;—

**मंडलि णिसिज्ज अक्खा किइकम्मुस्सग्ग वंदणं जेट्ठे । उवओगो संवेगो पसिणुत्तर संगयत्थ त्ति ॥ ८५७ ॥**

'मण्डलीति' व्याख्यानमण्डलीभूमिप्रमार्जना, ततो निषद्या आसनरूपा आचार्यस्याक्षाणां च, किन्तु सा सविशेषोच्चा कर्त्तव्या । कृतिकर्म द्वादशावर्त्तवन्दनरूपं देयं व्याख्यात्रे । तत उत्सर्गोऽनुयोगप्रस्थापनाय कायोत्सर्गः, वन्दनं तस्मिन्नेव समये दातव्यं ज्येष्ठे इति । ज्येष्ठाय ज्येष्ठश्चेह गृह्यते यश्चिन्तनिकां कारयति न तु पर्यायतः, श्रुतज्येष्ठस्यैव तदानीं बहूपकारित्वात् । तथोपयोगो व्याख्यायमानार्थावधानरूपः । संवेगो वैराग्यम् तथा, प्रश्नोत्तरे—तत्र प्रश्नः श्रोतुरनधिगतार्थपृच्छारूपः, उत्तरञ्च शिष्यपर्यनुयोगगर्त्तपातोत्तारकारिप्रतिवचनं गुरोः । कीदृशे प्रश्नोत्तरे इत्याह—संगतार्थे युक्तियुक्ते नत्वप्रस्तुताभिधायितासूचके । इतिः व्याख्याविधिसमाप्त्यर्थः ॥ ८५७ ॥ अत्रैव मतान्तरमाह;—

**सीसविसेसे णाउं सुत्तत्थाइविहिणा व काऊण । वक्खाणिज्ज चउद्धा सुत्तपयत्थाइभेएण ॥ ८५८ ॥**

शिष्यविशेषान् मृदुमध्याधिमात्रप्रज्ञाभेदभिन्नान् ज्ञात्वा सूत्रार्थादिविधिना । "सुत्तत्थो खलु पढमो बीओ निज्जुत्तिमीसिओ भणिओ। तइओ य निरवसेसो एस विही होइ अणुओगे ॥ १ ॥" इत्येवंलक्षणेन विशेषितं, वाशब्दः प्रकारान्तरसूचनार्थः, स च भिन्नक्रमोऽग्रे योक्ष्यते, कृत्वा विधाय सूत्रमिति गम्यते, व्याख्यानयेद् विवृणीयात् । चतुर्द्धा वा सूत्रपदार्थादिभेदेन; इह सूत्रपदानामर्थः पदार्थमात्रोल्लिंगना, आदिशब्दाद् वाक्यार्थमहावाक्यार्थैदम्पर्यग्रह इति ॥ ८५८ ॥

अथेदमेव व्याचष्टे;—

**पयवक्कमहावक्कत्थमेदंपज्जं च एत्थ चत्तारि । सुयभावावगमम्मि हंदि पगारा विणिद्दिट्ठा ॥ ८५९ ॥**

पदं च वाक्यं च महावाक्यं च पदवाक्यमहावाक्यानि तेषामर्थः प्रादुष्कर्त्तव्यः प्रथमतः शिष्यस्य । मकारोऽलाक्षणिकः । ऐदम्पर्यं च पश्चात् प्रकाशयेत् । एवमत्र व्याख्यानविधिनिरूपणायां चत्वारः श्रुतभावावगमे, हंदीत्युपप्रदर्शने, प्रकारा भेदा विनिर्दिष्टा इति । तत्र द्विविधं पदं सुबन्तं तिङन्तं च । पुनरपि सुबन्तं त्रिधा, नामोपसर्गनिपातभेदात् । तत्र नाम घट इत्यादि, उपसर्गः प्रपरेत्यादि, निपातश्च वाहीत्यादि । तिङन्तं च भवति पचतीत्यादि । एकार्थप्रतिपादकानि पदानि, वाक्यं पदार्थचालनारूपं, वाक्यान्येव विशिष्टतरैकार्थचालितार्थप्रत्यवस्थानरूपं महावाक्यम् । इदं परं प्रधानं यत्र भणने तत् तथा, तद्भाव ऐदम्पर्यं सूत्रार्थभावार्थ इत्यर्थः ॥ ८५९ ॥

अथ कस्मादेषां पदार्थादीनां व्याख्याभेदानामंगीकार इत्याशंक्याह;—

**संपुण्णेहिं जायइ सुयभावावगमो इहरहा उ। होइ विवज्जासोवि हु अणिट्ठफलओ य सो णियमा ॥८६०॥**

सम्पूर्णः पदार्थादिभिर्दर्शितैर्जायते श्रुतभावस्य शास्त्रपरमार्थलक्षणस्यावगमोऽवबोधः श्रोतुः। विपर्यये बाधकमाह— इतरथा त्वन्यथा पुनर्भवति विपर्यासो विपरीतशास्त्रार्थप्रतिपत्तिरूपोऽपि, तु शब्दात् संशयानध्यवसायौ गृह्येते। यदि नामैवं ततः किमित्याह—अनिष्टफलप्रदश्च नरकादिदुर्गतिपातहेतुः पुनः स विपर्यासो नियमादवश्यम्भावेन ॥ ८६० ॥

अथैतानेव पदार्थादीन् परमतोपन्यस्तदृष्टान्तद्वारेण साधयितुमिच्छुराह;—

एएसिं च सरूवं अण्णेहिवि वण्णियं इहं णवरं। सत्तुग्गहणट्ठद्धाणभट्ठतण्णाणणाएण ॥ ८६१ ॥

एतेषां च पदार्थादीनां स्वरूपमन्यैरपि तीर्थान्तरीयैर्वर्णितम्, इह व्याख्यानावसरे नवरं केवलं व्याख्येयसूत्रपदानुपन्यासेनेत्यर्थः। कथमित्याह-शत्रुग्रहनष्टाध्वभ्रष्टतज्ज्ञानन्यायेन कस्यचित् क्वचित् पाटलिपुत्रादौ गन्तुं प्रवृत्तस्य काञ्चिद् विषमां भुवं प्राप्तस्य शत्रुग्रहे प्रवृत्ते नष्टस्य ततोऽध्वभ्रष्टस्य मार्गच्युतस्य यस्तज्ज्ञाने मार्गावबोधे न्यायस्तेनेति ॥ ८६१ ॥

अथैनमेव न्यायं दर्शयति;—

दट्ठूण पुरिसमेत्तं दूरे णो तस्स पंथपुच्छत्थं। जुज्जइ सहसा गमणं कयाइ सत्तू तओ होज्जा ॥ ८६२ ॥

दृष्ट्वा समवलोक्य पुरुषमात्रमज्ञातविशेषं पुरुषमेव केवलं दूरे महतान्तरेण व्यवधाने नो नैव तस्य विमर्शकारिणः पथिकस्य शत्रुभयाद् मार्गाद्भ्रष्टस्य पथिपृच्छार्थं मार्गजिज्ञासानिमित्तं युज्यते घटते सहसाऽपर्यालोच्येत्यर्थः गमनं तत्समीपे। कुतो। यतः कदाचिच्छत्रुर्द्विषन्नपि यद्भयान्नष्टस्तकः पुरुषो भवति ॥ ८६२ ॥

**वेसविवज्जासम्मिवि एवं बालाइएहिं तं णाउं । तत्तो जुज्जइ गमणं इट्ठफलत्थं णिमित्तेण ॥ ८६३ ॥**

वेषविपर्यासेऽपि—शत्रुविशेषस्य यो विपर्यासो वैलक्षण्यं परिव्राजकादिलिंगधारणरूपं तत्रापि, किं पुनः शत्रुविशेषे सतीत्यपिशब्दार्थः, एवं तत्समीपे पथिपृच्छार्थं गमनं न युज्यते, शत्रोरपि पथिकविश्वासनार्थं तथाविधवेषप्रतिपत्तेः सम्भाव्यमानत्वात् । तर्हि किं कर्तव्यमित्याशंक्याह—बालादिकेभ्यो बालवृद्धमध्यमवयःस्थेभ्यः स्त्रीपशुपालभामहादिरूपेभ्य एकान्तत एव सत्यवादितया सम्भाव्यमानेभ्यस्तं पुरुषं मार्गपृच्छायोग्यं ज्ञात्वा ततस्तदनन्तरं युज्यते गमनम् । किमर्थमित्याह—इष्टफलार्थं इहेष्टं फलं निरुपद्रवमार्गपरिज्ञानं निमित्तेन मनःपवनशकुनादिनाऽनुकूलेनेति ॥ ८६३ ॥

इत्थं प्रतिवस्तूपमारूपं दृष्टान्तमभिधाय दार्ष्टान्तिके योजयति;—

**एवं तु पयत्थाई जोएज्जा एत्थ तंतणीईए । अइदंपज्जं एयं अहिगारी पुच्छियव्वोत्ति ॥ ८६४ ॥**

एवं त्वनन्तरोक्तनीत्यैव पदार्थादीन् पदवाक्यमहावाक्यार्थान् योजयेद् दार्ष्टान्तिकतया घटयेत् अत्र प्रस्तुते व्याख्यानविधौ । कथमित्याह—तन्त्रनीत्या श्रुतानुसारेण । तथा ह्यत्र दर्शनतुल्यः पदार्थो न तस्मादिष्टानिष्टयोः प्राप्तिपरिहारौ स्यातां, शत्रोरपि तत्रानिवृत्तेः; शत्रुवेषभेददर्शनतुल्यो वाक्यार्थो, न तस्मादपीष्टसिद्ध्यादिभावः, पूर्वोक्तादेव हेतोः; बालाबलादिभ्यस्तदवगमतुल्यस्तु महावाक्यार्थः, सिद्ध्यति चास्माज्जिज्ञासितोऽर्थः । ऐदम्पर्यं तु साक्षादाह—ऐदम्पर्यमेतद् यथा एवं शुद्धोऽधिकारी पन्थानं प्रष्टव्यो नान्यः । इतिः प्राग्वत् ॥ ८६४ ॥

व्याख्यास्वरूपार्थ दृष्टान्तादि–

अथ साक्षादेव कतिचित्सूत्राण्याश्रित्य पदार्थादीनि व्याख्यांगानि दर्शयन्नाह;—

**हिंसिज्ज ण भूयाइं इत्थ पयत्थो पसिद्धगो चेव । मणमाइएहिं पीडं सव्वेसिं चेव ण करिज्जा ॥८६५॥**

हिंस्याद् व्यापादयेद् न नैव भूतानि पृथिव्यादीन् प्राणिनः । अत्र सूत्रे पदार्थः प्रसिद्धकश्चैव प्रख्यातरूप एव । तमेव दर्शयति-मनआदिभिर्मनोवाक्कायैः पीडां वाधां सर्वेषां चैव समस्तानामपि जीवानां न कुर्याद् न विदध्यादिति ॥८६५॥ तथा;—

**आरंभिपमत्ताणं इत्तो चेइहरलोचकरणाई । तक्करणमेव अणुबंधओ तहा एस वक्कत्थो ॥ ८६६ ॥**

आरंभः पृथिव्याद्युपमर्दः स विद्यते येषां ते आरंभिणो गृहस्थाः, प्रमाद्यन्ति निद्राविकथादिभिः प्रमादैः सर्वसावद्ययोगविरतावपि सत्यां ये ते प्रमत्ता यतिविशेषाः, आरम्भिणश्च प्रमत्ताश्च आरंभिप्रमत्तास्तेषाम्, इतः पदार्थाच्चैत्यगृहलोचकरणादि, चैत्यगृहमर्हतो भगवतो विम्वाश्रयः, लोचकरणं च केशोत्पाटनरूपम्, आदिशव्दात् तत्तदपवादाश्रयणेन तथाप्रवचनदुष्टनिग्रहादिपरपीडाग्रहः । तेषां करणं तत्करणमेव प्राग्निषिद्धहिंसाकरणमेव प्राप्तम् । कुत इत्याशंक्याह—अनुवन्धतोऽनुगमात् तथा तत्प्रकारायाः परपीडाया इत्येष चालनारूपो वाक्यार्थ इत्यर्थः ॥ ८६६ ॥

**अविहिकरणम्मि आणाविराहणा दुट्ठमेव एएसिं । ता विहिणा जइयव्वंति महावक्कत्थरूवं तु॥८६७॥**

अविधिकरणेऽनीतिविधाने चैत्यगृहलोचादेरर्थस्याज्ञाविराधनाद् भगवद्वचनविलोपनाद् दुष्टमेवैतेषां चैत्यगृहादीनां करणम् । तत्र चेयमाज्ञा "जिनभवनकरणविधिः शुद्धा भूमिर्दलं च काष्ठादि । भृतकानतिसन्धानं स्वाशयवृद्धिः समा-

व्याख्याविधौ वाक्यमहावाक्यार्थादिभेदाः—

सेन ॥ १ ॥" लोचकर्मविधिस्तु "धुवलोओ य जिणाणं वासावासासु होइ थेराणं । तरुणाणं चउमासे वुड्ढाणं होइ
छम्मासे ॥ १ ॥" इत्यादि । तत् तस्माद् विधिना जिनोपदेशेन यतितव्यम् । इत्येवं महावाक्यार्थस्य प्राक्चालितप्रत्यव-
स्थानरूपस्य रूपं तु स्वभावः पुनः ॥ ८६७ ॥ महावाक्यार्थमेव गाथापूर्वार्द्धेनोपसंहरन्नैदम्पर्यमाह;—

**एवं एसा अणुबंधभावओ तत्तओ कया होइ । अइदंपज्जं एयं आणा धम्मम्मि सारोत्ति ॥ ८६८ ॥**

एवं विधिना यत्ने क्रियमाणे एषा हिंसाऽनुबन्धभावत उत्तरोत्तरानुबन्धभावाद् मोक्षप्राप्तिपर्यवसानानुगमात् तत्त्वतः
परमार्थतः कृता भवति, मोक्षसम्पाद्यजिनाज्ञाया उपरमाभावादिति । ऐदम्पर्यमेतदत्र यदुताज्ञा धर्मे सारः । इतिः
परिसमाप्तौ ॥ ८६८ ॥

**[एवं चइज्ज गंथं इत्थ पयत्थो पसिद्धगो चेव । णो किंचिवि गिण्हिज्जा सचेयणाचेयणं वत्थुं ॥ ८६९ ॥]**

एवं प्रागुक्तपदार्थवत् त्यजेद् ग्रन्थम् । अत्र वचने पदार्थः प्रसिद्धकश्चैव प्रतीतरूप एव । तमेव दर्शयति नो किञ्चिदपि
गृह्णीयात् परिग्रहविषयीकुर्यात् सचेतनाचेतनं शिष्यवस्त्रादि वस्तु ॥ ८६९ ॥

**एत्तो अईयसावेक्खयाण वत्थाइयाणमग्गहणं । तग्गहणं चिय अहिगरणवुड्डिओ हंदि वक्कत्थो ॥८७०॥**

इतोऽस्मात् त्यजेद् ग्रन्थमित्येवंरूपाद्वचनात् । अतीतसापेक्षतादीनामतीतातिक्रान्ता सापेक्षता शरीरमात्रेऽपि स्पृहारूपा
येषां ते तथा तेषां भावसाधूनामित्यर्थः, वस्त्रादीनां वस्त्रपात्रशिष्यादीनां वस्तूनामग्रहणमापन्नम् । एतच्च वस्त्राद्यग्रहणं

तद्ग्रहणमेव मिथ्यात्वादिरूपग्रन्थग्रहणमेव। कुत इत्याह—अधिकरणवृद्धितोऽधिक्रियत आत्मा नरकादिष्वनेनेत्यधिकरण-मसंयमस्तस्य वृद्धिरुपचयस्तस्याः सकाशात् सम्पद्यत एव रजोहरणाद्युपधिमन्तरेण जिनकल्पिकादीनामप्यसंयमवृद्धिः। हंदीति पूर्ववत्। एष वाक्यार्थो, यथा न सर्वथा ग्रन्थत्यागः श्रेयान्, य उच्यते 'चएज्ज गंथं' इत्यादिवचनेनेति ॥ ८७० ॥

**आणावाहाए तहा गहणंपि ण सुंदरंति दट्ठवं । ता तीए वट्टियव्वंति महावक्कत्थमो णेओ ॥ ८७१ ॥**

आज्ञाबाधया "जिणा बारसरूवाणि थेरा चउदसरूविणो । अज्जाणं पन्नवीसं तु अओ उड्ढमुवग्गहो ॥ १ ॥" इत्यादि-वचनोल्लङ्घनेन तथेत्यधिकरणवृद्धिभयाद् ग्रहणमिति वस्त्रादीनां न सुन्दरमिति द्रष्टव्यं, किं पुनः सर्वथैवाग्रहणमित्यपि-शब्दार्थः। तत् तस्मात् तस्यामाज्ञायां वर्त्तितव्यमिति महावाक्यार्थो ज्ञेय इति ॥ ८७१ ॥

महावाक्यार्थमेव गाथाप्रथमार्द्धेन निगमयन्नैदम्पर्यमाह;—

**एयं एवं अहिगरणचागओ भावओ कयं होइ । एत्थवि आणातत्तं धम्मस्स इदं इदंपज्जं ॥ ८७२ ॥**

एतद् ग्रन्थत्यजनं 'चएज्ज गंथं' इति वचनोक्तमेवमाज्ञानुसरणेनाधिकरणत्यागतोऽसंयमपरित्यागाद् भावतः परमार्थेन कृतं भवति। यो ह्याज्ञामनुसरन् वस्त्रादिग्रहणे प्रवर्त्तते तस्य कदाचित् कथञ्चनासंयमभावेऽपि बहुतरगुणान्तराराधनेन भावतोऽधिकरणत्याग एव, तदर्थत्वेनैव तस्य सर्वक्रियासु प्रवृत्तेरिति। अत्रापि पदार्थादिषु 'जह्याद् ग्रन्थं' इत्यादिषु आज्ञातत्त्वं धर्मस्येतीदमेतत् 'इदंपज्जं'ति ऐदम्पर्यम् ॥ ८७२ ॥

**एवं तवझाणाई कायव्वंति पयडो पयत्थो यं । छट्ठुस्सग्गाईणं करणं ओघेण लोगम्मि ॥ ८७३ ॥**

एवं प्रागुक्तपदार्थवत् 'मुमुक्षुणा तपोध्यानादि कर्त्तव्यम्' इत्यत्र प्रकटः स्फुटः पदार्थोऽयं यथा षष्ठोत्सर्गादीनां षष्ठादीनां तपोविशेषाणामुत्सर्गादीनां च कायोत्सर्गकायक्लेशादिलक्षणानां करणं विधानम्, ओघेन सामान्येन समर्थासमर्थादिपरिहारविशेषरूपेण लोकेऽपि धार्मिकजनलक्षणे रूढं वर्त्तत इति ॥ ८७३ ॥

**तुच्छावग्गाणंपि हु एत्तो एयाण चेव करणं ति । अकरणमो दट्ठवं अणिट्ठफलयंति वक्कत्थो ॥ ८७४ ॥**

तुच्छा असमर्था बालवृद्धादिलक्षणाः, अव्यक्ताश्चागीतार्थास्तेषां, न केवलमितरेषामित्यपिशब्दार्थः, इतो वचनादेषामेव षष्ठोत्सर्गादीनां करणं प्राप्तम्, तेषामपि मुमुक्षुत्वात् । इतिः प्राग्वत् । एतच्च तपोध्यानादिकरणमकरणं द्रष्टव्यं तुच्छाव्यक्तादीनाम् । कुतो, यतोऽनिष्टफलदं शक्त्यतिक्रमेण तपोध्यानादिकष्टानुष्ठानस्यार्त्तध्यानत्वेन तिर्यग्गत्याद्यशुभजन्महेतुत्वात् । इत्येष वाक्यार्थः ॥ ८७४ ॥

**आगमणीईए तओ एयाणं करणमित्थ गुणवंतं । एसा पहाणरूवत्ति महावक्कत्थविसओ उ ॥ ८७५ ॥**

आगमनीत्या आगमानुसारेण यत एवं महान् दोषस्तत एतेषां तपोध्यानादीनां करणमत्र धर्माधिकारे गुणवद् गुणावहम् । आगमनीतिश्चेयं—"तो जह न देहपीडा न यावि चियमंससोणियत्तं च । जह धम्मझाणवुड्ढी तहा इमं होइ कायव्वं ॥ १॥" तथा । "कायो न केवलमयं परितापनीयो, मिष्टै रसैर्बहुविधैर्न च लालनीयः । चित्तेन्द्रियाणि न चरन्ति

यथोत्पथेन, वश्यानि येन च तदाचरितं जिनानाम् ॥ २ ॥" एषा आगमनीतिः प्रधानरूपा सारभावमागता वर्त्तते धर्मे साध्ये । इत्येष महावाक्यार्थविषयः पुनरवगन्तव्यः ॥ ८७५ ॥ अत्रापि महावाक्यार्थनिगमनेनैदम्पर्यमाह;—

**एवं पसत्थमेयं णियफलसंसाहगं तहा होइ । इय एस च्चिय सिट्ठा धम्मे इह अइदपज्जं तु ॥ ८७६ ॥**

एवमागमनीत्या प्रशस्तं प्रशंसास्पदमेतत्तपोध्यानादि भवति सतां । तथा निजफलसंसाधकं मोक्षलक्षणफलहेतुः । तथेति समुच्चये । भवत्येषैवागमनीतिरेव श्रेष्ठा प्रधाना धर्मे इहैदम्पर्यमिदं पुनर्ज्ञेयम् ॥ ८७६ ॥ तथा;—

**दाणपसंसाईहिं पाणवहाईओ उजुपयत्थत्ति । एए दोवि हु पावा एवंभूओऽविसेसेणं ॥ ८७७ ॥**

दानप्रशंसादिभिर्दानप्रशंसया, आदिशब्दात् तन्निषेधदेशनया च प्राणवधादिः दानप्रशंसायां प्राणिवधः, तन्निषेधे च क्षपणादिलाभान्तरायः। अत एव सूत्रकृतांगे पठ्यते—"जे उ दाणं पसंसंति वहमिच्छंति पाणिणं । जे णं पडिसेहंति वित्ति-च्छेयं कुणंति ते ॥ १ ॥ 'उजुपयत्थोत्ति' अयं च ऋजुरेव पदार्थः । एनमेवाह—एतौ द्वावपि प्राणिवधकरणादिवृत्तिव्य-वच्छेदौ पापावसमंजसौ वर्त्तेते एवंभूतः पदार्थोऽविशेषेण सामान्येन । अयमभिप्रायः—धर्मस्यादिपदं दानं दानं दारिद्र्य-नाशनम् । जनप्रियकरं दानं दानं सर्वार्थसाधनम् ॥ १ ॥ इत्यादिभिर्वचनैर्नानारूपस्य जनप्रसिद्धस्य शस्त्रादिरूपदानस्य स्वभावत एव पृथिव्यादिजीवहिंसात्मकस्य प्रशंसायां नियमात् साधोर्जीवहिंसानुमतिः सम्पद्यते । तथा; तथाविधशास्त्र-संस्कारात् स्वयमेव कैश्चिद्धर्मार्थिभिः प्रवर्त्यमानस्योक्तरूपस्य दानस्य "वीजं यथोपरे क्षिप्तं न फलाय प्रकल्पते । तथाऽ-पात्रेषु दानानि प्रदत्तानि विदुर्बुधाः ॥ १ ॥" इत्यादिवचनैर्निषेधे क्रियमाणे क्षपणादिलाभान्तरायः सम्पद्यत इति ॥८७७॥

**एवं तवझाणाई कायव्वंति पयडो पयत्थो यं । छट्ठुस्सग्गाईणं करणं ओघेण लोगम्मि ॥ ८७३ ॥**

एवं प्रागुक्तपदार्थवत् 'मुमुक्षुणा तपोध्यानादि कर्त्तव्यम्' इत्यत्र प्रकटः स्फुटः पदार्थोऽयं यथा षष्ठोत्सर्गादीनां षष्ठादीनां तपोविशेषाणामुत्सर्गादीनां च कायोत्सर्गकायक्लेशादिलक्षणानां करणं विधानम्, ओघेन सामान्येन समर्थासमर्थादिपरिहारविशेषरूपेण लोकेऽपि धार्मिकजनलक्षणे रूढं वर्त्तत इति ॥ ८७३ ॥

**तुच्छावग्गाणंपि हु एत्तो एयाण चेव करणं ति । अकरणमो दट्ठव्वं अणिट्ठफलयंति वक्कत्थो ॥ ८७४ ॥**

तुच्छा असमर्था बालवृद्धादिलक्षणाः, अव्यक्ताश्चागीतार्थास्तेषां, न केवलमितरेषामित्यपिशब्दार्थः, इतो वचनादेषामेव षष्ठोत्सर्गादीनां करणं प्राप्तम्, तेषामपि मुमुक्षुत्वात् । इतिः प्राग्वत् । एतच्च तपोध्यानादिकरणमकरणं द्रष्टव्यं तुच्छाव्यक्तादीनाम् । कुतो, यतोऽनिष्टफलदं शक्त्यतिक्रमेण तपोध्यानादिकष्टानुष्ठानस्यार्त्तध्यानत्वेन तिर्यग्गत्याद्यशुभजन्महेतुत्वात् । इत्येष वाक्यार्थः ॥ ८७४ ॥

**आगमणीईए तओ एयाणं करणमित्थ गुणवंतं । एसा पहाणरूवत्ति महावक्कत्थविसओ उ ॥ ८७५ ॥**

आगमनीत्या आगमानुसारेण यत एवं महान् दोषस्तत एतेषां तपोध्यानादीनां करणमत्र धर्माधिकारे गुणवद् गुणावहम् । आगमनीतिश्चेयं—"तो जह न देहपीडा न यावि चियमंससोणियत्तं च । जह धम्मझाणवुड्ढी तहा इमं होइ कायव्वं ॥ १॥" तथा । "कायो न केवलमयं परितापनीयो, मिष्टै रसैर्बहुविधैर्न च लालनीयः । चित्तेन्द्रियाणि न चरन्ति

यथोत्पथेन, वश्यानि येन च तदाचरितं जिनानाम् ॥ २ ॥" एषा आगमनीतिः प्रधानरूपा सारभावमागता वर्त्तते धर्मे
साध्ये । इत्येष महावाक्यार्थविषयः पुनरवगन्तव्यः ॥ ८७५ ॥ अत्रापि महावाक्यार्थनिगमनेनैदम्पर्यमाह;—

**एवं पसत्थमेयं णियफलसंसाहगं तहा होइ । इय एस च्चिय सिट्ठा धम्मे इह अइदपज्जं तु ॥ ८७६ ॥**

एवमागमनीत्या प्रशस्तं प्रशंसास्पदमेतत्तपोध्यानादि भवति सतां । तथा निजफलसंसाधकं मोक्षलक्षणफलहेतुः ।
तथेति समुच्चये । भवत्येषैवागमनीतिरेव श्रेष्ठा प्रधाना धर्मे इहैदम्पर्यमिदं पुनर्ज्ञेयम् ॥ ८७६ ॥ तथा;—

**दाणपसंसाईहिं पाणवहाईओ उजुपयत्थत्ति । एए दोवि हु पावा एवंभूओऽविसेसेणं ॥ ८७७ ॥**

दानप्रशंसादिभिर्दानप्रशंसया, आदिशब्दात् तन्निषेधदेशनया च प्राणवधादिः दानप्रशंसायां प्राणिवधः, तन्निषेधे च
क्षपणादिलाभान्तरायः। अत एव सूत्रकृतांगे पठ्यते—"जे उ दाणं पसंसंति वहमिच्छंति पाणिणं । जे णं पडिसेहंति वित्ति-
च्छेयं कुणंति ते ॥ १ ॥ 'उजुपयत्थोत्ति' अयं च ऋजुरेव पदार्थः । एतमेवाह—एतौ द्वावपि प्राणिवधकरणादिवृत्तिव्य-
वच्छेदौ पापावसमंजसौ वर्त्तेते एवंभूतः पदार्थोऽविशेषेण सामान्येन । अयमभिप्रायः—धर्मस्यादिपदं दानं दानं दारिद्र्य-
नाशनम् । जनप्रियकरं दानं दानं सर्वार्थसाधनम् ॥ १ ॥ इत्यादिभिर्वचनैर्नानारूपस्य जनप्रसिद्धस्य शस्त्रादिरूपदानस्य
स्वभावत एव पृथिव्यादिजीवहिंसात्मकस्य प्रशंसायां नियमात् साधोर्जीवहिंसानुमतिः सम्पद्यते । तथा; तथाविधशास्त्र-
संस्कारात् स्वयमेव कैश्चिद्धर्मार्थिभिः प्रवर्त्यमानस्योक्तरूपस्य दानस्य "वीजं यथोपरे क्षिप्तं न फलाय प्रकल्पते । तथाऽ-
पात्रेषु दानानि प्रदत्तानि विदुर्बुधाः ॥ १ ॥" इत्यादिवचनैर्निषेधे क्रियमाणे क्षपणादिलाभान्तरायः सम्पद्यत इति ॥८७७॥

**एवं पडिवत्तीए इमस्स तह देसणाए वोच्छेओ। तम्हा विसेसविसयं दट्ठव्वमिणंति वक्कत्थो ॥८७८॥**

एवमविशेषेण प्रतिपत्तौ पदार्थस्य तथाविधरूपतया वा दानविषयाया देशनाया व्यवच्छेदः प्राप्तः । न चासौ युक्तो, यतो दानशीलतपोभावनात्मकस्य धर्मस्य सर्वास्तिकशास्त्रेषु प्रतिपादयितुमधिकृतत्वात् । तस्मादहो सूरे! विशेषविषयं विभागेनेत्यर्थः, द्रष्टव्यमिदं दानविधानं तन्निषेधनं चेति वाक्यार्थः ॥ ८७८ ॥

व्याख्याविधौ वाक्यमहावाक्यार्थादिभेदाः—

**आगमविहितं तम्मि पडिसिद्धं वाहिगिच्च णो दोसो। तब्बाहाए दोसोत्ति महावक्कत्थगम्मं तु ॥८७९॥**

आगमविहितं शास्त्रानुमतं यद्दानं, तस्मिन्नेवागमे प्रतिषिद्धं वा निवारितं यत् तदधिकृत्य देशनायां दानस्य विधिविषयायां प्रतिषेधविषयायां च क्रियमाणायां न दोषो जीवहिंसानुमत्यादिलक्षणः कश्चित् प्रज्ञापयितुः सम्पद्यते । यदागमे विहितं दानं तस्य विधिदेशनायां, यच्च तत्र निषिद्धं तन्निषेधदेशनायां च न कश्चिद् दोष इत्यर्थः । तत्र चायमागमः— "नायागयाणं कप्पणिज्जाणं अन्नपाणाईणं देसकालसद्धासक्कारकमजुयं आयाणुग्गहबुद्धीए संजयाणं दाणं" । तथा, समणोवासयस्स णं भंते ! तहारूवं समणं वा माहणं वा पडिहयपच्चक्खायपावकम्मं फासुएणं एसणिज्जेणं असणपाणखाइमसाइमेणं पडिलाभेमाणस्स किं कज्जति?, गोयमा! एगंतसो निज्जरा एव । समणोवासयस्स णं भंते ! तहारूवं समणं वा माहणं वा पडिहयपच्चक्खायपावकम्मं अफासुएणं अणेसणिज्जेणं असणपाणखाइमसाइमेणं पडिलाभेमाणस्स किं कज्जति? गोयमा! वहुया से निज्जरा अप्पे पावकम्मेत्ति" । तथा, समणोवासयस्स णं भंते! तहारूवं समणं वा माहणं वा अप्प-

डिहयपच्चक्खायपावकम्मं फासुएण वा अफासुएण वा एसणिज्जेण वा अणेसणिज्जेण वा असणपाणखाइमसाइमेणं पडिलाभेमाणस्स किं कज्जति?, एगंतसो पावं कम्मे कज्जति" । तथा, मोक्खत्थं जं दाणं तं पइ एसो विही समक्खाओ । अणुकंपादाणं पुण जिणेहिं न कयावि पडिसिद्धं ॥ १ ॥ संथरणम्मि असुद्धं दोण्हवि गिण्हंतदेंतयाण हियं । आउरदिट्ठंतेणं तं चेव हियं असंथरणे ॥ २ ॥" आदिधार्मिकमाश्रित्य पुनरयमागमः—"पात्रे दीनादिवर्गे च दानं विधिवदिष्यते । पोष्यवर्गाऽविरोधेन न विरुद्धं स्वतश्च यत् ॥ १ ॥ व्रतस्था लिङ्गिनः पात्रमपात्रास्तु विशेषतः । स्वसिद्धान्ताविरोधेन वर्त्तन्ते ये सदैव हि ॥ २ ॥" एवं चागमे व्यवस्थिते तद्बाधया आगमोलंघनरूपया विधिप्रतिषेधयोः क्रियमाणयोर्दोष इत्येष जीववधादिलक्षणो महावाक्यार्थगम्यस्तु महावाक्यार्थगम्य एव ॥८७९॥ महावाक्यार्थमेव निगमयन्नैदम्पर्यमाह;—

इय एयस्साबाहा दोसाभावेण होइ गुणहेऊ । एसा य मोक्खकारणमइदंपज्जं तु एयस्स ॥ ८८० ॥

इत्येवमागमबाधायां दोषे सति एतस्यागमस्याबाधाऽनुल्लङ्घनमुत्सर्गासेवनेनापवादासेवनेन वा दोषाभावेनाशातनापरिहाररूपेण भवति गुणहेतुः । एषा चेयमेवागमाबाधा मोक्षकारणं निर्वृतिहेतुरित्यैदम्पर्यं त्वेतस्य दानसूत्रस्येति ॥ ८८० ॥ न केवलमनन्तरोदितकतिपयपदार्थविषयमेव पदवाक्यादिसमनुगतं सर्ववित्प्रणीतागमव्याख्यानं, किन्तु सकलसूत्रविषयमिति मनसि समाधायाह;—

एवं पइसुत्तं चिय वक्खाणं पायसो बुहजणेण । कायव्वं एत्तो खलु जायइ जं सम्मणाणं तु ॥ ८८१ ॥

एवमुक्तक्रमेण प्रतिसूत्रमेव यावन्ति सूत्राणि तान्यङ्गीकृत्येत्यर्थः । व्याख्यानं प्रायशो बुधजनेनावगतसमयरहस्येन साधुना कर्त्तव्यम्। कुत इत्याह—इतो व्याख्यानात् खलु निश्चयेन जायते यद्यस्मात् सम्यग्ज्ञानं त्वविपर्यस्तबोधः। यथा—मध्यमतीर्थकृतां चत्वारि महाव्रतानि, प्रथमपश्चिमयोस्तु पञ्चेति । अत्र श्रौत एव शब्दार्थः—एतेषां चत्वारि महाव्रतानि प्राणातिपातमृषावादादत्तादानपरिग्रहविरमणरूपाणि, प्रथमचरमयोस्तु पञ्च महाव्रतानि सह मैथुनविरत्या इत्येवं रूपः। परिग्रहविरत्यन्तर्गतैव मैथुनविरतिः, नापरिगृहीता योषिद् उपभुज्यते इति परमार्थतो मध्यमानामपि पञ्चैवेति वाक्यार्थः । रागद्वेषावेव परिग्रहः, तद्भावनान्तरीयकत्वात् तदुपयोगस्येति महावाक्यार्थः । एवमेव निष्परिग्रहता, अन्यथा तद्भावेऽपि न तद्दोषनिवृत्तिरित्यैदम्पर्यमिति। एवमन्यसूत्रेष्वपि पदार्थादयः सम्यग् उत्प्रेक्ष्य योजनीयाः ॥ ८८१ ॥

साम्प्रतमुक्तोपदेशव्यतिक्रमे दोषमादर्शयन्नाह;—

**इहरा अण्णयरगमा दिट्ठेट्ठविरोहणाणविरहेण। अणभिनिविट्ठस्स सुयं इयरस्स उ मिच्छणाणंति॥८८२॥**

इतरथा यथोक्तपदार्थादिविभागव्यतिक्रमेण व्याख्यानकरणे श्रुतं सम्पद्यत इत्युत्तरेण सम्बन्धः। कथमित्याह—अन्यतरगमाद्, इह गमा अर्थमार्गाः, ते च प्रतिसूत्रमनन्ताः संभवन्ति, यथोक्तं—"सव्वनईणं जा होज्ज वालुया सव्वउदहिजं उदयं। एत्तो य अणंतगुणो अत्थो एगस्स सुत्तस्स ॥ १ ॥" अतोऽन्यतरश्चासौ गमश्चान्यतरगमस्तस्मादेकस्यैवार्थमार्गस्याचालिताप्रत्यवस्थापितस्य समाश्रयणादित्यर्थः, दृष्टेष्टविरोधज्ञानविरहेण दृष्टः प्रत्यक्षानुमानप्रमाणोपलब्धः, इष्टश्च शास्त्रादिष्टोऽर्थस्तयोर्विरोधे बाधायां यज्ज्ञानमवबोधस्तस्य विरहेणाभावेन, अनभिनिविष्टस्येत्थमेवेदं वस्त्वित्यकृताग्रहस्य

आगम-
व्याख्या-
याः सकल-
सूत्रविषय-
त्वम्—

श्रुतमागमार्थोऽधीयमानः सम्पद्यते, न तु चिन्ताज्ञानभावनाज्ञानरूपज्ञानतां प्रतिपद्यते । इह त्रीणि ज्ञानानि श्रुतज्ञानादीनि । तल्लक्षणं चेदं—"वाक्यार्थमात्रविषयं कोष्ठकगतबीजसन्निभं ज्ञानम् । श्रुतमयमिह विज्ञेयं मिथ्याभिनिवेशरहितमलम् ॥ १ ॥ यत्तु महावाक्यार्थजमतिसूक्ष्मसुयुक्तिचिन्तयोपेतम् । उदक इव तैलबिन्दुर्विसर्पि चिन्तामयं तत् स्यात् ॥ २ ॥ ऐदम्पर्यगतं यद्विध्यादौ यत्नवत्तथैवोच्चैः । एतत्तु भावनामयमशुद्धसद्रत्नदीप्तिसमम् ॥ ३ ॥" अशुद्धसद्रत्नदीप्तिसममिति । अशुद्धस्य मलिनस्य च ततः प्राक् सतः सुन्दरस्य रत्नस्य पद्मरागादेर्दीप्त्या तुल्यमिति । इतरस्य त्विति अभिनिविष्टस्य पुनर्मिथ्याज्ञानं मिथ्याश्रुतरूपतां प्रतिपद्यते । इदमुक्तं भवति—इह कश्चित् 'एगे आया' इति स्थानाङ्ग प्रथमसूत्रस्य श्रवणादेक एव हि भूतात्मा देहे देहे व्यवस्थितः । एकधा बहुधा वापि दृश्यते जलचन्द्रवत् ॥ १ ॥" इत्येवं प्रतिपन्नात्माद्वैतवादः सङ्ग्रहनामैकनयाभिप्रायेणेदं सूत्रं प्रवृत्तमिति परमार्थमजानानः, तथाऽत्र मते दृष्टस्य पुरुषनानात्वस्येष्टस्य च संसारापवर्गविभागस्य बाधामपश्यंस्तथाविधज्ञानावरणक्षयोपशमाभावादेकात्मसत्त्वलक्षणमेवैकमर्थमार्गमधितिष्ठते, निराग्रहश्च प्रकृत्या तस्य सोऽर्थमार्गः श्रुतं, न तु चिन्ताभावनाज्ञानरूपम् । यस्तु स्वबोध एवाभिनिविष्टो गीतार्थः प्रज्ञाप्यमानोऽपि न सम्यग्मार्गार्थं प्रतिपद्यते तस्य तन्मिथ्याज्ञानमेव । एवमन्यसूत्रेष्वपि भावना कार्येति ॥ ८८२ ॥ आह—एवं प्रतिनियतसूत्रोद्देशेन लोके पदार्थादयो रूढास्तत्कथमित्थमेतत्प्रज्ञापना क्रियते? सत्यम्;—

**लोउत्तराउ एए एत्थ पयत्थादओ मुणेयव्वा । अत्थपदणाउ जम्हा एत्थ पयं होइ सिद्धंति ॥ ८८३ ॥**

लोकोत्तरास्तु जैनेन्द्रशासनानुसारिणः पुनरेतेऽनन्तरोक्ताः 'न हिंस्याद् भूतानि' इत्येवंलक्षणा अत्र प्रकृते पदार्थादयो

मुणितव्याः । ननु 'न हिंस्याद् सर्वभूतानि' इति वाक्यमेते एव, क्रियाधिष्ठितपदसमुदायात्मकत्वात्, अतः कथमेतदोघार्थः पदार्थो भवतीति? उच्यते—अर्थपदनात् अर्थस्य सामान्यरूपस्य अचालिताप्रत्यवस्थापितस्य पदनात् गमनात् प्रत्यायनादित्यर्थः, यस्मादत्र प्रथमे पदं भवति सिद्धं प्रतिष्ठितं इत्यस्माद्धेतोरोघार्थः पदार्थ एव । एवं वाक्यार्थादयोऽपि सद्भूतविशिष्टतरविशिष्टतमार्थपदनादेव स्वं स्वरूपं लभन्ते, न पुनर्बहुबहुतरपदसमूहमयत्वेन फल्गुरूपतयाऽर्थविशेषं कञ्चनापादयन्तो लौकिकशास्त्रेष्विवेति ॥ ८८३ ॥

**लोयम्मिवि अत्थेणं णाएणं एवमेव एएत्ति । विण्णेया बुद्धिमया समत्थफलसाहगा सम्मं ॥ ८८४ ॥**

तथा लोकेऽपि शिष्टजने, अर्थ्येन न्यायेनार्थापत्त्येत्यर्थः, एवमेव लोकोत्तरपदार्थादिप्रकारेणैते पदार्थादयः, इतिः प्राग्वत्, विज्ञेया बुद्धिमता जनेन समर्थफलसाधकाः प्रौढशास्त्रार्थप्रतीतिहेतवः, सम्यग् यथावत् । तथा हि लोके—"संहिता च पदं चैव पदार्थः पदविग्रहः । चालना प्रत्यवस्थानं व्याख्यानं तस्य षड्विधम् ॥ १ ॥" इति व्याख्याक्रमः । अत्र च पदार्थो लोकोत्तरपदार्थतुल्य एव, अविशिष्टार्थपदार्थगम्यत्वात् । चालना वाक्यार्थः, प्रत्यवस्थानं तु महावाक्यार्थः । ऐदम्पर्यं चात्र व्याख्यालक्षणे साक्षादनुक्तमपि सामर्थ्यादुक्तमेव द्रष्टव्यं, संहितादिव्याख्यानाङ्गैर्व्याख्यार्थस्यैदम्पर्यविषयत्वात् ॥ ८८४ ॥ अथ लोकोत्तरदृष्टान्तद्वारेण लौकिकपदार्थस्वरूपमभिधत्ते;—

**वक्खाइसद्दओ जं अविसिट्ठा चेव होइ बुद्धित्ति । उत्तर धम्मावेक्खा जहेव हिंसाइसद्दाओ ॥ ८८५ ॥**

पदार्थादीनां रूढत्वेप्येतत्प्रज्ञापनाहेतुः—

वृक्षादिशब्दतो वृक्षघटपटादिशब्देभ्यो यद् यस्मादविशिष्टा चैवात्र निम्बादिविशेषैरनालीढैव भवति बुद्धिरिति प्रागवत् । कीदृशीत्याह—उत्तरधर्म्मापेक्षा वृक्षस्योत्तरधर्मा मूलकन्दस्कन्धादयो जम्बूनिम्बादयश्च, घटादीनां तु ताम्रराजतसौवर्णादयः, तानपेक्षते आकाङ्क्षते या सा तथा । यथैव हिंसादिशब्दाद् "हिंस्याद् न सर्वभूतानि" इत्यादिलक्षणात् । तत इदमर्थादापन्नं—यथा हिंस्यान्न सर्वभूतानीत्यादयः शब्दाः पदार्थवाक्यार्थादिप्रकारेण निराकाङ्क्षस्वार्थप्रतिपादका भवन्ति, तथा वृक्षादयोऽपि शब्दाः पदार्थवाक्यार्थमहावाक्यार्थैदम्पर्यविषयभावमापन्नाः श्रोतृप्रतीतिमविकलामाराधयन्तीति । तथाहि—दूरे शाखादिमन्तं पदार्थमुपलभ्य कश्चित् कञ्चित् प्रति ब्रूयात् 'अग्रे वृक्षस्तिष्ठति' इति । तस्य च श्रोतुः श्रुत एव शब्दार्थः पदार्थः, अयं च वृक्षो भवन् किमाम्रो निम्बो वा स्यादिति चालनारूपो वाक्यार्थः, ततः प्रतिविशिष्टाकारावलोकनेनाम्र एव निम्बादिर्वायमिति प्रतिनियतः प्रत्ययो महावाक्यार्थः, इत्थमेव निर्णयपुरःसरमाम्रार्थिना प्रवर्त्तितव्यमित्यैदम्पर्यमिति ॥ ८८५ ॥ उपसंहरन्नाह;—

**कयमेत्थ पसंगेणं इमिणा विहिणा निओगओ णाणं । आणाजोगोवि इहं एसोच्चिय होइ णायव्वो ॥८८६॥**

कृतं पर्याप्तमत्र व्याख्याविधिकथने प्रसंगेन विस्तारेण, अनेन मण्डलीप्रमार्जनादिना विधिना नियोगतो नियमेन ज्ञानमागमश्रवणप्रवृत्तस्य श्रोतुः सम्पद्यते । आज्ञायोगोऽपि सम्यग्ज्ञानसाध्योऽत्र व्याख्याने एष एवोक्ताचारपरिपालनारूपो भवति ज्ञातव्यः ॥ ८८६ ॥ ज्ञानवांश्च यत्करोति तदाह;—

णाणी य णिच्छएणं पसाहई इच्छियं इहं कज्जं । बहुपडिबंधजुयंपि हु तहा तहा तयविरोहेण ॥ ८८७ ॥

ज्ञानी चात्र विधिगृहीतशास्त्रार्थावबोधः पुनः पुमान्निश्चयेन प्रसाधयति निष्पादयतीप्सितमाप्तुमिष्टमिह कार्यं धर्मार्थाद्याराधनरूपं बहुप्रतिबन्धयुतमप्यनेकविघ्नप्रतिस्खलितमपि, तथा तथा तत्तद्द्रव्यक्षेत्रादिस्वरूपानुवर्त्तनोपायेन, तदविरोधेन तस्येप्सितकार्यस्य योऽविरोधो घटना कार्यान्तरैरीप्सितैरेव तेनोपलक्षितः सन् । न हि धर्मान्तराणि बाधमानो धर्मो धर्मरूपतां प्रतिपद्यते । यथोक्तम्—"धर्मं यो बाधते धर्मो न स धर्मः सतां मतः । अविरोधेन यो धर्मः स धर्म इति कीर्तितः ॥१॥" तथा । "वेदवृद्धानुपचरेच्छिक्षितागमतः स्वयम् । अहेरिव हि धर्मस्य सूक्ष्मा दुरनुगा गतिः॥१॥" ॥८८७॥

मग्गे य जोयइ तहा केई भावाणुवत्तणणएण । बीजाहाणं पायं तदुचियाणं कुणइ एसो ॥ ८८८ ॥

मार्गे च सम्यग्दर्शनादिके निर्वाणपथे योजयति, तथेति समुच्चये, कांश्चिद्भव्यसत्त्वान् भावानुवर्त्तननयेन मृदुः खरो मध्यमो वा यः शिक्षणीयस्य प्राणिनो भावो मनःपरिणामस्तस्यानुवर्तनमेव नयो नीतिः सामलक्षणभावेनेयमेव च प्रधाना नीतिः कार्यसिद्धौ । यथोक्तम्—"यद्यप्युपायाश्चत्वारः प्रथिताः साध्यसाधने । संज्ञामात्रं फलं तेषां सिद्धिः साम्नि प्रतिष्ठिता ॥ १ ॥" तथा । "अतितीक्ष्णोऽपि दावाग्निर्दहन् मूलानि रक्षति । समूलमुन्मूलयति वायुर्यो मृदुशीतलः ॥ २ ॥" तथा, बीजाधानं धर्मप्रशंसादिकं प्रायश्च बाहुल्येनैव तदुचितानां 'कुलक्रमागतमनिन्द्यं विभवाद्यपेक्षया न्यायतोऽनुष्ठानम्' इत्यादिशिष्टगृहस्थाचारपरतया बीजाधानयोग्यानां करोत्येष ज्ञानी ॥ ८८८ ॥ अत्र दृष्टान्तमाह;—

ज्ञानिन इष्टकार्यप्रसाधकता—

एत्तो चिय झाणाओ मोक्खोत्ति निसामिऊण पढमं तु। तल्लग्गोवि हु चुक्कति नियमा उचियस्स सव्वस्स ॥
ता सुद्धधम्मदेसण परिणमणमणुव्वयाइगहणं च। इय णाणी कल्लाणं सव्वेसिं पायसो कुणति ॥ ८९८ ॥

नृपपत्नी कस्यचिद् राज्ञः कलत्रम् । सा च सहजमन्दमोहमालिन्यतया निर्विण्णा—"जरामरणदौर्गत्यव्याधयस्ताव-दासताम् । मन्ये जन्मैव धीराणां भूयो भूयस्त्रपाकरम् ॥ १ ॥" इत्यादिवचनाकर्णनाद् भवादुद्विग्ना । ततः संसारचार-कनिःसारोपायमन्वेषमाणा शुश्राव कुतोऽपि 'ध्यानाद् मोक्षः' इति । ततस्तदाग्रहसमेता ध्यानविषयाऽत्यन्ताग्रहसंयुता जाता । अन्यदा 'ससरक्खे' इति कश्चित् सरजस्कः शैवव्रती तया पृष्टो यथा 'कीदृशो ध्यानमार्गः' इति । कथितं च तेन, यथा—पद्ममध्ये चतुर्दलनाभिकमलाभ्यन्तरेऽपि त्रिनयनो देवः काशकुसुमसंकाशदेहः शशिखण्डमण्डितोत्तमाङ्गः तृतीयनेत्रप्रवृत्तज्वलनज्वालासमुज्वलीकृताखिलदिग्वलयो देहार्धधृतप्राणप्रियपार्वतीको ध्यातव्यः । तथा च तत्प्रक्रिया सिद्धिर्ऋद्धिर्धृतिर्लक्ष्मीर्मेधा क्षान्तिः स्वधा स्थितिः । सद्यो देवकला ह्यष्टौ समासात् परिकीर्त्तिताः" ॥ सद्यः—पश्चिमदले पूजयेत् । "रयो रक्षा रतिः पाल्या काम्या कृष्णा रतिः क्रिया । वृद्धिः कालश्च रात्रिश्च भ्रामणी मोहनी तथा ॥ १ ॥ वामदेवकला ह्येतास्त्रयोदश उदाहृताः" । वामदेव उत्तरदले पूजयेत् । "ततो मोहो मदो निद्रा माया मृत्युर्भयं जरा । अघोरस्य कला ह्येताः समासात् परिकीर्त्तिताः ॥ १ ॥" दक्षिणदलेऽघोरं पूजयेत् । "निर्वृत्तिश्च प्रतिष्ठाश्च विद्या शान्ति-स्तथैव च । तत्पुरुषस्य कला ह्येताश्चतस्रः परिकीर्त्तिताः ॥ १ ॥" पूर्वदले तत्पुरुषं पूजयेत् । "तारा सुतारा तरणी तार-

यन्ती सुतारंणी । ईशानस्य कलापञ्च पूजयेच्च प्रयत्नतः ॥ १ ॥" कर्णिकामध्ये ईशानं पूजयेत् । अष्टत्रिंशत्कलोपेतं पञ्च-तत्त्वसमन्वितम् । प्रासादं यो न जानाति नासौ जानाति शंकरम् ॥ १ ॥ इति । ततः सा तत्र त्रिनयनदेवे स्थितचित्ता निरन्तरमेव समारूढमानसा बभूव ॥ ८९० ॥ अन्यदा च तपःक्षीणसाधुदर्शनं षष्ठाष्टमादिकष्टरूपतपःकृशीकृतकायस्य कस्यचिद् जैनमुनेर्दर्शनमभूत् तस्याः । ततो बहुमानात् सेवना पर्युपासना तया तस्य प्रारब्धा । तथा तत्प्रकारसमये पृच्छा ध्याने ध्यानगोचरा तया तदग्रतः कृता, यथा 'कीदृशं ध्यानम्' । तेन चागीतार्थत्वाद् दण्डककथने कृते यथाऽस्माकं दण्डको भिक्षादिकाले हस्तग्राह्यो यष्टिविशेष ईर्यापथिकाप्रतिक्रमणादिसमयेऽग्रे कृत्वा ध्यायत इति । बाह्या ध्यानमार्गबहिर्वर्त्तिन एते जैना इत्यनुकम्पा दयाऽभूत् तस्याः ॥ ८९१ ॥ तेन च साधुना तां विपण्णपरिणामामुपलभ्य गीतनिवेदनं गीतार्थस्य कस्यचित् सूरेः कथनमकारि स्वप्रज्ञापनायाः । तेनापि प्रस्तावं प्राप्य तस्या आगमध्यानकथा । आगमे जैनशासने यदस्ति ध्यानं तस्य कथा प्रज्ञापना कृता । यथास्मन्मते तावदेकोऽयं ध्यानमार्गः—"संपुन्नचंदवयणो सीहासणसंठिओ सपरिवारो । कायव्वो य जिणिंदो केवलनाणुज्जलो धवलो ॥ १ ॥" इति । ततस्तस्या ध्यानाभ्युपगमे सम्पन्ने, तथा क्षेपे जाते कौतुकमभूत्, यथा—कियद्दूरं यावद् धार्मिकादिभिस्तत्र प्रवेशः क्रियते? । तत उक्तमाचार्येण 'यावद्वेवः' । अयमत्राभिप्रायः—यदा भगवान् देशनार्थमुपतिष्ठते, तदैकेनैव महर्द्धिकेन वैमानिकदेवेन कदाचित् प्राकारत्रयोपगतमशोकवृक्षाद्यष्टमहाप्रातिहार्योपेतं योजनप्रमाणभूभागव्यापि समवसरणं निष्पाद्यते, कदाचिच्च सर्वैरेव भवनपत्यादिभिर्देवनिकायैरिति । तत्र यानवाहनानि सचेतनान्यचेतनानि च तृतीयप्राकाराभ्यन्तर एव प्रविशन्ति । ये च

ता ओहेणं इहयं उचियत्तेणमविरोहओ जत्तो। कायव्वो जह भव गोणविगमओ जीवमणुयत्तं ॥ ९०६ ॥
तोसा सासणवण्णो पूजा भत्तीए वीजपक्खेवो। एवं णाणी वाहुल्लओ हियं चेव कुणइत्ति ॥ ९०७ ॥
एयारिसओ लोओ खेयण्णो हंदि धम्ममग्गम्मि। वुद्धिमया कायव्वो पमाणमिइ ण उण सेसोवि॥९०८॥

संमूर्च्छिमप्रायोऽसंज्ञितुल्यो युक्तायुक्तविवेचनासहोऽत एव श्रवणदुर्वलो यत्किञ्चनश्रुतग्राही, चेवेति समुच्चये, कोऽपि राजा आसीदिति। तथोत्तमधर्मायोग्यो विभक्तरूपदेवधर्म्मादिप्रतिपत्त्यसहिष्णुः प्रकृत्या श्राद्धो धर्मश्रद्धालुः, तथा कुपरिवारश्च दुःशिक्षितपरिवारानुगतश्च ॥ ८९९ ॥ स चान्यदा मुग्धधर्मश्रद्धालुतया ऋषिमात्रदर्शनेन तथाविधवठरजैनतपोधनावलोकनेन आवृत्त आक्षिप्तः सन्, तं प्रति पूजादाननिरतोऽभूत्। तत्र पूजाऽभ्युत्थानादिप्रतिरूपा, दानं च वस्त्रपात्रादिवितरणमिति। तेन च ऋषिणा कदाचित् तदग्रतः अन्यापोहः शाक्यादितीर्थान्तरीयनिरासः; तथा, अधिकरणकथा अधिकरणस्य त्रसस्थावरभूतोपमर्दरूपस्य कथा कृता, तत्र तन्निरासः, यथैते सन्मार्गविद्वेषिणः कुमार्गपुरस्कारिणश्च वर्त्तन्ते। अधिकरणकथा च नैतेषां त्रसस्थावरजीवपरिज्ञानं, तद्रक्षणोपायश्च कश्चिदस्तीति। एतच्च श्रुत्वासौ विपरिणतश्च तं प्रति विरक्तमानसः पुनः संवृत्तः, मूर्खोऽयं य इत्थं परदर्शनगोचरमत्सरभरपरवशो वर्त्तत इति कृत्वा ॥ ९०० ॥ तेन च साधुना गीतनिवेदनं गीतार्थसूरिनिवेदनं कृतम्। यथाऽसौ राजाऽसत्प्रज्ञापनाया विपरिणत आस्त इति। समये नागमस्तस्य सूरे राजान्तिके सम्पन्नः। ततस्तद्भावावगमस्तस्य राज्ञः सम्वन्धिनो भावस्य परिज्ञानमभूत्। सूरेः समये

भक्तिमात्राकृष्टाः करितुरगादयस्तिर्यग्विशेषास्ते द्वितीयशालाभ्यन्तराले, ये च शेषधार्मिका देवदानवमानवास्ते 'यावदे-वस्तावत् प्रविशन्ति इति ॥ ८९२ ॥ ततो यदा निश्चलचित्ता सा सम्पन्ना तदा साधनं निवेदनं गुरुणा कृतं, यथासमयः संकेतोऽयं यः प्रागुक्तः स नान्येषां तीर्थान्तरीयाणां वर्त्तते । तया च आमं—एवमिति प्रतिपन्ने गुरुणा कथितं, यथा—'अन्येनापि ध्यानार्थिना तथारूपं तं भगवन्तं हृदयमध्ये परिकल्प्य देवदानवादिवत् तं यावत् प्रवेशः कर्त्तव्यः, ततस्तदुपरि प्रवेशोपरि 'अध्युष्टकला' इति सार्द्धाभिस्तिसृभिः कलाभिः समनुगतो भगवान् ध्येयः' । इहाऽष्टौ कलाः—ज्ञानावरणादि-कर्माष्टकरूपाः । तत्र घातिकर्मरूपाश्चतस्रः कियत्यपि चायुःकर्मकला केवलज्ञानोदयकाले भगवतः क्षीणा, शेषास्तु सार्द्धा-स्तिस्रः कला अवशिष्यन्ते । अतस्ताभिः समनुगः केवलिविहारकालं यावद् ध्यातव्यः । तदुक्तमनेनैव शास्त्रकृता ब्रह्म-प्रकरणे—"सर्वं धर्मादि यः साक्षाद्युगपद्वेत्ति तत्त्वतः । रागादिरहितश्चैव स सर्वज्ञः सतां मतः ॥ १ ॥ सार्धसत्रिक-लोपेतः क्षीणसार्द्धचतुष्कलः । सर्वार्थनिरतः श्रीमान् नृसुरासुरपूजितः ॥ २ ॥ अन्वर्थयोगतश्चायं महादेवोऽर्हतस्तथा । बुद्धश्च गीयते सद्भिः प्रशस्तैर्नामभिस्तथा ॥ ३ ॥" इत्यादि । सार्द्धसत्रिकलोपेत इत्यादि—सार्द्धाभिः तिसृभिः सतीभिः प्रशस्तकर्मत्वेन सुन्दराभिः कलाभिरुपेतः । अतोऽस्मादन्यत् सिद्धस्वरूपलक्षणं द्वितीयं ध्यानं ध्यातव्यम्, यथोक्तम्—"अनन्तदर्शनं ज्ञानं सम्यक्त्वादिगुणान्वितम् । स्वोपात्तानन्तरत्यक्तशरीराकारधारिणम् ॥ १ ॥ साकारं च निराकारम-मूर्त्तमजरामरम् । जिनविम्वमिव स्वच्छस्फटिकप्रतिविम्बितम् ॥ २ ॥ लोकाग्रशिखरारूढमुदूढसुखसम्पदम् । सिद्धात्मानं निरावाधं ध्यायेदुद्धृतकल्मषम् ॥ ३ ॥" इति । एतस्य च द्वितीयस्यापि ध्येयस्याभ्यासाद् दर्शनमवलोकनं सम्पद्यते ।

स्वच्छाभ्रकगृहान्तरगतप्रदीपस्येव बहिः स्थितानामिति ॥ ८९३ ॥ सरजस्कविद्यामन्त्रादि सरजस्केणोपदिष्टं यद् विद्यादि विद्यामन्त्रतन्त्रात्मरक्षादि तत् सर्वमतत्त्वं वर्त्तत इति गुरुणा प्रतिपादिते तस्यास्तथादर्शनादतत्त्वरूपतयैवावलोकनात् विकल्पश्चित्तद्वैविध्यलक्षणो, यथा—पूर्वो ध्यानमार्गः प्रमाणतया प्रतिपन्नोऽप्यतत्त्वरूपः सम्पन्नो, माऽत एषोऽपि तथा भविष्यतीत्येवंरूपो जात इत्येवं शंकायां जातायां ज्ञानक्रियोपशमादिगुणान् गुरोरनन्यसाधारणानवलोकमाना स्वयमेव सम्पन्नदृढश्रद्धाना परिभावितवती, यथा—सत्यो गुरुरयम् । ततः पुनरपि पृष्टवती—भगवन्! किं तत्त्वम् ? गुरुराह—उचितानुष्ठानं—यद्यदा कर्त्तुमुचितं ध्यानमध्ययनं देवतापूजादि साधुदानादि च तत् तदा विधेयमित्येवंलक्षणम् ॥८९४॥ विपर्यये बाधकमाह—इतरथा उचितत्वमन्तरेण एतदेवानुष्ठानं छात्ररत्नपरिच्छित्तितुल्यं भणितं, प्रायेण बाहुल्येन, विघ्नभूतमन्तरायरूपं सदा सर्वकालमुचितफलस्य साधयितुमिष्टाद् दुःशकात् फलादन्यस्य साधयितुं योग्यस्य फलस्य विज्ञेयमिति ॥ ८९५ ॥ छात्ररत्नपरिछित्तिज्ञातमेव भावयति—पत्न्या रत्नसारं मणिखण्डितमाभरणं कण्ठाभरणादि श्रीफलं सम्पद्यत इति श्रुत्वा कश्चिच्छात्र आदौ प्रथममेव शेषजीवनोपायपरिहारेण तत्परीक्षालग्नो रत्नपरीक्षायामादरणाद् ('चुक्को ततो सव्व'त्ति भ्रष्टस्ततः) सर्वस्मात् ग्रासाच्छादनादेरपि ॥ ८९६ ॥ एवमेव 'ध्यानान्मोक्षः सम्पद्यते' इत्येतद् निशम्य समाकर्ण्य प्रथमं तु प्रथममेव शेषगुरुविनयशास्त्राभ्यासादिविहितानुष्ठानपरिहारेण तल्लग्नो ध्यानलग्नः, किं पुना रत्नपरीक्षालग्नश्छात्र इत्यपिहुशब्दार्थः, 'चुक्कइ'त्ति भ्रस्यति नियमादुचितस्य सर्वस्योचितात् सर्वस्मादित्यर्थः । अयमत्राभिप्रायो, यथा सम्पूर्णभोजनाच्छादनादिसौख्यस्य पुंसो विशेषविभवाकाङ्क्षायां रत्नपरीक्षणमुपपन्नं स्यात्, तथा साधोः शिक्षितनि-

खिलसाधुसमाचारस्य सम्यगभ्यस्तधर्मध्यानशुक्लध्यानयोग्यसूत्रार्थस्य शेषविहितानुष्ठानाबाधया प्रागुक्तमेव ध्यानमिति श्रमणोपासकानामपि शेषविहितानुष्ठानाबाधया समुचितसमये युक्तमेव नमस्कारादिध्यानमिति ॥ ८९७ ॥ ततः शुद्धधर्मदेशना सूरिणा कृता साधुश्रावकधर्मप्रतिपादनरूपा । परिणमनं देशनायाः सम्पन्नम् । अणुव्रतादिग्रहणं च तया कृतम् । इत्येवं ज्ञानी गीतार्थः कल्याणं भद्रं सर्वेषां स्वस्य परेषां च प्रायशः करोतीति ॥ ८९८ ॥

अथ द्वितीयज्ञातं गाथादशकेन भावयति;—

कर्णदुर्बलनृपोदाहरणम्—

संमुच्छिमपाओ सवणदुब्बलो चेव कोइ रायत्ति। उत्तमधम्माजोग्गो सड्ढो तह कुपरिवाओ य ॥८९९॥
रिसिमित्तदंसणेणं आउट्टो पूयदाणनिरओत्ति। अण्णापोहाहिगरणकह विपरिणओ य मुक्खत्ति॥९००॥
गीयनिवेयणमागम तब्भावावगम पुच्छ किं तत्तं। अइगंभीरं साहह जइ एवं सुणसु उवउत्तो॥९०१॥
सत्थिमईए माहणधूया सहिया विवाहभेओत्ति। सुत्थासुत्थे चिंता पहुणगमणे विसाओत्ति ॥ ९०२ ॥
पुच्छा साहण पावा दूहव मा कुण करेमि ते गोणं। मूलिगदाणं गमणं तीए अप्पत्तिय पओगो॥९०३॥
गोणत्तं विद्दाणा गोमीलणमन्नपासणण्णाए। कहणं मणुओ तीए कह पुण मूलाए सा कत्थ ॥ ९०४॥
णग्गोहतले सवणं णियत्तणा चिंत सवचरणंति। पत्ता मणुओ एवं इह एसा धम्ममूलत्ति ॥ ९०५॥

ता ओहेणं इहयं उचियत्तेणमविरोहओ जत्तो। कायव्वो जह भव गोणविगमओ जीवमणुयत्तं ॥ ९०६ ॥
तोसा सासणवण्णो पूजा भत्तीए वीजपक्खेवो। एवं णाणी वाहुल्लओ हियं चेव कुणइत्ति ॥ ९०७ ॥
एयारिसओ लोओ खेयण्णो हंदि धम्ममग्गम्मि। वुद्धिमया कायव्वो पमाणमिइ ण उण सेसोवि॥९०८॥

संमूर्च्छिमप्रायोऽसंज्ञितुल्यो युक्तायुक्तविवेचनासहोऽत एव श्रवणदुर्वलो यत्किञ्चनश्रुतग्राही, चेवेति समुच्चये, कोऽपि राजा आसीदिति। तथोत्तमधर्मायोग्यो विभक्तरूपदेवधर्म्मादिप्रतिपत्त्यसहिष्णुः प्रकृत्या श्राद्धो धर्मश्रद्धालुः, तथा कुपरिवारश्च दुःशिक्षितपरिवारानुगतश्च ॥ ८९९ ॥ स चान्यदा मुग्धधर्मश्रद्धालुतया ऋषिमात्रदर्शनेन तथाविधवठरजैनतपोधनानलोकनेन आवृत्त आक्षिप्तः सन्, तं प्रति पूजादाननिरतोऽभूत्। तत्र पूजाऽभ्युत्थानादिप्रतिरूपा, दानं च वस्त्रपात्रादिवितरणमिति। तेन च ऋषिणा कदाचित् तदग्रतः अन्यापोहः शाक्यादितीर्थान्तरीयनिरासः; तथा, अधिकरणकथा अधिकरणस्य त्रसस्थावरभूतोपमर्दरूपस्य कथा कृता, तत्र तन्निरासः, यथैते सन्मार्गविद्वेषिणः कुमार्गपुरस्कारिणश्च वर्त्तन्ते। अधिकरणकथा च नैतेषां त्रसस्थावरजीवपरिज्ञानं, तद्रक्षणोपायश्च कश्चिदस्तीति। एतच्च श्रुत्वासौ विपरिणतश्च तं प्रति विरक्तमानसः पुनः संवृत्तः, मूर्खोऽयं य इत्थं परदर्शनगोचरमत्सरभरपरवशो वर्त्तत इति कृत्वा ॥ ९०० ॥ तेन च साधुना गीतनिवेदनं गीतार्थसूरिनिवेदनं कृतम्। यथाऽसौ राजाऽस्मत्प्रज्ञापनाया विपरिणत आस्त इति। समये चागमस्तस्य सूरे राजान्तिके सम्पन्नः। ततस्तद्भावावगमस्तस्य राज्ञः सम्बन्धिनो भावस्य परिज्ञानमभूत्। सूरेः समये

च राज्ञा पृच्छा कृता, यथा—'भगवन्! किं तत्त्वम्?' इति । गुरुणा चोक्तमतिगंभीरं तत्त्वं स्वयमेव ज्ञातुमशक्यमित्यर्थः । स प्राह—साधयत कथयत यद्येवमतिगम्भीरं तथा ज्ञातुमशक्यम् । गुरुः—शृणूपयुक्तः सन् ॥ ९०१ ॥ स्वस्तिमत्यां पुरि ब्राह्मणदुहिता काचित् । तस्याश्च सखिका भूता । तयोश्च कालेन भिन्नयोः स्थानयोर्विवाहाद् भेदः सम्पन्नः । इति प्राग्वत् । अन्यदा च ब्राह्मणदुहितुः सुस्थासुस्थे सौख्ये दौःख्ये चेत्यर्थः सखीगोचरे चिन्ताऽभूत् । ततः स्वयमेव प्राघुर्णगमने प्राघुर्णकभावेन तदन्ते गमने कृते विषादस्तस्यास्तया दृष्ट इति ॥ ९०२ ॥ ततः पृच्छा विषादनिमित्तविषया तया कृता । सख्या च साधनमारब्धं, यथा—पापाऽहं यतो दुर्भगा पत्युर्वर्त्ते इति । तया चोक्तं—मा कुरु खेदं, करेमि ते तव पतिं गामनड्वाहम् । ततो मूलिकादानं कृत्वा गमनं निजस्थाने ब्राह्मणपुत्र्याऽकारि । ततस्तया सख्याऽप्रीत्या यथाऽहं चिरकालमनेनापमानितेत्यभिप्रायेण प्रयोगश्चूर्णादिव्यापाररूपः तया मूलिकायाः पत्यौ कृतः ॥९०३॥ अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभाव इति गोत्वं भर्त्तुः समजनि । तं च तथाविधमालोक्य सा विद्राणा विषण्णा, यथा—कथमयं पुनः पुमान् भविष्यतीति । ततस्तया बहिश्चारिचरणार्थं गवां मध्ये तस्य मीलनं कृतम् । स्वयं च पृष्ठलग्ना भ्राम्यतीति । अन्यदा चानेन केनचिद् विद्याधरयुग्मेन वटशाखावलम्बिना दर्शनं तस्य कृतम् । तेन च तस्मिन् कथनं सहचर्याः कृतं विद्याधरेण, यथैष मनुजः सन् वृषभतया वृत्तो वर्त्तते । ततस्तया पृष्टः कथमयं पुनरपि मनुजो भविष्यतीति । स प्राह—मूलया । विद्याधरी—इयं मूला कुत्र तिष्ठतीति ॥ ९०४ ॥ विद्याधरः—न्यग्रोधतलेऽस्यैव पादपस्य मूले । इत्युक्त्वा विद्याधरयुग्मं तिरोऽभूत् । अस्य च समग्रस्यापि वृत्तान्तस्य गोपत्न्याधःस्थितया श्रवणमकारि । तदनुगृहगमनादेर्निवर्त्तना

कृता । चिन्ता—कथमियं मूला प्राप्स्यते ? । ततः सर्वचरणं कारयितुमारब्धोऽसौ तया । इत्येवं प्राप्ता मूला । तन्न-
क्षणाच्च मनुजः समजनीति । एवमनेन न्यायेनेह गम्भीरतत्त्वविचारे प्रस्तुते सत्येषा धर्ममूला विपर्यस्तज्ञानरूपपशुभाव-
निवर्त्तनक्षमा लभ्या इति ॥ ९०५ ॥ तत् तस्मादद्यापि देवगुरुधर्माणामनेकधा लोकवृत्तानां सम्यक्परिज्ञानाभावे सति
ओघेन सामान्येन सर्वदेवताराधनरूपेणेह धर्मतत्त्वे साध्ये, उचितत्वेन यो देवादिर्यावत्याः प्रतिपत्तेर्योग्य इत्येवंरूपेण'
अविरोधतः शिष्टलोकरूढविभवोपार्जनादिन्यायानतिक्रमेण, यत्नः कर्त्तव्यः । तथा, यथा भवतो गोत्वविगमतः संसा-
रित्वरूपगोभावह्रासेन जीवमनुजत्वं केवलजीवलक्षणं मानुष्यमाप्यत इति ॥ ९०६ ॥ ततस्तोपात् तस्य राज्ञः प्रमोदा-
'दहो! महद् माध्यस्थ्यमित्येषाम्' इत्येवंलक्षणात् शासनवर्णो जैनदर्शनप्रशंसारूपः सम्पन्नः । पूजा च गौरवरूपा शास-
नस्यैव कृता । तया च दर्शनगोचरया भक्त्या वीजप्रक्षेप आत्मक्षेत्रे राज्ञा विहितः । एवं प्रागुक्तगीतार्थाचार्यवत् ज्ञानी
वाहुल्यतो हितमेव कुरुते । इति प्राग्वत् ॥ ९०७ ॥ यत एवं ततः 'एयारिसओ' इत्यादि । एतादृशश्च तादृश एव
निरूपिताचार्य सदृशो लोकः खेदज्ञो निपुणो । हंदीति पूर्ववत् । धर्मे श्रुतचारित्राराधनलक्षणे बुद्धिमता नरेण कर्त्तव्यः
प्रमाणं निर्णयहेतुः । इत्यस्मादगीतार्थप्रमाणकरणानर्थभावाद् हेतोर्न पुनः शेषोऽपि तत्सदृशाकारधारकोऽपि, आका-
रसाम्येऽपि भावानां परस्परं चित्रशक्तित्वेन भेदात् ॥ ९०८ ॥ आह—यद्येवमल्प एव लोकः प्रमाणीकर्त्तव्यः स्यात्,
तथा चाल्पलोकपरिगृहीतत्वेन धर्मो नात्यर्थमादेयतां नीतो भवेदिति मनसि परिभावयतो भव्यान् शिक्षयन्नाह;—

**वहुजणपवित्तिमेत्तं इच्छंतेहिं इहलोइओ चेव । धम्मो ण उज्झियव्वो जेण तहिं वहुजणपवित्ती ॥९०९॥**

वहुजनप्रवृत्तिमात्रं गतानुगतिकरूपं लोकरूढिमेवेच्छद्भिरिह धर्मचिन्तायां लौकिकश्चैव लोकरूढ एव धर्मो हिमपथज्वलनप्रवेशभृगुपातादिलक्षणो नोज्झितव्यः, येन तत्र धर्मे वहुजनवृत्तिलक्षकोट्यादिसंख्यलोकसमाचाररूपा दृश्यते॥९०९॥

**ता आणाणुगयं जं तं चेव बुहेण सेवियव्वं तु। किमिह बहुणा जणेणं हंदि ण सेयत्थिणो बहुया॥९१०॥**

तत् तस्मादाज्ञानुगतं सर्वज्ञप्रवचनप्रतिबद्धं यदनुष्ठानं तदेव मोक्षाभिलाषिणा बुधेनोत्तमप्रकृतिना पुरुषेण सेवितव्यम्। तुःपादपूरणार्थः। किमिह धर्मकरणे बहुना जनेन स्वच्छन्दचारिणा लोकेन प्रमाणीकृतेन? हन्दीति पूर्ववत्। न श्रेयोऽर्थिनो निर्वाणाभिलाषिणो बहवो जना यतः ॥ ९१० ॥ एतदेव भावयति;—

**रयणत्थिणोऽतिथोवा तद्दायारोवि जह उ लोयम्मि। इय सुद्धधम्मरयणत्थिदायगा दढयरं णेया॥९११॥**

रत्नार्थिनः पद्मरागपुष्परागादिप्रस्तरखण्डाभिलाषिणोऽतिस्तोकाः पञ्चषादिरूपाः, तद्दातारोऽपि रत्नविक्रेतारोऽपि यथा तु यथैवातिस्तोका लोके घृततैलधनधान्यादिवाणिज्यकारिणि जने। इत्येवं शुद्धधर्मरत्नार्थिक्रायका निर्वाणावन्ध्यकारणसम्यग्दर्शनादिशुद्धधर्मरत्नार्थिनो भव्यजीवाः, तद्दायकाश्च गुरवः स्वभावत एव भवोद्विग्ना लब्धागमरहस्याः, अत एव मोक्षमार्गैकरतयो दृढतरमत्यर्थं ज्ञेया अतिस्तोका इति ॥ ९११ ॥ अत्र हेतुमाह;—

**बहुगुणविहवेण जओ एए लब्भंति ता कहमिमेसु। एयदरिद्दाणं तह सुविणेवि पयट्टई चिंता॥९१२॥**

वहुभिर्गुणैरक्षुद्रताभिः, वहुना च विभवेन धनेन धान्यादिसम्पत्तिरूपेण यत एतानि रत्नानि शुद्धधर्मश्च लभ्यन्ते,

बहुभिर्गुणैर्धर्मो लभ्यते, विभवेन तु बहुना रत्नानीत्यर्थः । ततः कथमेतेषु रत्नेषु धर्मे चैतद्दरिद्राणां बहुगुणविभवशून्यानां तथा गुणरत्नस्पृहाप्रकारेण स्वप्नेऽपि निद्रायमाणावस्थायामपि प्रवर्त्तते चिन्ता, सर्वचिन्तानां प्रायः स्वप्नास्यनुसारेण लोके प्रवृत्तिदर्शनात् ॥ ९१२ ॥ एतदेव सविशेषं भावयति;—

**धण्णाइसु विगइच्छा वत्थहिरण्णाइएसु तह चेव । तच्चिंताए विमुक्का दुहावि रयणाण जोगत्ति॥९१३॥**

धान्यादिषु धान्ये शालिगोधूमादौ, आदिशब्दाद् महिष्यादिषु च विगतेच्छा उपरतवाञ्छाः, तथा वस्त्रहिरण्यादिकेषु वस्त्राणि चीनांशुकादीनि, हिरण्यं घटितकनकादि, आदिशब्दादन्यविचित्रवस्तुग्रहः, ततस्तेषु तथा चैव विगतेच्छा एव; अत एव तच्चिन्ता धान्यादिग्रहणविक्रयबुद्धिस्तया विमुक्ता विकला द्विधापि रत्नानां योग्याः धर्मरत्नस्य द्रव्यरत्नानां चार्हा भवन्तीत्यर्थः । इति प्राग्वत् ॥ ९१३ ॥ अधुना व्यतिरेकमाह;—

**जे पुण थेवत्तणओ एएसुं चेव अविगएच्छत्ति । ते एयाण अजोग्गा अइणिउणं चिंतियव्वमिणं॥९१४॥**

ये पुनः पुण्यविकलाः स्तोकत्वतस्तुच्छत्वेन धनादीनामेतेष्वेव धान्यादिष्वविगतेच्छास्तदभिलाषिणः, इति पूर्ववत्, ते पुरुषा एतेषां द्रव्यरत्नानां धर्मरत्नस्य चायोग्या वर्त्तन्ते । अतिनिपुणं सूक्ष्माभोगसंगतं यथा भवत्येवं चिन्तयितव्यमालोचनीयमिदं पूर्वोक्तं वस्त्विति ॥ ९१४ ॥ अथ पूर्वगाथोद्दिष्टं गुणविभवं धर्मरत्नार्थिनां धान्यादिरूपतया परिकल्प्य निदर्शयन्नाह;—

**अक्खुद्दाई धण्णाइया उ वत्थाइया उ विण्णेया । मज्झत्थाई इइ एक्कवीसगुणजोगओ विहवो ॥ ९१५ ॥**

अक्षौद्यादयोऽक्षौद्यमक्षुद्रतां, आदिशब्दाद् रूपवत्त्व–सौम्याकृतित्व–जनप्रियत्वाऽक्रूरत्वाऽभीरुत्वाऽशठत्व–दाक्षिण्य–लज्जालुत्व–दयालुत्वग्रहः । ततोऽक्षौद्यमादिर्येषां दशानां गुणानां ते तथा । किमित्याह—धान्यादयो वर्त्तन्ते धान्यधनादिकल्पा इत्यर्थः । तुः पूर्ववत् । वस्त्रादयस्तु विज्ञेया माध्यस्थ्यादयः । वस्त्रादिकल्पा माध्यस्थ्यादय एकादशगुणा इत्यर्थः । अत्र माध्यस्थ्यं मध्यस्थवृत्तित्वं । आदिशब्दात् सौम्यदृष्टित्व–गुणरागित्व–सत्कथासुपक्षयुक्तत्व–दीर्घदर्शित्व–विशेषज्ञत्व–वृद्धानुगामित्व–विनीतत्व–कृतज्ञत्व–परहितार्थकारित्व–लब्धलक्षत्वग्रहः । इत्येवमेकविंशतिगुणयोगतो धार्मिकस्य गुणविभवो भावनीयः । यथा हि पूर्वं धान्यादिगुणप्राप्तौ कुटुम्बनिर्वाहहेतुभूतायां, पश्चाद् वस्त्रादिप्राप्तौ च सत्यां रत्नवाणिज्यं कुर्वन् व्यवहारी समभिलषितसिद्धसिद्धिभावेन सर्वांगकल्याणभाग् भवति, तथाऽक्षौद्यादिगुणयोगेन प्राक्, पश्चाद् माध्यस्थ्यादिगुणयोगतः परिपूर्णैकविंशतिगुणयोगविभवेन शुद्धधर्मरत्नप्राप्तियोग्यो भवतीति ॥ ९१५ ॥ ननु यदि पूर्वोक्तैकविंशतिगुणविभवयोगेन धर्मरत्नाधिकारिणो निरूप्यन्ते, तत् किमेकादिगुणहीना अनधिकारिण एवेत्याशंक्याह;—

**पायद्धगुणविहीणा एएसिं मज्झिमा मुणेयव्वा । एत्तो परेण हीणा दरिद्दपाया मुणेयव्वा ॥ ९१६ ॥**

पादेनार्धेन च प्रमितैर्गुणैर्विहीनाः प्राणिन एतेषां गुणानां मध्याद् मध्यमाः, परमध्यमा जघन्याश्च ज्ञेया ज्ञातव्याः । इतो विभागत्रयात् परेण हीना दरिद्रप्रायाः पूर्वोक्तगुणाधानापेक्षया निर्धना मुणितव्याः, न ते शुद्धधर्मरत्नयोग्या इत्यर्थः ॥ ९१६ ॥ एतदेव भावयति;—

जह ठिइणिबंधणेसुं धम्मं कप्पिंति मूढगा लोया । तह एएवि वरागा पायं एवंति दट्ठवा ॥ ९१७॥

यथा येन प्रकारेण स्थितिः शरीरादिनिर्वहणं, तन्निबन्धनेपु तत्कारणेपु वापीकूपतडागादिपु क्रियमाणेपु धर्मं सुगति-फलं सुकृतं कल्पयन्ति मूढका निर्वाणमार्गमजानाना लोका द्विजातितथाविधा जनाः, तथैतेऽपि गुणदारिद्र्यभाजो जीवा लोकोत्तरमार्गमवतार्यमाणा अपि वराकाः कृपास्पदतामागताः प्रायो बाहुल्येन यत्र तत्रैव बहुलोकपरिगृहीते कुतीर्थगमनादौ धर्मकल्पनाकारिणः, एवं पूर्वोक्तमूढलोकवत् । इतिः पूरणे द्रष्टव्यः ॥ ९१७ ॥ एतदेव दृष्टान्तेन भावयति;—

एएणं चिय कोई राया केणावि सूरिणा सम्मं । णाएणमेयदिट्ठी थिरीकओ सुद्धधम्मम्मि ॥ ९१८ ॥

एतेनैव यथा रत्नार्थिनः स्तोका इत्यनेन कश्चिद् राजा केनापि सूरिणा सम्यग् यथावद् ज्ञातेन दृष्टान्तेन, एतद्दृष्टि-र्बहुजनपरिगृहीतो धर्मः प्रमाणमित्येवं पश्यन्, स्थिरीकृतः शुद्धधर्मे स्तोकतरविवेकिलोकपरिगृहीते॥९१८॥एतदेव भावयति;—

नयरं पवेसिऊणं सागेंधणधण्णमाइठाणाइं । बहुगाइं दंसिऊणं रयणावणदंसणेणं तु ॥ ९१९ ॥

नगरं प्रतीतरूपमेव प्रवेश्यावतार्य शाकेन्धनधनधान्यादिस्थानानि बहुकानि प्रभूतानि दर्शयित्वा रत्नापणदर्शनेन तु अतिस्तोकरत्नवाणिज्यहट्टदर्शनेनैव—यथा हि महाराज! अत्र तव नगरेऽतिबहूनि शाकेन्धनादिव्यवहारस्थानानि, अतिस्तोकानि रत्नवाणिज्यस्थानानि, तथैव शुद्धधर्मग्राहिणोऽत्र नगरस्थानीये जने अतिस्तोका इतरे त्वतिभूरय इति ॥ ९१९ ॥

यद्येवं ज्वरहरतक्षकचूडारत्नालङ्कारवद् दुष्करः शुद्धधर्मस्तत्किं तस्योपदेशेन ? इत्याशंक्याह;—

**णय दुक्करं तु अहिगारिणो इहं अहिगयं अणुट्ठाणं। भवदुक्खभया णाणी मोक्खत्थी किं ण करेइ ?॥९२०॥**

नच नैव दुष्करं दुरनुष्ठेयं, तुरेवकारार्थः, अधिकारिणो मोक्षं प्रति बद्धस्पृहस्येहाधिकृतं शुद्धधर्माराधनारूपमनुष्ठानं सर्वसावद्यविरमणरूपम् । कुतः, यतः भवदुःखभयाज्जातिजरामरणादिसंसारोद्वेगाद्, ज्ञानी निश्चितहेयोपादेयविभागो मोक्षार्थं किं न करोति? अपि तु शक्त्यनुरूपं तत्साधकतया निश्चितं सर्वमपि ॥ ९२० ॥ एतदेव भावयति;—

**भवदुक्खं जमणंतं मोक्खसुहं चेव भाविए तत्ते। गरुयंपि अप्पमायं सेवइ णउ अण्णहा णियमा ॥ ९२१ ॥**

भवदुःखं नरकतिर्यगादिजन्मस्वशर्मलक्षणं यद्यस्मादनंतमनवधि, अनाद्यनंतत्वाच्च संसारस्य; मोक्षसुखं चैवापवर्गसुखमप्यनन्तमेव, अनागतकालप्रमाणत्वात् । एवं भाविते तत्त्वे दुःखसुखस्वरूपलक्षणे गुरुकर्मभिः संसाराभिनन्दिभिः स्वप्नेऽप्यनध्यवसेयं अप्रमादं निद्राविकथादिप्रमादपरिवर्जनरूपं सेवतेऽधितिष्ठति, न त्वन्यथोक्तरूपतत्त्वज्ञानाभावे नियमादवश्यम्भावेन । अन्यत्राप्युक्तं—"भवस्वरूपविज्ञानात्तद्विरागाच्च तत्त्वतः । अपवर्गानुरागाच्च स्यादेतन्नान्यथा क्वचित् ॥१॥" ॥ ९२१ ॥ एतत्समर्थनायैवाह;—

**इह तेल्लपत्तिधारगणायं तंतंतरेसुवि पसिद्धं । अइगंभीरत्थं खलु भावेयव्वं पयत्तेण ॥ ९२२ ॥**

इह गुरुकाऽप्रमादसेवायां तैलपात्रीधारकज्ञातं तन्त्रान्तरेऽपि दर्शनान्तरशास्त्रेष्वपि प्रसिद्धं अतिगम्भीरार्थं महामतिगम्यं, खलुर्वाक्यालङ्कारे, भावयितव्यं प्रयत्नेन ॥ ९२२ ॥ एतदेव गाथानवकेन दर्शयति;—

सड्ढो पण्णो राया पायं तेणोवसामिओ लोगो । णियनगरे णवरं कोति सेट्ठिपुत्तो ण कम्मगुरू ॥१२३॥
सो लोगगहा मण्णइ हिंसंपि तहाविहं ण दुट्ठंति । हिंसाणं सुहभावा दुहावि अत्थं तु दुद्देयं ॥ १२४ ॥
अपमायसारयाए णिव्विसयं तह जिणोवएसंपि । तक्खगफणरयणगयं सिरत्तिसमणोवएसंव ॥ १२५ ॥
तस्सुवसमणणिमित्तं जक्खो च्छत्तो समाणदिट्ठित्ति । णिउणो कओ समप्पिय माणिक्कं सागओ तत्तो१२६
अवरो रायासण्णो अहंति परिवोहगो असमदिट्ठी । कालेणं वीसंभो तओ य मायापओगोत्ति ॥ १२७ ॥
णट्ठं रायाहरणं पउहगासिट्ठंति पउरघरलाभे । माहण पच्छित्तं बहुभयमेवमदोस तहवित्ति ॥ १२८ ॥
जक्खब्भत्थण विण्णवण ममत्थे तं णिवं सुदंडेण । तच्चोयण परिणामो विण्णत्ती तइलपत्ति वहो॥१२९॥
संगच्छण जहसत्ती खग्गधरुक्खेव छणणिरूवणया । तल्लिच्छ जत्तनयणं चोयणमेवंति पडिवत्ती ॥ १३० ॥
एवमणंताणं इह भीया मरणाइयाण दुक्खाणं । सेवंति अप्पमायं साहू मोक्खत्थमुज्जुत्ता ॥ १३१ ॥

श्राद्धः सर्वज्ञदर्शनश्रद्धालुः प्राज्ञः स्वभावत एव परोपकारोपायप्रवीणः कचिद् नगरे जितशत्रुनामा राजाऽभूत् । प्रायो बाहुल्येन, तेन राज्ञा दानसन्मानादिभिरुपायैः सन्तोषमानीयोपशामित उपशममानीतो जिनशासनं प्रति सानुरागो

विहित इत्यर्थः, लोकोऽमात्यश्रेष्ठिप्रभृतिको निजनगरे । नवरं केवलं कश्चित् श्रेष्ठिपुत्रो न शकित उपशामयितुम् । कीदृशः सन्नित्याह—कर्मगुरुर्बहलमिथ्यात्वतमः पटलसमाच्छादितशुद्धबोधसम्पादकपरिणाम इति ॥ ९२३ ॥ सो इत्यादि । स श्रेष्ठिपुत्रो लोकग्रहात् संसारमोचकनामकपाखण्डिकसंसर्गलग्नभ्रमाद् मन्यते हिंसामपि प्राणव्यपरोपणरूपां, सर्वेषां तदन्येषामास्तिकानामेकान्ततोऽनभिमतां तथाविधां दुःखितसत्त्वगोचरां न नैव दुष्टां दारुणपरिणामां, किं तु कल्याणावहामेव । इति प्राग्वत् । कुत इत्याह—'हिंसाणं सुहभावा' इति हिंस्यानां हिंसनीयानां हिंस्राणां च हिंसकानां सुखभावाच्छुभभावाच्च । तत्र हिंस्यानां हिंसाकालप्रवृत्तपीडानुभवेन प्राग्भवोपात्तासद्वेदनीयनिर्जरणाद् भवान्तरे सुगतिलाभेन सुखभावः । अन्येषां च दुरन्तदुःखनिम्नगातस्तदुत्तारणकरणेन परोपकारसम्भवाच्छुभस्य सुकृतलक्षणस्य लाभः । इति निरवद्यमेव दुःखितस्य व्यपरोपणम् । तथा द्विधापि द्वाभ्यामपि हेतुभ्यां क्लेशोपार्जनमूर्च्छात्यागदुष्करत्वलक्षणाभ्यामर्थं त्वर्थं पुनर्दुर्देयं मन्यते । ततः सुगत्यर्थिनां निरूपितनीत्या हिंसैव कर्त्तुमुचिता, न पुनरन्यो धर्मो दानादिरिति ॥ ९२४ ॥ अप्रमादसारतया अप्रमादः प्रमादाभावः सारो यत्र तत्तथा तद्भावस्तत्ता तया निर्विषयं निर्गोचरं, तथेति समुच्चये, जिनोपदेशमपि सर्वज्ञप्रज्ञापनामपि मन्यते, किं पुनः प्रज्ञापकान्तरोपदिष्टमर्थमित्यपिशब्दार्थः । कथमिवेत्याह—तक्षकफणरत्नगतं तक्षकस्य महानागस्य फणारत्नं तक्षकफणरत्नं तद्गतं करणीयत्वेन तद्विषयं, शिरसोऽर्त्तिः पीडास्तस्याः शमने उपदेशः शिरोर्त्तिशमनोपदेशस्तमिव । यथा केनचिच्छिरःपीडाकरालितेन कश्चिद् भणितो यथा महती मम शिरःपीडा समुद्भूता वर्त्तते, किं क्रियतामिति? तेन चोक्तम्—तक्षकफणरत्नालङ्कारो गले बध्यतां, येन सद्य एव पीडोपशमः सम्पद्यते ।

तैलपात्रीधारकज्ञातम्—

यथासौ दुष्करत्वेन निर्विषय उपदेशः, तथायमप्रमत्तोपदेशः जिनोक्तो निर्विषय एव ममाभासत इति परिभावयति स श्रेष्ठि-
सूनुः ॥ ९२५ ॥ ततः परिभावितं राज्ञा नैष प्रदीपनकवदुपेक्षितुं युक्तः । इति तस्योपशमनिमित्तं जैनधर्मप्रतिबोधनार्थं
यक्षो नाम च्छात्रो विद्यार्थितया गुरुणा सह भ्राम्यति आतपनिवारणार्थं छत्रवान्, समाना सम्यग्भावेन कृत्वा दृष्टिस्त-
त्त्वश्रद्धानमस्येति समानदृष्टिरित्यर्थः इत्यस्मात्कारणान्निपुणो जीवादिषु पदार्थेषु कृतो राज्ञैव । समर्पितं माणिक्यं निज-
मुद्रारत्नरूपम् । अनुस्वारलोपः प्राकृतत्वात् । स यक्षच्छात्र उपलब्धराजाभिप्रायः सन्नागतो राजसमीपाद् दूरीभूतस्तद-
नन्तरम् ॥ ९२६ ॥ श्रेष्ठिसुतसमीपं गत्वा बभाण'—अन्यो जैनमतवासितांतःकरणः कोऽपि राजाऽऽसन्नो वर्त्तते, अहं
पुनः प्रतिबोधको लग्नजैनदर्शनग्रहोत्तारकारी, असमदृष्टिर्नृपेण सह वर्त्ते इति कश्चिन्मयि विश्रम्भरसः समस्ति, समानशी-
लव्यसनयोरेव विश्रम्भरससम्भवात् । यदवाचि;—"मृगा मृगैः संगमनुव्रजन्ति गावश्च गोभिस्तुरगास्तुरंगैः । मूर्खाश्च
मूर्खैः सुधियः सुधीभिः समानशीलव्यसनेषु सख्यम् ॥ १ ॥" कालेन तु गच्छता विश्रम्भो विश्वासः समजनिश्रेष्ठिसूनो-
श्छात्रे । ततश्च मायाप्रयोगः प्रागेव राजार्पिततन्माणिक्यस्य तदाभरणमध्ये तस्याजानतो निक्षेपलक्षणः कृतस्तेन । इति
प्रागवत् ॥ ९२७ ॥ प्रवर्त्तितश्च पुरमध्ये प्रवादो, यथा—नष्टं राजाभरणम् । पटहको निष्कासितो, यथा—कथयतु येन
दृष्टं श्रुतं वा तदिति । ततः केनाप्यशिष्टमिति कृत्वा 'पउरघर'त्ति पौरगृहेषु प्रत्येकं निभालयितुमारब्धेषु लाभे श्रेष्ठिसु-
तरत्नकरंडिकामध्ये निक्षिप्तस्य राज्ञो माणिक्यस्यावाप्तौ जातायां स दण्डपाशिकलोकेन हन्तुमारब्धः । भणितं च यक्षेण—
मा हन मा घातयतैनं प्रायश्चित्तमापन्नमिदमस्य, शुद्धिश्चास्य परिभाव्य करिष्यते । ततो वहु भूरि भयमस्य जज्ञे । न

ज्ञायते केनापि प्रकारेण शुद्धिर्भविष्यति । ततः श्रेष्ठिसुतेन परिभावितं,—यथैवं राजमाणिक्यापहारद्वारेण या दोषसम्भावना तामपेक्ष्याऽदोषोऽहं वर्त्ते, तथापि किं करोमीत्येवंलक्षणेन प्रकारेण ॥ ९२८ ॥ यक्षाभ्यर्थना तेन कृता, विज्ञापय ममार्थं मन्निमित्तं तं नृपं राजानं, यथा—सुदण्डेन सुकुमारेण केनचिद्दण्डेन निगृह्य मां मुञ्चतेति । ततो यक्षेण तत्प्रेरणा कृता, यथा—शिक्ष्यसे शरीरनिग्रहमन्तरेण यदन्यत् ते प्रायश्चित्तम्, अहं दापयिष्यामि तत् कर्तुमिति । तेनाभाणि—बाढमिति । एवं परिणामो लब्धस्तस्यानेन । तदनुविज्ञप्तिः कृता । राज्ञा चोचे—तैलपात्री भृतोभयकरगृहीता नगरमध्ये भ्रमणीया, यदि पुनस्तत्तैलविन्दुरेकोऽपि पतति तदा तस्य निश्चितो वधो विधेय इति ॥ ९२९ ॥ 'संगच्छण'त्ति अभ्युपगमस्तेन जीवितार्थिनाकृतो, यथा—अहं यथाशक्त्यमुमर्थं साधयिष्यामि । एवं प्रतिपन्ने खड्गधरास्तस्य चतसृष्वपि दिक्षु निरूपिताः, यथा—अयमस्मिन्नर्थे प्रमादं करोति तदाऽतीव निग्रहणीय इति । ततस्तस्यास्तैलभृतायाः पात्र्या उत्क्षेप उत्पाटनं कृतं तेन । राज्ञा च तच्चित्तव्याक्षेपार्थं क्षणस्योत्सवस्य निरूपणा सर्वत्र त्रिकचतुष्कचत्वरादिषु प्रारब्धा । तल्लिप्सया जीवितवाञ्छया यत्ननयनं तस्यास्तैलभृतायाः पात्र्या यत्नेन कायिकवाचिकमानसव्याक्षेपपरिहारेण राजपदान्तिकं यावन्नयनं कृतम् । ततस्तस्मिन्नत्यन्तदुष्करेऽत एव केनाप्यनध्यवसेये वस्तुनि सम्पादिते राज्ञा प्रेरणं तस्य कृतं, यथा—समस्त्यप्रमादो दुष्करार्थविधायी, किमिति त्वं मुधा भणसि, यथा—न कश्चिदप्रमत्तः समस्तीति । तेन चैवमिति प्रतिपत्तिः कृता । प्रतिबोधितश्च धर्ममार्गे ॥ ९३० ॥ यथा त्वमेवं मरणमात्रभयात् दुष्करमप्रमत्तताभावमङ्गीकृतवान्, एवमनन्तानामपरिमाणानामिह भीतास्त्रस्ता मरणादिकानां दुःखानां सेवन्तेऽप्रमादमुक्तलक्षणं साधवो मोक्षार्थं मुक्तिनि-

मित्तं उत्सुका उद्यमवन्त इति ॥ ९३१ ॥ आह—यदि जरामरणादिभयाद् मोक्षार्थितयोपतिष्ठन्ते जीवास्ततः किं सर्वे भव्या अप्रमादसारं न प्रतिपद्यन्ते ? इत्याशंक्याह;—

**अपरिणए पुण एयम्मि संसयाईहिं ण कुणइ अभवो । जह एयं गुरुकम्मो तहेव इयरोवि पवज्जं॥९३२॥**

अपरिणते अङ्गाङ्गीभावलक्षणपरिणाममनागते पुनरेतस्मिन् जिनवचने संशयादिभिः संशयविपर्ययानध्यवसायैर्वैधुर्यमानीते न करोति न विधत्ते अभव्यो निर्वाणगमनानर्हो जन्तुर्यथैनं जिनोपदेशमिच्छाविषयभावानयनमात्रेणापि, गुरुकर्मा उदीर्णदृढचारित्रमोहः तथैवेतरोऽपि जन्तुः परिणतजिनवचन सर्वस्वोऽपि प्रव्रज्यामप्रमादरूपाम् ॥ अत एव पठ्यते;—
सम्मद्दिट्ठीवि कयागमोवि अइविसयरागसुहवसओ । भवसंकडम्मि पविसइ एत्थं तुह सुवई णायं ॥ १ ॥" ॥ ९३२ ॥

अथ प्रस्तुतं निगमयन्नाह;—

**एवं जिणोवएसो उचियाविक्खाए चित्तरूवोत्ति । अपमायसारयाएवि तो सविसय मो मुणेयवो ॥ ९३३ ॥**

एवं गुरुकर्मणां प्रव्रज्याप्रतिपत्त्यसहिष्णुत्वे सति जिनोपदेशः सर्वज्ञप्रज्ञापनारूपः उचितापेक्षया यो यत्प्रमाणस्योपदेशस्य योग्यस्तदपेक्षया चित्ररूपो नानारूपतया प्रवर्त्तते । इति प्राग्वत् । अप्रमादसारतायामपि अप्रमादः सारः करणीयतया यत्र जिनोपदेशे स तथा तस्य भावस्तत्ता तस्यामपि; तत्तस्मात् सविपयः सगोचरो, 'मो' इति पूर्ववत्, मुणितव्यः। यदा हि जिनोपदेशश्चित्ररूपतया व्यवस्थितो प्रमादसारोऽपि, तदाऽपुनर्बन्धकादीन्निर्वाणमार्गप्रज्ञापनायोग्यानधिकृत्य

केचित्सामान्यदेशनायाः, केचित् सम्यग्दृष्टिगुणयोग्यप्रज्ञापनायाः, केचिद्देशविरतिगुणस्थानकार्हप्ररूपणायाः, केचि-
न्निर्धूतचारित्रमोहमालिन्या अप्रमत्ततारूपप्रव्रज्यादेशनाया योग्या इति नाविषयाऽप्रमत्तताप्रज्ञापना इति ॥ ९३३ ॥ अधुना
स्वकर्मगौरवदोषं परिहृत्य जिनोपदेशस्य दुष्करत्वादिकथनद्वारेणावधीरयतामाशातनाविधायिनां तदपरिज्ञानदोषमाह;—

**गंभीरमिणं बाला तब्भत्ता म्होत्ति तह कयत्थंता। तह चेव तु मण्णंता अवमण्णंता ण याणंति ॥ ९३४ ॥**

गम्भीरं दुरवगाहमिदं जिनवचनं बाला जडधियः, तस्य जिनवचनस्य भक्ता आराधकास्तद्भक्ताः किल वयमिति परि-
भावयन्तोऽपि; तथा, दुष्करत्वादिदोषोद्भावनप्रकारेण कदर्थयन्ता विराधयन्तः सन्तस्तमेव जिनोपदेशं मन्यमानाः
स्वाभिप्रायेण श्रद्दधानाः, तथाऽवमन्यमाना निर्विषयत्वकथनेनाशातयन्तो न जानन्ति नावगच्छन्ति परमार्थं जिनव-
चनस्य यथाशक्त्यानुरूपप्रवृत्त्या जिनवचनमिदमाराधनीयं भवतीति ॥ ९३४ ॥

साम्प्रतं साधुशब्दप्रवृत्तिनिमित्तस्य सद्भावाज्जिनवचनदुष्करत्वदोषं परिहरन्नाह;—

**सिद्धीए साहगा तह साहू अण्णत्थओवि णिद्दिट्ठा । राहावेहाहरणा ते चेवं अत्थओ णेया ॥ ९३५ ॥**

सिद्धेः कृत्स्नकर्मक्षयलक्षणायाः साधका निष्पादकाः, तथा तेनाप्रमत्तताविधानद्वारेण साधवो मुनयोऽन्वर्थतोऽप्यनु-
गतमर्थमाश्रित्य गुणनिष्पन्नाभिधानेनापीति यावद् निर्दिष्टा निरूपिताः शास्त्रेषु । तथा चोक्तं—'सम्यग्दर्शनज्ञानचारि-
त्रमयीभिः पौरुषेयीभिः शक्तिभिर्मोक्षं साधयन्तीति साधवः । राधावेधाहरणाद् वक्ष्यमाणात्, ते च साधव एवमप्रमाद-

मारा: सन्त: अर्थत: सामर्थ्याज्ज्ञेया: सिद्धिसाधकत्वेन । नह्यप्रमत्ततामन्तरेणान्या: काश्चित्पौरुषेय्यो मोक्षसाधिका: शक्तय: सन्तीति ॥ १३५ ॥ राधावेधाहरणमेव गाथासप्तकेनाह;—

इंदपुर इंददत्ते बावीस सुया सुरिंददत्ते य । महुराए जियसत्तू सयंवरो णिव्वुईए ओ ॥ १३६ ॥
अग्गियए पव्वयए बहुली तह सागरे य बोद्धव्वे । एतेगदिवसजाया सह तत्थ सुरिंददत्तेणं ॥ १३७ ॥
इंदउरसामिणो पुत्तवंति महुराहिवेण तो धूया । पट्ठवियत्ति सयंवरराहावेहेहेण वरमाला ॥ १३८ ॥
बावीसेहि ण विद्धा तेवीसइमेणमग्गियाइजया । अब्भासाओ विद्धा तेहिं परिपंथिगेहिंपि ॥ १३९ ॥
सो तज्जएण सइ उक्खयासिपुरिसदुग भीइओ गुरुणा । तह गाहिओ त्ति भेत्तुं जहट्ठ चक्के तओ विद्धा १४०
रायसुओ इह साहू अग्गियगाई कसाय पुरिसा उ । रागद्दोसा खोभे मरणं असइ भवावत्ते ॥१४१॥
रायसुया उ परीसह सेसा उवसग्गमाइया एत्थ । गाहण सिक्खा कम्मट्ठभेयओ सिद्धिलाभो उ ॥ १४२ ॥

एतदाहरणविस्तारार्थ: प्राक् चुल्लगवासगेत्यादिगाथाव्याख्यायां चक्रदृष्टान्ते प्रतिपादित इति संग्रहगाथाक्षरार्थो व्याख्यायते;—इन्द्रपुरे नगरे इन्द्रदत्तो नाम राजा । तस्य च द्वाविंशति: सुता: द्वाविंशतौ पत्नीषु । सुरेन्द्रदत्तश्च त्रयोविंशोऽमात्यपुत्रपुत्रीतनय: । मथुरायां जितशत्रू राजाऽभूत् । तेन च स्वयंवरो विवाहविशेषो निर्वृत्तै: पुत्रिकाया वितीर्ण्ण: ।

तुः पूर्ववत् ॥ ९३६ ॥ अग्निककः पर्वतको वहुली तथा सागरश्च बोद्धव्यः । एते एकदिवसजाताः सह तत्र सुरेन्द्रदत्तेन ॥ ९३७ ॥ इन्द्रपुरस्वामिनः 'पुत्रवान्' इति कृत्वा मथुराधिपेन ततस्तदनन्तरं दुहिता प्रस्थापिता । इतिः प्राग्वत् । तया च तत्रागतया 'सयंवर'त्ति स्वयंवरमण्डपे राधावेधेन सुरेन्द्रदत्तकृतेन रञ्जितया वरमाला प्रक्षिप्ता कण्ठे सुरेन्द्रदत्तस्येति गम्यते ॥ ९३८ ॥ द्वात्रिंशत्या श्रीमालिपुत्रप्रभृतिकया न विद्धा राधा, त्रयोविंशतितमेन सुरेन्द्रदत्तनाम्ना अग्निकादिजयात् सहजातंचटुलचेटकचतुष्कपरिभवादभ्यासाद् राधावेधस्य पुनःपुनरनुशीलनाद् विद्धा राधा । तैर्द्वाविंशत्या राजपुत्रैः परिपंथिकैरपि सद्भिः ॥ ९३९ ॥ स सुरेन्द्रदत्तस्तज्जयेन चेटकजयेन सदा सर्वकालमुत्खातासिपुरुषद्वयभीतितः समुद्गीर्णखड्गपुरुषद्वयभयात्, गुरुणा कलाचार्येण तथा ग्राहितः शिक्षितो राधावेधः । इतिः पूर्ववत् । भित्त्वा यथाऽष्ट चक्राणि ततो विद्धा राधा ॥ ९४० ॥ अथोपनयनमाह—राजसुतः सुरेन्द्रदत्तनामा इह साधुः, अग्निककादयः कषायाः क्रोधादयश्चत्वारः, पुरुषौ तु खड्गव्यग्रकरौ रागद्वेषौ, क्षोभे व्रतात् परिभ्रंशे मरणमसकृद् भवावर्त्ते ॥ ९४१ ॥ राजसूतास्तु परिषहा द्वाविंशतिः, शेषाः परिषलोका उपसर्गादयो ज्ञेयाः । अत्र व्यतिकरे इहादिशब्द उपसर्गभेदानामेव संग्रहार्थः । ग्राहणं राधावेधस्य शिक्षा ग्रहणासेवनारूपा बोद्धव्याः । कर्माष्टकभेदतश्चक्राष्टकभेदतुल्यात् सिद्धिलाभो निर्वृतिकन्यकालाभकल्पः सम्पद्यते । तुः पूर्ववत् ॥ ९४२ ॥ अधुना व्यतिरेकमाह;—

**णो अण्णहावि सिद्धी पाविज्जइ जं तओ इमीए उ । एसो चेव उवाओ आरंभा वड्डमाणो उ ॥ ९४३ ॥**

न नैवान्यथाप्यनन्तरोक्तक्रमवैपरीत्येनापि सिद्धिः सकलकर्मक्षयलक्षणा प्राप्यते यद्यस्माद्धेतोः, तत् तस्मादमुष्याः

सिद्धेस्त्वेष एव सदाऽप्रमत्तताभ्यसनलक्षण एवोपायः । कीदृगित्याह—आरम्भात् प्रव्रज्याप्रतिपत्तिकालादारभ्य वर्द्धमान उत्तरोत्तरगुणस्थानकारोहणक्रमेण । तुः पूर्ववत् ॥ ९४३ ॥ अत्र ज्ञातमाह;—

**मग्गण्णुणो तहिं गमणविग्घ कालेण ठाणसंपत्ती। एवं चिय सिद्धीए तदुवाओ साहुधम्मो त्ति ॥९४४॥**

मार्गज्ञस्य विवक्षितपुरसत्पथवेदिनस्तत्र तस्मिन्नेव वर्त्मनि 'गमणविग्घ'त्ति गमनं व्रजनमविघ्नेन व्याक्षेपनिबन्धनत्यागेन कुर्वाणस्य सतः कालेन यथा स्थानसम्प्राप्तिर्विवक्षितपुरसम्प्राप्तिर्भवति । एवमेव दृष्टान्तोक्तक्रमेण सिद्धेर्मुक्तेस्तदुपायः साधुधर्मः क्षान्त्यादिः । इतिः प्राग्वत् ॥ ९४४ ॥

**एवंविहं तु तत्तं णवरं कालोवि एत्थ विण्णेओ । ईसि पडिवंधगो च्चिय माहणवणिरायणाएण ॥ ९४५ ॥**

एवंविधमेव साधुधर्म एव सिद्धेरुपाय इत्येवंलक्षणं तत्त्वं न पुनरन्यत्, नवरं केवलं कालोऽपि दुष्षमालक्षणः, किं पुनश्चारित्रमोहक्षयोपशममन्दतेति, अत्र साधुधर्मस्य सिद्ध्युपायत्वे विज्ञेय ईषन्मनागेकादिभवव्यवधानकारकत्वेन प्रतिबन्धक एव प्रतिस्खलक एव । कथमित्याह—ब्राह्मणवणिग्राजज्ञातेन ॥ ९४५ ॥ ज्ञातमेव गाथाद्वयेन भावयति;—

**सत्थत्थिमाहणपुरे वणिजायण सुद्धभूमिगह पाए। णिहि वणिकहणं अग्गह रण्णा सिट्ठे य पण्णवणा ९४६**

**सुत्तुट्ठियचिंतणमण्णया य सव्वेसिमिच्छ गह विग्घं। मिहु किमियंति वितक्के केवलि कलि चाग भागगहो**

धर्मानुष्ठानं कथं नु? न कथंचिदित्यर्थः । परमार्थोपयोगरूपत्वाद्धर्मानुष्ठानस्य इत्येकमेव भावाभ्यासानुष्ठानमुपादेयमिति ॥ ९५० ॥ अत्र त्रिविधमप्यनुष्ठानं कथंचित् समर्थमान आह;—

**ववहारओ उ जुज्जइ तहा तहा अपुणबंधगाईसु । एत्थउ आहरणाइं जहासंखेणमेयाइं ॥ ९५१ ॥**

व्यवहारतस्तु व्यवहारनयादेशात् पुनर्युज्यते तथा तथा विषयभेदप्रकारेणापुनर्बन्धकादिषु, अपुनर्बन्धकः पापं न तीव्रभावात् करोतीत्येवंलक्षणः, आदिशब्दादपुनर्बन्धकस्यैव विशिष्टोत्तरावस्थाविशेषभाजौ मार्गाभिमुखमार्गपतितौ अविरतसम्यग्दृष्ट्यादयश्च गृह्यन्ते । अत्र तु व्यवहारादेशात्त्रिविधेऽनुष्ठाने आहरणानि ज्ञातानि यथासंख्येनानुक्रमलक्षणेन एतानि वक्ष्यमाणलक्षणानि ॥ ९५१ ॥ तत्र प्रथमोदाहरणं भावयन् गाथाष्टादशकमाह;—

**सययब्भासाहरणं आसेवियजाइ सरणहेउत्ति । आजम्मं कुरुचंदो मरिउं णरगाओ उवट्टो ॥९५२॥**
**मायापिइपडिवत्ती गिलाणभेसज्जदाणमाईहिं । तह चिइणिम्मलकरणं जाईसरणस्स हेउत्ति ॥ ९५३ ॥**
**णिवपरिवारुवलंभा सरणं भीओ कहं पुणो एत्थ । ठिइमूगत्तासेवण णाओ विज्जेहिं णिद्दोसो ॥ ९५४ ॥**
**मंतिणिवेयण जाणण धण्णो सरणाओ कोइ उव्विग्गो । भवठिइदंसणकहणं गुणकरमेयस्स तहिं जुत्तो९५५**
**भूसिय जंपाणगओ इड्डीए णीणिओ विभागण्णू । भोगम्मी जायछणे मयरुवणदरिद्दग भणीसु ॥ ९५६॥**

लाभगचेयग भोगी जाए उ छणो सुवाहितुल्लो त्ति। मरणे दुक्खमवेक्खा किमिह दरिद्दोवि परलोए १५७
रायणिवेयण दंसण तोसो पियवयण पुच्छ पसिणत्थे। णमणमणुण्णा संवेगसाहणं भावसारमिमं॥१५८॥
धम्मकरणेण भोगी लाभा इहरा उ तुच्छभोगोत्ति। रज्जफलोत्ति सुवाही तच्छणसरिसो उ एएसु॥१५९॥
मालाल्लुगप्पभोगाइणायओ दुक्खकारणमविक्खा। धम्मी दरिद्दगो इह अओप्पणहण्णोवि परलोए१६०॥
मायापिउणा भणिओ इह धम्मण्णू तुमं तहावम्हं। ठिइमूयत्तेहिं इह दुखं कुणसित्ति सो आह॥१६१॥
गंतव्वं सगईए गुरुयणसंवुड्ढिकारयं गच्छे। आसासमाइदीवगजोगम्मि ण अण्णहा जुत्तं॥ १६२ ॥
वोच्छेमि य जं उचियं इहरा उ ण जुत्तमेव वोत्तुं जे। जं इह एस कुहाडी जीहा धम्मेयरतरूणं॥१६३॥
एवं ति तेसिं वोहो धम्मपरिच्छाए पायसो णवरं। माइपिइपूयघायाणमित्थ किं जुत्तमच्चत्थं॥ १६४ ॥
पूजत्ति आहु पायं अण्णेऽणेगंतवायओ तत्तं। ववहारणिच्छएहिं दुविहा एए जओ णेया॥ १६५ ॥
ववहारओ पसिद्धा तिण्हा माणो य णिच्छएणेए। आइमगाणं पूया इयरेसिं वहोत्ति ता जुत्तं॥ १६६ ॥
चउक्केयरचिट्ठाणं अण्णे का सोहणत्ति आहेसो। अण्णयरावोहेणं उभयं भेयाओ एयस्स॥ १६७ ॥

शास्त्रार्थिनो वेदाध्येतारो ये ब्राह्मणास्तेषां किञ्चित् पुरमासीत् तत्र 'वणिजायण' त्ति केनचिद् वणिजा ब्राह्मणा भूमिं याचिताः । शुद्धभूमिग्रहे च शल्यादिदोषानुपहतभूमेरुपादाने कृते पादे शुद्धिमानीयमाने निधिश्चिरकालनिहित उद्घटितः । वणिक्कथनं वणिजा राज्ञो निवेदितम्, यथा देव! मया गृहपादशोधने क्रियमाणे निधिर्लब्ध आस्ते अग्रहो निधेरौदार्यातिरेकात् सत्यवादितया च राज्ञो वृत्तः । शिष्टे च कथिते राज्ञा मन्त्र्यादीनां, प्रज्ञापना तैः कृता, यथा न देव! नीतिरेषा निर्निमित्तमेव स्वकीयार्थपरित्याग इति ॥ ९४६ ॥ सुप्तोत्थितचिन्तनं सुप्तोत्थितेन राज्ञा चिन्तितमन्यदा यथा न मया सुष्ठु कृतं यन्निधिः सिद्धः सन्नुपेक्षित इति । ततः सर्वेषां मन्त्रिपुरोहितानां इच्छयाऽनुमत्या ग्रहणं निधेः कृतम् । ततस्तादृशि महत्यनर्थे प्रवर्त्तिते 'विग्घं'ति विघ्न इष्टकलत्रविपत्त्यादिः सद्य एव कश्चिज्जात इति । मिथः परस्परं किमिदमित्थमिति वितर्के सर्वत्र प्रवृत्ते केवली कश्चिदागतः, ततस्तेन पृष्टे सति शिष्टं, यथा—कलिरेवावतीर्णस्तद्दोषादिदमित्थं जातमिति । ततो राज्ञा निधेस्त्यागः कृतः, भागस्य निजाभाव्यरूपस्य पुनर्ग्रह इति । यदत्र वेदार्थिब्राह्मणपुराश्रयणं शास्त्रकृता कृतं तदैवं ज्ञापयति वेदविद्याविशारदब्राह्मणवासितस्थाने न काचिदनीतिः प्रवर्त्तते, तथापि कलियुगावताराच्चतुराश्रमगुरुणापि राज्ञा स्ववचनविलोपनेन पुनर्निधिग्रहणमारब्धम् । विघ्नोत्थानेन सवितर्के लोके जाते केवलिना च स्वरूपे निवेदिते स्वसत्त्वाभ्यधिकतया नीतिमागतोऽसौ राजेति ॥ ९४७ ॥

**एवमिह दुस्समेयं कलुसइ भावं जईणवि कहिंचि। तहवि पुण कज्जजाणा हवंति एएच्चिय जहेए॥९४८॥**

एवं प्रकृतराजादिवदिह भरतक्षेत्रे दुःषमा दुष्टकाललक्षणेयं प्रत्यक्षोपलक्ष्यमाणफला कलुषयति मलिनीकरोति, भावं

मनःपरिणामं यतीनामपि—लाभालाभसुखासुखादिषु तुल्यतया प्रवृत्तचित्तानां, कथंचिदनाभोगादिदोषात्, तथापि पुनः कार्यज्ञाः कार्यपरमार्थविदो भवन्ति एत एव, यथैते राजादय इति ॥ ९४८ ॥

अथैतदेव धर्मानुष्ठानं मतान्तरैराचिख्यासुराह;—

**अण्णे भणंति तिविहं समयविसयभावजोगओ णवरं। धम्मम्मि अणुट्ठाणं जहुत्तरपहाणरूवं तु ॥ ९४९ ॥**

अन्येऽपरे आचार्या भणन्ति ब्रुवते त्रिविधं त्रिप्रकारम्। प्रकारानेव दर्शयति—सततविषयभावयोगतः 'भीमो भीमसेनः' इति न्यायेन पदैकदेशेऽपि पदसमुदायोपचारात् सतताभ्यासयोगतः, विषयाभ्यासयोगतः, भावाभ्यासयोगतश्च। नवरं केवलं धर्मे विषयभूतेऽनुष्ठानं देवपूजनादिलक्षणं यथोत्तरप्रधानरूपं तु यद्यस्मादुत्तरं तदेव प्रधानमित्येवंलक्षणमेव च। तत्र सतताभ्यासः नित्यमेवोपादेयतया लोकोत्तरगुणावाप्तियोग्यताऽऽपादकमातापितृविनयादिवृत्तिः। विषयाभ्यासो विषयेऽर्हल्लक्षणे मोक्षमार्गस्वामिनि योऽभ्यासः पूजादिकरणस्य सः। भावाभ्यासः पुनर्दूरं, भवादुद्विग्नस्य सम्यग्दर्शनादीनां भावानामभ्यास इति ॥ ९४९ ॥

**एयं च ण जुत्तिखमं णिच्छयणयजोगओ जओ विसए। भावेण य परिहीणं धम्माणुट्ठाण मो किह णु ९५०**

एतच्च द्विविधमनुष्ठानं न युक्तिक्षमं नोपपत्तिसहं निश्चयनययोगतो निश्चयनयाभिप्रायेण। कुतो, यतो विषये साक्षात् सम्यग्दर्शनाद्यनाराधनारूपे मातापित्रादिविनयस्वभावे, तथा भावेन च भववैराग्यादिना पुनः परिहीणं विषयेऽपि

धर्मानुष्ठानं कथं नु? न कथंचिदित्यर्थः । परमार्थोपयोगरूपत्वाद्धर्मानुष्ठानस्य इत्येकमेव भावाभ्यासानुष्ठानमुपादेयमिति ॥ ९५० ॥ अत्र त्रिविधमप्यनुष्ठानं कथंचित् समर्थमान आह;—

ववहारओ उ जुज्जइ तहा तहा अपुणबंधगाईसु । एत्थउ आहरणाइं जहासंखेणमेयाइं ॥ ९५१ ॥

व्यवहारतस्तु व्यवहारनयादेशात् पुनर्युज्यते तथा तथा विषयभेदप्रकारेणापुनर्बन्धकादिषु, अपुनर्बन्धकः पापं न तीव्रभावात् करोतीत्येवंलक्षणः, आदिशब्दादपुनर्बन्धकस्यैव विशिष्टोत्तरावस्थाविशेषभाजौ मार्गाभिमुखमार्गपतितौ अविरतसम्यग्दृष्ट्यादयश्च गृह्यन्ते । अत्र तु व्यवहारादेशात्रिविधेऽनुष्ठाने आहरणानि ज्ञातानि यथासंख्येनानुक्रमलक्षणेन एतानि वक्ष्यमाणलक्षणानि ॥ ९५१ ॥ तत्र प्रथमोदाहरणं भावयन् गाथाष्टादशकमाह;—

सययब्भासाहरणं आसेवियजाइ सरणहेउत्ति । आजम्मं कुरुचंदो मरिउं णरगाओ उवट्टो ॥९५२॥
मायापिइपडिवत्ती गिलाणभेसज्जदाणमाईहिं । तह चिइणिम्मलकरणं जाईसरणस्स हेउत्ति ॥ ९५३ ॥
णिवपरिवारुवलंभा सरणं भीओ कहं पुणो एत्थ । ठिइमूगत्तासेवण णाओ विज्जेहिं णिद्दोसो ॥ ९५४ ॥
मंतिणिवेयण जाणण धण्णो सरणाओ कोइ उविग्गो । भवठिइदंसणकहणं गुणकरमेयस्स तहिं जुत्तो ९५५
भूसिय जंपाणगओ इड्ढीए णीणिओ विभागण्णू । भोगम्मी जायछणे मयरुवणदरिद्दग भणीसु ॥ ९५६ ॥

लाभगवेयग भोगी जाए उ छणो सुवाहितुल्लो त्ति। मरणे दुक्खमवेक्खा किमिह दरिद्दोवि परलोए १५७

रायणिवेयण दंसण तोसो पियवयण पुच्छ पसिणत्थे। णमणमणुण्णा संवेगसाहणं भावसारमिमं॥१५८॥

धम्मकरणेण भोगी लाभा इहरा उ तुच्छभोगोत्ति। रज्जफलोत्ति सुवाही तच्छणसरिसो उ एएसु॥१५९॥

मालाल्लुगप्पभोगाइणायओ दुक्खकारणमविक्खा। धम्मी दरिद्दगो इह अओण्णहण्णोवि परलोए१६०॥

मायापिउणा भणिओ इह धम्मण्णू तुमं तहावम्हं। ठिइमूयत्तेहिं इह दुखं कुणसित्ति सो आह॥१६१॥

गंतव्वं सगईए गुरुयणसंवुद्धिकारयं गच्छे। आसासमाइदीवगजोगम्मि ण अण्णहा जुत्तं ॥ १६२ ॥

वोल्लेमि य जं उचियं इहरा उ ण जुत्तमेव वोत्तुं जे। जं इह एस कुहाडी जीहा धम्मेयरतरूणं॥१६३॥

एवं ति तेसिं वोहो धम्मपरिच्छाए पायसो णवरं। माइपिइपूयघायाणमित्थ किं जुत्तमच्चत्थं ॥ १६४ ॥

पूजत्ति आहु पायं अण्णेऽणेगंतवायओ तत्तं। ववहारणिच्छएहिं दुविहा एए जओ णेया ॥ १६५ ॥

ववहारओ पसिद्धा तिण्हा माणो य णिच्छएणेए। आइमगाणं पूया इयरेसिं वहोत्ति ता जुत्तं॥१६६॥

वज्झेयरचिट्ठाणं अण्णे का सोहणत्ति आहेसो। अण्णयरावोहेणं उभयं भेयाओ एयस्स ॥ १६७ ॥

सतताभ्या-
साहरणम्—

मत आह्लादमुपनयन्नपि तन्मरणादौ सन्तापहेतुरेव स्यात् । यच्चैतद् मरणदुःखं रोदनक्रियाभिव्यंग्यं तदपेक्षेति अपेक्षा-
निमित्तमित्यर्थः, स्वजनत्वेन ह्यपेक्षितो जनोऽबन्धुरपि म्रियमाणो दुःखमुत्पादयति, न तु बन्धुरपि परतया संकल्पितः ।
कुतोऽप्यपराधादिति । तथा, दरिद्रविषये किंचिदुच्यते । किं भवद्भिरिह दरिद्रो विवक्षितः, अथ परलोके दरिद्रः, इह-
परलोकदरिद्रयोर्दूरं विसदृशत्वात् ॥ ९५७ ॥ यदा तेनैवं चतुर्णामर्थानां पृष्टानामुत्तराणि विहितानि तदा लोकेन राज-
निवेदनं कृतम्, यथा—अयमित्थमित्थं च भाषितः । ततो राज्ञा स्वसमीपमानाय्य तस्य दर्शनमकारि तोषो हर्षश्च
वृत्तः । ततो राज्ञा प्रियवचनप्रयोगपूर्वकं 'पुच्छ पसिणत्थे' इति प्राक्प्रदर्शितप्रश्नार्थस्य पृच्छा कृता । तेन च तदर्थे निवे-
दिते नमनं परिणामो धर्मगोचरो जनकस्य वृत्तः । ततोऽनुज्ञा—अस्माकमनुमतं यत् त्वया निवेद्यते इत्येवंलक्षणाऽनु-
मतिः पितुः सम्बन्धिनी यदा लब्धा, तदा संवेगसाधनं संवेगसारेण भूत्वा कथनं भावसारमिदं कृतम् ॥ ९५८ ॥ एतदेव
दर्शयति—धर्मकरणेन शुद्धसुकृतापादनेन सर्वतो भोगी सर्वतोमुखप्रवृत्ताद्धनधान्यादेर्लाभादिहभवे परभवे च भोग-
वान् स्यात् । इतरथातु धर्मस्याकरणे पुनस्तुच्छभोगी, धर्मकरणमन्तरेण निरनुबन्धत्वेन भोगस्य तुच्छफलत्वात् । इतिः
प्राग्वत् । तथा, राज्यफलस्तु व्याधिरिति राजस्येव फलमुपचाररूपं यस्य स तथा, तुः प्राग्वत् । सुव्याधिर्गण्डुव्रणकुष्ठा-
दिदारुणरोगः । य एव ह्युपचारोऽभिषेकपट्टबन्धवालव्यजनादौ राज्ये प्रवर्तते, स एव सुव्याधावपीति न कश्चिद् विशेषो
व्याधिराज्ययोरिति कथं मतिमान् राज्याभिलाषी स्यात्? तत्क्षणसदृशस्तु व्याधिनिर्विशेषराज्योत्सवसदृशः पुनरेतेषु
प्रत्यक्षतो दृश्यमानेषु पुत्रादिषु 'य उत्सवः' इति वाक्यशेषः । यथा राज्योत्सवो न परिणामसुन्दरः "त्रय एते नरकं

यान्ति राजा चित्रकरः कविः ॥" इत्यादि वचनात्, तथैतेऽपि पुत्रजन्माद्युत्सवाः प्रमोदहेतुत्वाद्भंगावसानत्वाच्च न परिणामसुन्दराः ॥ १५९ ॥ मालालुकाल्पभोगादिज्ञाततो मालायाः पुष्पस्रजोऽल्पो भोगो बहुमूल्याया अपि, आलुकायाश्च वार्घटिकाया अल्पमूल्याया अपि बहुर्भोगः संभावितः । अतो मालालुकाल्पभोगाद्येव ज्ञातं दृष्टान्तस्तस्माद् दुःखकारणं वर्तते । अपेक्षा आलुकायाः स्थिरत्वसंभावनारूपा सतीति । यतः पठ्यते—"अनित्यताकृतबुद्धिर्म्लानमाल्यो न शोचते । नित्यताकृतबुद्धिस्तु भग्नभांडोऽपि शोचते ॥ १ ॥" तथा, धर्मी धर्मवान् दरिद्रकः अल्पारम्भपरिग्रहतया निरारम्भपरिग्रहतया वा दरिद्रः स्यादिहलोके, स एवातो दरिद्रादन्यथा ईश्वरः परलोके स्यात्, प्राग्भवोपात्तपुण्यसंभारत्वात्तस्य । तथान्योऽपीह लोक ईश्वरः सोऽपि परलोकेऽन्यथा दरिद्र इत्यर्थः । आरंभपरिग्रहपरायणत्वेन प्राग्भवेऽनुपार्जितपुण्यत्वात् ॥ १६० ॥ एवं सर्वप्रश्नोत्तरविधायी स मातापितृभ्यां भणित इत्येवं वैराग्यभावनया धर्मज्ञो वर्त्तसे त्वम् । तथापि धर्मज्ञत्वेऽपि सत्यस्माकं स्थितिमूकत्वाभ्यामुक्तलक्षणाभ्यामिहावसरे दुःखं मनोऽसमाधानलक्षणं करोषि । इत्येवमुक्तः स राजसूनुराह—अद्यापि गन्तव्यस्थानाभावान्न मया गतिः कृता, न पुनः कस्याश्चिदशक्तेरिति ॥ १६१ ॥ गन्तव्यस्थानमेव दर्शयति—गन्तव्यं मया स्वगत्या प्रव्रज्याप्रतिपत्तीरूपया गुरुजनस्य मातापितृलक्षणस्य धर्माचार्यस्य च संगतशुद्धिहेतुर्यथा भवत्येवं गच्छे गुरुपरिवाररूपे । कीदृश इत्याह—इह दीवगशब्दस्य संस्कारद्वयसहनाद् आश्वासद्वीपकयोगिनि, आदिशब्दात् प्रकाशदीपकयोगिनि च नान्यादृशे गच्छे युक्तं गमनमिति । इहाश्वासद्वीपो द्विविधः—द्रव्यतो भावतश्च । तत्र द्रव्यतो जलधिजलमध्ये तथाविधोच्चभूभागलक्षणः । सोऽपि स्पन्दनोऽस्पन्दनश्चेति द्विविध एव । तत्र

अब्भिंतरा ण बज्झं वभिचरइ णिओगओ ण बज्झेवं। अब्भिंतरंति अण्णे एगच्चिय उभयरूवे सा॥९६८॥
एवं च मग्गलंभो पवज्जाराहणा य सुपसत्था। दुग्गइदुवारठयणी सुगइसिवपसाहिया चेव ॥ ९६९ ॥

सतताभ्यासाहरणं—आसेवितजातिस्मरणभवात् प्राक्तृतीयभवे आसेविता वक्ष्यमाणा जातिस्मरणहेतवो येनेति समासः। इति प्रागवत्। कथमित्याह—आजन्म यावज्जीवं कुरुचन्द्रो नाम राजा गजपुरस्वामी मृत्वा 'नरके उत्पन्नः' इति वाक्यशेषो दृश्यः। ततो नरकादुद्वृत्तः सन्निति ॥ ९५२ ॥ जातिस्मरणहेतूनेव दर्शयति—मातापितृप्रतिपत्तिः, सा चैवं द्रष्टव्या;—"पूजनं चास्य विज्ञेयं त्रिसन्ध्यं गमनक्रिया। तस्यानवसरेऽप्युच्चैश्चेतस्यारोपितस्य तु ॥ १ ॥ इत्यादि। तथा, ग्लानस्य रोगिणः साधुश्रावकादेः भैषज्यदानादीनि भैषज्यदानमौषधप्रदानमादिशब्दादंगप्रतिजागरणादीनि शेषाणि समाधिकारणानि गृह्यन्ते। तथा, चितिनिर्मलकरणं देवताप्रतिमानैर्मल्यविधानं जातिस्मरणस्य हेतव इत्येते। अन्यत्र पुनरेवमुपलभ्यन्ते—"ब्रह्मचर्येण तपसा सद्वेदाध्ययनेन च। विद्यामन्त्रविशेषेण सत्तीर्थासेवनेन च ॥ १ ॥ पित्रोः सम्यगुपस्थानाद् ग्लानभैषज्यदानतः। देवादिशोधनाच्चैव भवेज्जातिस्मरो नरः ॥ ९५३ ॥ स च नरकादुद्वृत्तः सन् साकेतपुरे महामहीपतेर्महेन्द्रनाम्नः पत्न्या महिमानामिकायाः कुक्षौ समुद्रदेवाभिधानतया पुत्र उत्पन्नः। तत्र च यौवनस्थस्य तस्य नृपपरिवारोपलम्भाद् मंत्रिप्रभृतेर्नृपपरिवारस्य सामान्यतः प्राग्भवदृष्टस्योपलम्भादवलोकनात् स्मरणं प्राग्भवस्य जातम्। ततो भीतस्त्रस्तः संश्चिन्तयितुमारब्धः। कथं पुनरत्र नरके गन्तव्यमिति विचिन्त्य स्थितिमूकत्वासेवनं स्थितेर-

नळस्य मूकत्वस्य च वाग्निरोधरूपस्यैव निषेवणं कृतम् । ततो जनकेन व्याधिनिग्रहार्थं चिकित्सोपक्रमे कृते ज्ञातो वैद्ये-
र्यथा निर्दोषो वातादिविकारशून्य एष इति ॥ ९५४ ॥ मन्त्रिनिवेदना राज्ञा कृता—यथाऽयं निर्दोषोऽपि किमित्येवम-
वतिष्ठते? इति । ज्ञातं च मन्त्रिणा धन्यः स्मरणाज्जातिस्मरणत्वलक्षणात् कश्चिदेष जीवो भवादुद्विग्नो वर्त्तत इति । ततः
'भवठिइदंसणकहणत्ति' भवस्थितेर्ऽध्यनुभवरूपाया इतरस्याश्च दर्शनमस्य योग्यं वर्त्तत इति कथनं निवेदनं मन्त्रिणा
राज्ञे कृतम् । तत्त्वज्ञानं गुणसम्पादकं एतस्य मत्सुतस्य भविष्यतीति परिभाव्य राज्ञा तत्र भवस्थितिदर्शने युक्तो नियुक्तः
सः ॥ ९५५ ॥ कथमित्याह—भूषितोऽलंकृतः सन् याप्ययानगतः सुखासनरूढः ऋद्ध्या विशिष्टपरिवारलक्षणया निःसा-
रितः प्रासादात् । कीदृशः सन्नित्याह—विभागज्ञः हेयोपादेयपदार्थविशेषकुशलः । तत्र च निर्गते भोगिनि भोगभाजि
कचित् पुरुषे दृष्टे, तथा जातक्षणे नवप्रसूतपुत्रोत्सवलक्षणे, तथा 'मयरुयणदरिद्दग भणीसु' इति मृतरोदने दरिद्रके च
भिक्षाचरादौ दृष्टेऽभाणिषुर्भणितवन्तस्ते पार्श्ववर्त्तिनो जनाः, यथा—किमिह भोगित्वादौ तत्त्वमिति ॥९५६॥ स प्राह—
लाभकचेतसो वृद्ध्यादिप्रयुक्तधनधान्याद्युपचयरूपस्य लाभकस्य चेतसः समयपरिभाषया दाता परिभुज्यमानस्त्र्यादिलो-
कोपभोगी भवति । मूलद्रव्यव्ययेन पुनर्यो भोगी स परमार्थतो भोग्येव (न भवति), निरनुबन्धत्वात्तद्भोगस्येति तावत्
लोके नीतिः । आत्माभिप्रायेण तु भोगिनं 'धम्मकरणेण भोगी' इत्यादिना कथयिष्यति । जाते तु पुत्रादौ क्षणो वर्द्धा-
पनकरूपः सुव्याधितुल्यः सुष्ठु—अतिशयेन व्याधिना कण्डूदर्द्रुप्रभृतिना सदृशः; यथा हि सरोगः कण्डूयमानो मूले
किंचित् सुखकारणतया प्रतिभासमानोऽपि परिणामे महान्तमुपतापं दर्शयति, एवं पुत्रजन्मादौ क्षणो विधीयमानः प्रथ-

मत आह्लादमुपनयन्नपि तन्मरणादौ सन्तापहेतुरेव स्यात् । यच्चैतद् मरणदुःखं रोदनक्रियाभिव्यंग्यं तदपेक्षेति अपेक्षा-निमित्तमित्यर्थः, स्वजनत्वेन ह्यपेक्षितो जनोऽबन्धुरपि म्रियमाणो दुःखमुत्पादयति, न तु बन्धुरपि परतया संकल्पितः । कुतोऽप्यपराधादिति । तथा, दरिद्रविषये किंचिदुच्यते । किं भवद्भिरिह दरिद्रो विवक्षितः, अथ परलोके दरिद्रः, इह-परलोकदरिद्रयोर्दूरं विसदृशत्वात् ॥ ९५७ ॥ यदा तेनैवं चतुर्णामर्थानां पृष्टानामुत्तराणि विहितानि तदा लोकेन राज-निवेदनं कृतम्, यथा—अयमित्थमित्थं च भाषितः । ततो राज्ञा स्वसमीपमानाय्य तस्य दर्शनमकारि तोषो हर्षश्च वृत्तः । ततो राज्ञा प्रियवचनप्रयोगपूर्वकं 'पुच्छ पसिणत्थे' इति प्राक्प्रदर्शितप्रश्नार्थस्य पृच्छा कृता । तेन च तदर्थे निवे-दिते नमनं परिणामो धर्मगोचरो जनकस्य वृत्तः । ततोऽनुज्ञा—अस्माकमनुमतं यत् त्वया निवेद्यते इत्येवंलक्षणाऽनु-मतिः पितुः सम्बन्धिनी यदा लब्धा, तदा संवेगसाधनं संवेगसारेण भूत्वा कथनं भावसारमिदं कृतम् ॥ ९५८ ॥ एतदेव दर्शयति—धर्मकरणेन शुद्धसुकृतापादनेन सर्वतो भोगी सर्वतोमुखप्रवृत्ताद्धनधान्यादेर्लाभादिहभवे परभवे च भोग-वान् स्यात् । इतरथातु धर्मस्याकरणे पुनस्तुच्छभोगी, धर्मकरणमन्तरेण निरनुबन्धत्वेन भोगस्य तुच्छफलत्वात् । इतिः प्राग्वत् । तथा, राज्यफलस्तु व्याधिरिति राजस्येव फलमुपचाररूपं यस्य स तथा, तुः प्राग्वत् । सुव्याधिर्गंडुव्रणकुष्ठा-दिदारुणरोगः । य एव ह्युपचारोऽभिषेकपट्टबन्धवालव्यजनादौ राज्ये प्रवर्तते, स एव सुव्याधावपीति न कश्चिद् विशेषो व्याधिराज्ययोरिति कथं मतिमान् राज्याभिलाषी स्यात्? तत्क्षणसदृशस्तु व्याधिनिर्विशेषराज्योत्सवसदृशः पुनरेतेषु प्रत्यक्षतो दृश्यमानेषु पुत्रादिषु 'य उत्सवः' इति वाक्यशेषः । यथा राज्योत्सवो न परिणामसुन्दरः "त्रय एते नरके

यान्ति राजा चित्रकरः कविः ॥" इत्यादि वचनात्, तथैतेऽपि पुत्रजन्माद्युत्सवाः प्रमोदहेतुत्वाद्भंगावसानत्वाच्च न परिणाममुन्दराः ॥ ९५९ ॥ मालालुकाल्पभोगादिज्ञाततो मालायाः पुष्पस्रजोऽल्पो भोगो बहुमूल्याया अपि, आलुकायाश्च वार्घटिकाया अल्पमूल्याया अपि बहुर्भोगः संभावितः । अतो मालालुकाल्पभोगाद्येव ज्ञातं दृष्टान्तस्तस्माद् दुःखकारणं वर्तते । अपेक्षा आलुकायाः स्थिरत्वसंभावनारूपा सतीति । यतः पठ्यते—"अनित्यताकृतबुद्धिर्म्लानमाल्यो न शोचते । नित्यताकृतबुद्धिस्तु भग्नभांडोऽपि शोचते ॥ १ ॥" तथा, धर्मी धर्मवान् दरिद्रकः अल्पारम्भपरिग्रहतया निरारम्भपरिग्रहतया वा दरिद्रः स्यादिहलोके, स एवातो दरिद्रादन्यथा ईश्वरः परलोके स्यात्, प्राग्भवोपात्तपुण्यसंभारत्वात्तस्य । तथान्योऽपीह लोक ईश्वरः सोऽपि परलोकेऽन्यथा दरिद्र इत्यर्थः । आरंभपरिग्रहपरायणत्वेन प्राग्भवेऽनुपार्जितपुण्यत्वात् ॥ ९६० ॥ एवं सर्वप्रश्नोत्तरविधायी स मातापितृभ्यां भणित इत्येवं वैराग्यभावनया धर्मज्ञो वर्त्तसे त्वम् । तथापि धर्मज्ञत्वेऽपि सत्यस्माकं स्थितिमूकत्वाभ्यामुक्तलक्षणाभ्यामिहावसरे दुःखं मनोऽसमाधानलक्षणं करोषि । इत्येवमुक्तः स राजसूनुराह—अद्यापि गन्तव्यस्थानाभावान्न मया गतिः कृता, न पुनः कस्याश्चिदशक्तेरिति ॥ ९६१ ॥ गन्तव्यस्थानमेव दर्शयति—गन्तव्यं मया स्वगत्या प्रव्रज्याप्रतिपत्तीरूपया गुरुजनस्य मातापितृलक्षणस्य धर्माचार्यस्य च संगतवृद्धिहेतुर्यथा भवत्येवं गच्छे गुरुपरिवाररूपे । कीदृश इत्याह—इह दीवगशब्दस्य संस्कारद्वयसहनाद् आश्वासद्वीपप्रयोगिनि, आदिशब्दात् प्रकाशदीपकयोगिनि च नान्यादृशे गच्छे युक्तं गमनमिति । इहाश्वासद्वीपोद्विविधः—द्रव्यतो भावतश्च । तत्र द्रव्यतो जलधिजलमध्ये तथाविधोच्चभूभागलक्षणः । सोऽपि स्पन्दनोऽस्पन्दनश्चेति द्विविध एव । तत्र

